# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]




६० वर्षे
१-२ अङ्कौ

ज्येष्ठ-भाद्रपद-पूर्णिमे
जून-सितम्बर, २००५ ई.

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]


सम्पादकौ

**डॉ. राजारामशुक्लः**
निदेशकः, अनुसन्धानसंस्थानस्य

**डॉ. हरिश्चन्द्रमणित्रिपाठी**
निदेशकः, प्रकाशनसंस्थानस्य






६० वर्षे
१-२ अङ्कौ

वार्षिकं मूल्यम् - १०० रूप्यकाणि
जून-सितम्बर, २००५ ई.

## परामर्शदातृसम्पादकमण्डलम्





*प्रकाशकः —*

**डॉ. हरिश्चन्द्रमणित्रिपाठी**
निदेशकः, प्रकाशनसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी - २२१००२

*मुद्रकः —*

**श्रीजी प्रिण्टर्स**
नाटी इमली
वाराणसी - २२१००२

*प्राप्तिस्थानम्—*

**विक्रय-विभागः**, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी-२२१००२

# सम्पादकीयम्

भूमेर्यस्मिन् कस्मिन्नपि भागे मानवैः प्रयुक्तायां साधारणभाषायां यद्यपि पदानां संख्या नातीव न्यूनाऽस्ति, कालक्रमेण भाषान्तरेभ्यः पदानां सङ्ग्रहणात् तत्रोत्तरोत्तरं वृद्धिरपि जायमानाऽस्ति, तथापि तानि पदानि बोध्यपदार्थतुलनायां न्यूनान्येव सन्ति, यतो हि ये भावाः सम्प्रत्यया वा तैः पदैर्बोधनीयास्ते अनन्ताः सन्ति, तेषां संख्यायाञ्च उत्तरोत्तरं वृद्धिरपि सम्भाव्यते। परप्रतिपत्तिर्हि शब्दप्रयोगस्य मुख्यमुद्देश्यम्। श्रोताऽपि वक्तुस्तात्पर्यमवबुद्ध्य शब्दमाध्यमेनैवार्थमवगच्छति। वक्तुरिच्छायां स्वातन्त्र्यात् तादृशेच्छाविषया अनन्ता भवन्ति। तत्तुलनायां प्रकृतिप्रत्ययादिमर्यादानिबद्धानि पदानि परिमितानि सन्ति। परिमितैरेव पदैः सर्वेऽप्यर्था बोधनीया भवन्ति। अत एव शब्दानां विभिन्ना वृत्तयः स्वीकृताः सन्ति। एक एव शब्दः कदाचिदेकया वृत्त्या एकमर्थं वृत्त्यन्तरेण चान्यमर्थं बोधयति। क्वचिदेकस्यैव शब्दस्य एकजातीया एव नाना वृत्तयः स्वीक्रियन्ते। क्वचित्तु एकयैव वृत्त्या सजातीयानिव विजातीयानपि नानार्थान् बोधयितुं क्षमते शब्दः। अत एव शब्दानां परिमितत्वेऽपि वक्ता श्रोता वा सामान्यबोधधरातले अर्थसम्प्रेषणग्रहणादौ काठिन्यं नानुभवति।

अस्येदमपि कारणं यत् तयोर्दैनन्दिनव्यवहारः प्रायेण पूर्वानुभूतस्थितिमालम्ब्यैव भवति। सा स्थितिः प्रायशस्तयोः परिचिता एव भवति यां परितस्तौ व्यवहरतः। अस्माकं परम्परागतशास्त्रीयमर्यादानुसारं तादृशः कोऽपि प्रत्ययो नास्ति, यः शब्दानुगमादृते भवेत्। ज्ञानमात्रं शब्देनानुविद्धमिव भासते। शक्यसम्बन्धो लक्षणेति वदन्तो नैयायिकास्तु लाक्षणिकस्यापि पदस्य यस्मिन् कस्मिंश्चिदर्थे शक्तत्वमस्त्येवेति स्वीकुर्वन्ति। सर्वोऽप्यर्थो यस्य कस्याप्यर्थस्य वाच्य एव भवति। तन्मते वाच्यत्वं केवलान्वयिधर्मः। अत एव शब्दाः प्रायेणार्थान् न व्यभिचरन्ति, किन्तु एषा अव्यभिचारिनिश्चितता सामान्यबोधस्तर एव सम्भवति। यदा शास्त्रीयविचाराणां क्रम आगच्छति, तदा अर्थसम्प्रत्यायने व्यभिचारस्य सम्भावना भवत्येव। वक्त्रा प्रयुक्तैः शब्दैः कदाचित् तेऽर्था न बोध्यन्ते, येषां तत्र तदानीमावश्यकता भवति। अथवा तैः शब्दैर्बोध्यमाना अर्था अव्यभिचारिणो न भवन्ति। यद्यप्यव्यभिचार्येवार्थस्तच्छब्दप्रयोक्तुस्तात्पर्यविषयो भवति, तथापि यथाश्रुतः स

तमर्थं बोधयितुं नालं भवति। इयं समस्या भारतीयवाङ्मये तदाप्रभृति प्रादुरभूत्, यदाप्रभृति कथायां जल्पवितण्डयोः प्रसरोऽभवत्। तत्र हि विचारार्थं कश्चन पूर्वपक्षी स्थाप्यते। तेन हि वादिनोक्ते व्यभिचारा उपस्थाप्यन्ते। तदर्थं व्याख्याकारैस्तदर्थवर्णनं क्रियते, तदर्थञ्च तेषु शब्देषु अपेक्षिताः परिष्काराः क्रियन्ते। शब्दार्थयोः कश्चन नियतः सम्बन्धो भवति। तद्धानेऽर्था व्यभिचरन्ति। तादृशव्यभिचारनिवृत्तिः परिष्काराणां मुख्यमुद्देश्यम्। भारतीयवाङ्मये नैयायिकानां विशिष्य नव्यनैयायिकानामस्मिन् प्रसङ्गे विशिष्टं योगदानमस्ति। तैर्हि तादृश्याः परिष्कारपद्धतेराविष्कारो विस्तारश्च कृतो यदाश्रयणेनार्थस्वरूपाणां सर्वात्मना निर्दुष्टता सम्पादयितुं शक्यते। विचारे जल्पवितण्डयोराश्रयणेनायमेको लाभोऽवश्यं संवृत्तो यद् यथा यथा परिष्कारे विस्तारः क्रियते, तथा तथा तत्र व्यभिचारा अन्विष्यन्ते आपाद्यन्ते च, तदर्थं पुनः परिष्कारे विस्तारः कर्तव्यो भवति।

अनेन विस्तारक्रमेण अर्थस्वरूपाणां निष्कृष्टं निर्दुष्टञ्च स्वरूपं पुरस्तादागच्छति। अस्मिन् विस्तारक्रमे अर्थस्वरूपे अनेकेषां पदार्थानां सन्निवेशो भवति, येन तस्य यदा तदाऽनुगतत्वं व्याहतं भवति। वस्तुस्वरूपेण तत्सजातीयसकलवस्तुसाधारण्यायानुगतेन भवितव्यम्। अत एव लक्ष्यमात्रसाधारणं लक्ष्यतावच्छेदकसमनियतं वैव लक्षणं क्रियते। अन्यथा तत्तद्व्यक्तित्वादिकमेव तत्तद्वस्तुनः स्वरूपं स्यात्। तथात्वे तेषामनुगतव्यवहारनिर्वाहकत्वं न स्यात्। व्यावृत्तिर्व्यवहारश्च लक्षणस्य प्रयोजने भवतः। तत्तद्व्यक्तित्वादिकं हि स्यान्नाम वस्तुनस्तदितरव्यावर्तकं, किन्तु व्यवहारनिर्वाहकत्वं तस्य न सम्भवति। यतो हि व्यवहारपदेनात्र अनुगतव्यवहारो विवक्षितः। लक्ष्यैकचक्षुष्कैर्हि परमकारुणिकैर्महर्षिभिर्योग-समाधिना सर्वाणि लक्ष्याणि साक्षात्कृत्य तावदनुगतं किमपि वस्तुस्वरूपं (गवां सास्नादिमत्त्वमित्यादि) प्रकाशितं, तदेव च लक्षणैकचक्षुष्कैरस्माभिर्लक्षणमिति नाम्ना ज्ञायते। तदाधारेणैवास्माभिर्लक्ष्याणां परिचयः प्राप्यते।

किन्तु तादृशं किमपि वस्तुस्वरूपं वस्तुतः स्थिरीकर्तुं शक्यते, यत्र कस्मिंश्चिदपि काले कस्यामपि वाऽवस्थायां व्यभिचारो न स्यात्? किं कालक्रमेण वस्तुस्वरूपेषु परिवर्तनं न सम्भाव्यते? किं गच्छता कालेन लक्ष्यकोटौ तादृशा अपि व्यक्तयः प्रवेष्टुं नार्हन्ति, यासु पूर्वनिर्धारितं स्वंरूपं न व्याप्नुयात्? अद्यत्वे योगिनो न सन्ति। तर्हीदानीं नूतनतया आविष्कृतानां

प्रादुर्भूतानामविचारितचराणां वा पदार्थानां लक्षणं करणीयं चेत्, कस्तत्र विधिः समाश्रयणीयः। द्वित्रान् व्यक्तिविशेषान् साक्षात्कृत्य तदनुगतं किमपि स्वरूपं तल्लक्षणतया कल्प्यते चेत्, तत् सजातीयसर्वानुगतं स्यात्, न स्याच्च विजातीयाननुगतमिति कथङ्कारं निश्चप्रचं वक्तुं शक्येत?

इमे प्रश्नास्तत्त्वबुभुत्सुभिरवश्यमनुशीलनीयाः। गतपर्यायेऽप्येतादृशाः केचन प्रश्ना विचारार्थं भवत्पुरस्तादानीता आसन्। न हि वयं सम्प्रदायसिद्धं विरुणद्ध्मः, किन्तु तत्र सम्भावितां विप्रतिपत्तिमुद्भावयन्तः स्मः। विप्रतिपत्तिर्विचारार्थं प्रेरयति चिन्तकान्। नैकाभिर्दृग्भिः पुनः पुनरनुशीलितो विचारो गतिमान् भवति। प्राञ्चोऽपि तथैवाकुर्वन्। अद्यास्त्यावश्यकता पुनरनुसन्धानस्य। **'सारस्वती सुषमा'** तदर्थं सुदृढो मञ्चः। तत्र नूतनैर्नूतनदृष्ट्या समालोचितैर्विचारैः (वादपुष्टैर्न तु विवादजुष्टैः) समध्युषितान् निबन्धान् भवद्भ्योऽनुसन्धानशीलेभ्यः सम्प्रार्थ्य सारस्वत्याः सुषमाया नूतनमिदमङ्कयुगलं तत्रभवतां करकमलेषूपायनीकुर्वन् महान्तमानन्दमनुभवामि।

**वाराणस्याम्**
माघपूर्णिमायाम्,
२०६३ तमे वैक्रमाब्दे

**राजारामशुक्लः**
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

# विषयानुक्रमणी



●

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

| ६० वर्षे | ज्येष्ठ-भाद्रपद-पूर्णिमे, वि.सं. २०६२ | १-२ अङ्कौ |
|---|---|---|


# सूत्रवार्तिकभाष्याणां शैली


**डॉ. भीमसिंहो वेदालङ्कारः**

आचार्यः, संस्कृत-विभागे

कुरुक्षेत्रविश्वविद्यालयस्य

कुरुक्षेत्रम्




संस्कृतवाङ्मये सूत्रवार्तिकभाष्याणां विरचनं बहुतिथात् कालान्नैकविधासु बहुत्र प्रवर्तितं दृश्यते। तद्यथा—दर्शनशास्त्रे, व्याकरणशास्त्रे चेत्यादि। प्रकृतं विवेचनं व्याकरणनये सूत्रवार्तिकभाष्याणां व्याख्यानशैलीमनुसृत्य विधीयते। पाणिनीयं व्याकरणं '**त्रिमुनिव्याकरणमिति**' निगद्यते[१]। पाणिनिः, कात्यायनः, पतञ्जलिश्चेति त्रयो मुनयोऽस्य व्याकरणस्य वंश्याः प्रवर्तकाः समुल्लसन्ति। तत्र संस्कृतभाषाया व्याकरणं प्रणयन् आचार्यः पाणिनिर्नाम मुनिः सूत्ररूपेण तद् रचयामास। अष्टाध्यायीसूत्रपाठः पाणिनेराचार्यस्य मुख्यः प्रसिद्धो ग्रन्थः। अष्टाध्यायीसूत्राणां निर्माणादसौ '**सूत्रकारः**' इत्युच्यते[२]। एतेनैव मुनिना धातुपाठः, गणपाठः, उणादिपाठः, लिङ्गानुशासनम्, पाणिनीयशिक्षा चेत्यष्टाध्यायीपरिशिष्टा ग्रन्था अप्युपदिष्टाः प्राणायिषत[३]। अष्टाध्याय्यामष्टावध्यायाः सन्ति। प्रत्यध्यायं

---

१. काशिका (का.) (न्यासपदमञ्जरीसहिता), कालिकाप्रसादशुक्लसम्पादिता, प्राच्यभारती-प्रकाशनवाराणसीतः प्रकाशिता, १९६५, भा. २, सू. २.१.१९, पृ. ३६ 'त्रिमुनि व्याकरणम्'।

२. महाभाष्यम् (महा.) के.वी. अभ्यङ्करसम्पादितम्, भण्डारकर ओरियण्टल रिसर्च इंस्टीच्यूट-पूनातः प्रकाशितम्, १९६२, भा. १, सू. २.२.११, पृ. ४१४ 'पाणिनेः सूत्रकारस्य'।

३. तुलनीयम्—प्रौढमनोरमा, सीतारामशास्त्रिसम्पादिता, काशीहिन्दूविश्वविद्यालयवाराणसीतः प्रकाशिता, १९६४, भा. १, सू. १.३.३, पृ. २३—
'धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम्। आगमप्रत्ययादेशा उपदेशाः प्रकीर्तिताः'॥

चत्वारः पादाः समुल्लसन्ति। एवं द्वात्रिंशत्पादात्मकान्यष्टाध्यायीसूत्राणि सम्भवन्ति। तानि च चतुःसहस्त्रसंख्यामन्वियन्ति। अष्टाध्यायीसूत्रेषु धातूनां गणानामुणादि-सूत्राणाञ्च निर्देशात् तेषां पूर्वं प्रणयनं तेनैव मुनिना विहितमिति साधीयो विज्ञायते।

किं खल्विदं **सूत्रं** नामेत्याकाङ्क्षायामुच्यते—

'अल्पाक्षरमसन्दिग्धं सारवद् विश्वतोमुखम्।
अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः'[१]।।इति।

अपि च—

'लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च।
सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः'[२]।।इति।

अयमाशयो यत् शरीराकाराभिप्रायेण लघु सदपि अर्थस्य सूक्ष्मताया व्यापकतायाश्च दृष्ट्या बह्वर्थबोधकत्वं सूत्रत्वं बोभवीति। सूत्राणाञ्च षड्विधत्वं पाणिनिनिर्मितायामष्टाध्याय्यां प्रत्यक्षमनुभूयते। तद्यथा—

'संज्ञा च परिभाषा च विधिर्नियम एव च।
अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम्'[३]।।

इत्यभियुक्तोक्तेः सूत्रकारः पाणिनिः स्वकीयसूत्रेष्विमामुक्तिं यथावद् घाटयामास। प्रत्येकस्मिन् शास्त्रेऽपेक्षितं लाघवमधिगन्तुं कासाञ्चिच्छाब्दीनामार्थीनां कृत्रिमाणामकृत्रिमाणाञ्च पारिभाषिकसंज्ञानां निर्माणमावश्यकं भवति। यतो हि शब्देन संज्ञाकरणं व्यवहारार्थं लोके[४]। अर्थाच्छब्दव्यवहारो लघुस्ततोऽपि लघीयो नाम। संज्ञा च नाम यतो न लघीयः, लघ्वर्थं हि संज्ञाकरणं भवति[५]। अत्र कृत्रिमाः संज्ञा अनर्थकाः सत्य आकारदृष्ट्या लघ्व्यः सन्ति, अकृत्रिमाश्च संज्ञा अन्वर्थाः सत्य

---

१. विष्णुधर्मोत्तरपुराणम्, ३.५.१, वायुपुराणम्, ५९.१४२, काव्यमीमांसा (का.मी.), गङ्गासागररायसम्पादिता, चौखम्बाविद्याभवनवाराणसीतः प्रकाशिता, १९८२, द्वितीयः अध्यायः, पृ. १०।

२. भामती-टीका (ब्रह्मसूत्रम्), १.१.१।

३. तुलनीयम्—
'अतिदेशोऽनुवादश्च विभाषा च निपातनम्। एतच्चतुष्टयं ज्ञात्वा दशधा सूत्रमुच्यते'।।

४. निरुक्तम्, कपिलदेवशास्त्रिसम्पादितम्, साहित्यभण्डार-मेरठतः प्रकाशितम्, १९८६, १.१।

५. महा.भा. १. सू. १.१.२७, पृ. ८१।

आकारेण महत्यो दृश्यन्ते। 'सति तात्पर्ये सर्वे सर्वार्थवाचका'[१] भवन्ति। अतः सर्वार्थाभिधानयोग्यशब्दस्य शक्तिनियमनमात्रं संज्ञाकरणम्[२]। संज्ञायतेऽनयेति संज्ञा[३]। अथवा संज्ञानं संज्ञा भवति[४]।

यद्यपि सूत्रकारेण पाणिनिना 'अथ संज्ञा', 'अथ परिभाषा', 'अथ विधिप्रकरणमि'त्यादिनिर्देशेन संज्ञादीनां निर्माणं न कृतम्, तथापि पश्चाद्भवैर्वृत्तिकारादिभिः कृतेन तदीयसूत्रव्याख्यानेनेदं स्पष्टमध्यवसीयते। पर्यन्वयोजि च भाष्यवार्तिककृद्भ्यां कात्यायनपतञ्जलिमुनिभ्यां वृद्धिरादैजिति सूत्रे 'संज्ञाधिकारः संज्ञासम्प्रत्ययार्थः। अथ संज्ञा इत्येवं प्रकृत्य वृद्ध्यादयः शब्दाः पठितव्याः.....वृद्ध्यादीनां शब्दानां संज्ञेत्येष सम्प्रत्ययो यथा स्यादिति'[५]। तस्य परिहारश्चापि तैरेव तत्र विहितः—'आचार्याचारात् संज्ञासिद्धिः। .....अथवा पूर्वोच्चारितः संज्ञी परोच्चारिता संज्ञा'[६] इत्येवमादिभिर्युक्तिप्रयुक्तिभिः।

सूत्रकारस्येयं शैली यदसौ संज्ञापरिभाषादीनां नामनिर्देशं विनैव सूत्राणि रचयति। संज्ञासूत्रेषु सुपरिज्ञातेयं पद्धतिराचार्येणारचिता यत् सर्वा अपि संज्ञाः प्रायः सर्वत्रैव हि व्याकरणे संज्ञिनः पश्चान्निर्दिष्टाः। संज्ञिनश्च प्राङ्निर्दिष्टाः, अर्थात् पूर्वं संज्ञिनिर्देशः पश्चात् संज्ञानिर्देशः। तद्यथा—'अदेङ् गुणः', 'तुल्यास्यप्रयत्नं सवर्णम्'[७] इत्यादि। अत्र अदेङ् इति प्राङ्निर्देशात् संज्ञी। गुण इति च पश्चान्निर्देशात् संज्ञा, एवं सर्वत्र संज्ञासंज्ञिविज्ञानं कर्तव्यम्। केवलं 'वृद्धिरादैच्' 'अपृक्त एकाल्-प्रत्ययः'[८] इति सूत्रद्वयमेवोक्तलक्षणस्यापवादभूतं द्रष्टव्यम्। तदुक्तं भाष्यकारेण पतञ्जलिना—'कथं वृद्धिरादैच् इति? एतदेकमाचार्यस्य मङ्गलार्थं मृष्यताम्।

---

१. नागेशभट्टविरचिता वैयाकरणसिद्धान्तपरमलघुमञ्जूषा, कुरुक्षेत्रविश्वविद्यालयेन प्रकाशिता, १९७५, लक्षणाप्रकरणम्, पृ. ७५।

२. महाभाष्यम्, प्रदीपोद्द्योतसहितम्, (महा.प्र.) वेदव्रतसम्पादितम्, गुरुकुलझज्झरतः प्रकाशितम्, १९६२, भा. १, सू. १.१.२७, पृ. २७५।

३. तत्रैव, भा. ४, सू. ५.२.८१, पृ. १४५।

४. तत्रैव, भा. १, सू. १.२.५३, पृ. २२९।

५. तत्रैव, भा. १, सू. १.१.१, पृ. ३७।

६. तत्रैव, पृ. ३८।

७. पाणिनीयाष्टाध्यायी (पा.) श्रीधरशास्त्रिसम्पादिता, भण्डारकर ओरियण्टल रिसर्च इंस्टीच्यूट, पूनातः प्रकाशिता, १९३५, सू. १.१.२; ९।

८. पा. १.१.१, १.२.४१।

माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं वृद्धिशब्दमादितः प्रयुङ्क्ते। वृद्धिशब्दस्य समृद्धिपर्यायस्य मङ्गलार्थत्वात्। येनास्य व्याकरणस्याध्येतारो वृद्धियुक्ता यथा स्युः। यतो हि मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते, आयुष्मत्पुरुषाणि च। 'अपृक्त एकाल्प्रत्यय' इत्यादि तु परिभाषा न संज्ञेति तत्रापि न दोषः'[1]।

संज्ञादिषु षड्विधेषु सूत्रेष्वधिकारसूत्रस्य लक्षणं तु सूत्रकारेण पाणिनिना साक्षात् स्वयं व्यधायि—'स्वरितेनाधिकारः'[2] इति। अस्य द्वेधार्थो भाष्यकृद्भि-र्व्याख्यातः। स्वरिते सति नाधिकारः—अधिकारो न भवति। अधिकारो निवर्तत इत्येकोऽर्थः। स्वरितेन लिङ्गेन अधिकारो भवति। स्वरितं दृष्ट्वाऽधिकारोऽयमिति विज्ञेयमिति द्वितीयोऽर्थः। पूर्वं स्वरितं दृष्ट्वाधिकारज्ञानं कार्यम्। तदनन्तरमपरं स्वरितं विलोक्य पूर्वाधिकारनिवृत्तिर्ज्ञेयेति; किन्त्वद्यत्वेऽष्टाध्याय्यां स्वरितचिह्नमनुदात्तचिह्न-मुदात्तचिह्नं वा नोट्टङ्कितं दृश्यत इत्यतः सन्देहे सति **व्याख्यान**मेव शरणं प्रत्येतव्यम्—'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति'[3] न्यायात्। तद्यथा—'औतोऽम्शसोः'[4] इत्यत्र 'ओ + औतः = औत' इति सन्धिश्छिद्येत, आहोस्वित् 'आ + ओत = औत' इति वेत्यत्र सन्देहे सति 'आ + ओत = औत' इति सन्धिश्छेद्य इति **व्याख्यानादेव** विज्ञायते। तेन ओकारान्तस्यैव अम्शसोः परत आकारादेशो भवति—गाम्, गा इति, न त्वौकारान्तस्य ग्लावम्, ग्लाव इति।

आचार्यस्य पाणिनेः सूत्ररचनाशैली यथा रुच्या मनोहारिणी चास्ति, तथैव बहुलेन वैचित्र्येणाश्चर्याम्भोधौ चापि निमज्जयति। पाणिनिना यद्यपि यथासम्भवं नियमानां पालनं विहितं तथापि क्वचिन्नियमान् भङ्क्त्वा स्वतन्त्रेच्छाया: प्रयोगेणापि सूत्राणि प्राणायिषत, स्वतन्त्रेच्छस्य महर्षेर्नियन्तुमशक्यत्वात्, येषु स्वनिर्मितनियमानामपि पालनं पूर्णतया नाभूत्। एषा खलु महत्तमा विचित्रता यत्

---

१. द्रष्टव्यः महा.प्र. भा. १, सू. १.१.१, पृ. १३२। 'अपृक्त इति परिभाषा न संज्ञेति नास्ति व्यभिचारः। अत्रावधेयं यन्महाभाष्यकारोऽन्ततोगत्वा संज्ञासंज्ञिप्रत्यभिज्ञापकमिमं सिद्धान्तं न समर्थयत्यपवादसम्भवात्, तद्यथा—दोषवान् खल्वपि संज्ञाधिकारः। अष्टमेऽपि हि संज्ञाः क्रियन्ते—'तस्य परमाम्रेडितम्' इति। तत्रापीदमनुवर्त्यं स्यात्' इति।

२. पा. १.३.११।

३. परिभाषेन्दुशेखरः (परि.) के.वी. अभ्यङ्करसम्पादितः, भण्डारकर ओरियण्टल रिसर्च इंस्टीच्यूट-पूनातः प्रकाशितः, १९६२, सं. १।

४. पा. ६.१.९३।

स्वयं नियमान् निर्मायापि पाणिनिना तेषां पालने शैथिल्यमौदासीन्यमरुचिर्वा प्रादर्शि। एतदेव वैचित्र्यं सूत्रेषु बाहुल्येन प्रेक्षमाणाः प्रेक्षावन्तो वृत्तिकारा एवमाहुः—'विचित्रा हि सूत्रस्य कृतिः पाणिनेरिति'[1]। पाणिनेः शैलीमिमामभिनन्दता भाष्यकारेणापि बहुधा समुदगारीयं गिरामुदारा मधुधारा—'एषा ह्याचार्यस्य शैली लक्ष्यते यत्तुल्यजातीयांस्तुल्यजातीयेषूपदिशति—अचोऽक्षु, हलो हल्सु इति'[2]। अन्यत्रापि नावश्यमिहैव, तद्यथा—'पङ्क्ति-विंशति-त्रिंशत्' इत्यादिसूत्रे 'पङ्क्ति' इत्यादिवत् सहस्रकोट्यादयोऽपि कुतो न परिगणिता इत्याकाङ्क्षायां तत्परिहारं कुर्वन्नाह भाष्यकारः पतञ्जलिः—'नासूया कर्तव्या यत्रानुगम आचार्येण क्रियते इति'[3]।

अयमाशयो यदाचार्यः पाणिनिर्यदि लोकप्रसिद्धान् स्वतःसिद्धान् पङ्क्तिविंशतिप्रभृतिशतसंख्यापर्यन्तान् शब्दानेव स्वसूत्रे स्वयमन्वाचष्टे, सहस्रलक्षादींश्च नान्वाचष्टे, तदयमाचार्यस्य स्खलनं प्रमादो दोषो वा न मन्तव्यः। तदर्थं तस्मै नासूयितव्यम्, न चेर्ष्यितव्यम्। न चासावुपालब्धव्यो यदनेन केषाञ्चिदन्वाख्यानं कृतं केषाञ्चित्तु न कृतमिति। एवन्तु मन्तव्यं यदाचार्येणान्वाख्यानमेव विहितम्, न तु प्रत्याख्यानमिति। तच्चान्वाख्यानं लघ्वर्थं सर्वेषामकृत्वा केषाञ्चिदेव कृतमिति तदन्येषामकृतान्वाख्यानानामप्युपलक्षणं भवितुमर्हति। इत्थङ्कारं भाष्यकारः पाणिनेस्त्रुटिमप्यत्रुटिमाकलयन् यथासम्भवं तत्सूत्ररचनां समर्थयत्येव। काशिकाकारादयोऽन्ये प्रेक्षापूर्वकारिणो वृत्तिकारा अपि पाणिनेः सूत्ररचनायां महतीं सूक्ष्मेक्षिकामनुभवन्ति वर्णयन्ति च। तथा चाहुः काशिकाकाराः—'महती सूक्ष्मेक्षिका वर्तते सूत्रकारस्य'[4] इति।

क्वचित् क्वचिद् वार्तिककारः कात्यायनोऽप्येवं प्रस्खलन् उत्तरकालवर्तिना भाष्यकारेण पतञ्जलिना समाधीयते। तद्यथा—'भवे च। प्रोक्तादयश्च तद्धिताः......किमर्थमिदमुभयमुच्यते.......न प्रोक्तादयश्च तद्धिता इत्येवं भवेऽपि तद्धितश्चोदितः स्यात्? पुरस्तादिदमाचार्येण दृष्टं—भवे च इति, तत्पठितम्। तत उत्तरकालमिदं दृष्टं—प्रोक्तादयश्च तद्धिता इति, तदपि पठितम्। न चेदानीमाचार्याः

---

१. का., भा. १, सू. १.२.३५, पृ. ३२०।

२. महा.भा. १, प्रत्याहाराह्निकम्, लण्सूत्रम्, पृ. ३२। द्र. अत्रत्यो महा.प्र.पृ. १०७—'शीले भवा शैली—समवधानपूर्विका प्रवृत्तिः। यथा लोके ब्राह्मणैः सह ब्राह्मणा भोज्यन्ते क्षत्रियैः सह क्षत्रिया इति, एवमिहाप्याचार्येण वर्णा निर्दिष्टा इत्यर्थः'।

३. तत्रैव, भा. २, सू. ५.१.५९, पृ. ३५५-५६।

४. का., भा. ३, सू. ४.२.७४, पृ. ५६८।

सूत्राणि कृत्वा निवर्तयन्ति'[१] इति, अर्थाद् यल्लिखितं तल्लिखितम्। तन्नियमानुकूलं स्यान् मा वा भूत्। आचार्याः पुरस्तात् सकृल्लिखितं न परस्तात् परिवर्तयन्तीति भावः। दृश्यतामत्र भाष्यकारेण कियता सारल्येन श्रद्धाबुद्धिसमन्वितैश्च शब्दैराचार्यदोषा अपि गुणपक्षे निक्षिप्ताः। यद्यपि सिद्धान्ते तु भाष्यकारः पाणिनेः सूत्ररचनायामेकमपि वर्णमनर्थकं न मनुते[२], तथाप्यस्त्येकमेतादृशं स्थलं यत्र भाष्यकारः शिष्याणां सुखावबोधाय लाघवं प्रत्यनवधानलक्षणेन प्रमादेन कृतं पाणिनेर्दोषं स्पष्टमकष्टं निदर्शयति, तद्यथा—'तदधीते तद्वेद' इति सूत्रे द्विस्तद्ग्रहणमनर्थकं साधयन् भाष्यकार इत्थं वाचां प्रचारमुरीचकार—'द्विस्तद्ग्रहणं प्रमादकृतमाचार्यस्य शक्यमकर्तुम्'[३] इति।

अष्टाध्याय्यामधिकशतानि संज्ञासूत्राणि सन्ति। न च संज्ञासूत्राणां कश्चिन्नियमो यत्तानि प्रथमयोरेवाध्याययोः स्युः। अष्टमेऽध्यायेऽपि हि संज्ञा क्रियते—'तस्य परमाम्रेडितम्'[४] इति। संज्ञासूत्रवत् परिभाषासूत्राण्यपि सूत्रकारेण नामग्राहं विनैव गृहीतानि, परिभाषेयं नाम स्थानिनियमार्था चकास्ति। अनियमप्रसङ्गेऽनया नियमो विधीयते[५]। वैयाकरणाः परितो व्यापृतां भाषां परिभाषां प्रचक्षते[६]। तद्यथा—'अलोऽन्त्यस्य', 'इको गुणवृद्धी', 'अचश्च', 'समर्थः पदविधि'रित्येवमादि[७]। का नाम परिभाषेति लक्षणमपि सूत्रकारेण स्वयं न विहितम्; किन्तु पश्चाज्जातैर्वृत्तिकृद्भिः सूत्रार्थं परिष्कुर्वद्भिः परिभाषेयमित्युक्तम्। वाचनिकपरिभाषास्त्वल्पीयस्य एव सूत्रपाठे निरदिक्षत। सूत्रबहिर्भूता ज्ञापकन्याय-सिद्धा अन्याः प्रायः सकलाः परिभाषा भाष्यान्तर्गताः परिभाविता द्रष्टव्याः।

विधिप्रकरणस्य निषेध(नियम)प्रकरणस्य वाऽपि भूयांसि सूत्राणि दृश्यन्ते, विधिव्यापारस्यैव मुख्यत्वात्[८]। विधिपूर्वकश्च निषेध इति सोऽप्यायाममपेक्षते।

---

१. महा., भा. १, पस्पशाह्निकम्, पृ. १२। सूत्रभाष्यस्येयं व्याख्याशैल्यन्यस्थलेष्वपि दृश्यते, तद्यथा—भा. ३, सू. ६.३.३४, पृ. १५१, ८.२.६; पृ. ३९३।

२. तत्रैव, भा. १, सू. १.१.१ पृ. ३९ 'प्रमाणभूत आचार्यो दर्भपवित्रपाणिः प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म। तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुं किम्पुनरियता सूत्रेण' इति।

३. तत्रैव, भा. २, सू. ४.२.७०, पृ. २८७।

४. पा. ८.१.२।

५. का., भा. १, सू. १.१.३, पृ. ७१।

६. महा., प्र.उ., भा. २, सू. २.१.१, पृ. ४९३।

७. पा. १.१.५२, १.१.५३, १.२.२८, २.१.१।

८. द्र. तन्त्रवार्तिकम्, १.२३४—'विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति'।

'आद्गुणः', 'वृद्धिरेचि', 'वचिस्वपियजादीनां किति'[१] इत्यादीनि विधिसूत्राणि। 'न वशः', 'न कर्मव्यतिहारे'[२] इत्यादीनि निषेधसूत्राणि। 'धातोस्तन्निमित्तस्यैव', 'पतिः समास एव'[३] इत्यादीनि च नियमसूत्राणि। तत्रैवकार इष्टतोऽवधारणार्थः, इतरथा विपरीतोऽपि नियमः सम्भाव्येत।

कतिपयान्यतिदेशसूत्राण्यपि सूत्रकारेण प्रणीतानि[४]। निमित्तव्यपदेशतादात्म्य-शास्त्र-कार्य-रूपार्थभेदादतिदेशः सप्तधा। तत्र निमित्तातिदेशः—'पूर्ववत् सनः'[५] इति। व्यपदेशातिदेशः—'आद्यन्तवदेकस्मिन्'[६] इति। तादात्म्यातिदेशः—'सुबामन्त्रिते पराङ्गवत्स्वरे'[७] इति। शास्त्रातिदेशः—'चिण्वदिट् च'[८] इति। कार्यातिदेशः—'स्थानिवदादेशोऽनल्विधौ'[९] इति। रूपातिदेशः—'तृज्वत्क्रोष्टुः'[१०] इति। अर्थातिदेशः—'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्'[११] इति। क्वचिदन्तरेणापि वतिमर्थाद् वत्करणाभावेऽप्यतिदेशो गम्यते, तद्यथा—'गोतो णित्'[१२] इति, णिद्वदित्यर्थः।

अधिकारसूत्रं परिभाषासूत्राद् भिद्यते। अधिकारः प्रतियोगं तस्यानिर्देशार्थ इति योगे योगे प्रक्रान्त उपतिष्ठते। परिभाषा पुनरेकदेशस्था सती सर्वं शास्त्रमभिज्वलयति प्रदीपवत्, यथा प्रदीप एकदेशस्थः सर्वं वेश्माभिज्वलयति[१३]। 'प्रत्ययः', 'अङ्गस्य', 'भस्य', 'पदस्य'[१४] इत्यादीन्यधिकारसूत्राणि। स्वस्मिन्नधिकार एवैषां व्यापारः, न ततः पूर्वं न च ततः पश्चात्। 'समर्थः पदविधिः', 'इको गुणवृद्धी' इत्यादीनि परिभाषासूत्राणि। एतानि हि लक्ष्यानुरोधात् कार्यकालतया यथोद्देशं[१५] वा पूर्वत्र परत्र च सर्वत्र व्याप्रियन्ते।

---

१. पा. ६.१.८७, ८८; ९१।

२. पा. ६.१.२०, ७.३.६;

३. पा. ६.१.८०, १.४.८।

४. द्र.महा., भा. १ सू. १.१.२३, पृ. ८१। 'तद्वदतिदेशोऽयम्'। आप्टे-कोशः—अतिदेशो नाम इतरधर्मस्य इतरस्मिन् प्रयोगायादेशः। प्रकृतिवद् विकृतिः।

५. पा. १.३.६२;

६. पा. १.१.२१।

७. पा. २.१.२;

८. पा. ६.४.६२।

९. पा. १.१.५६;

१०. पा. ७.१.९५।

११. पा. ६.३.३४;

१२. पा. ७.१.९०।

१३. महा., भा. १, सू. २.१.१, पृ. ३५९।

१४. पा. ३.१.१, ६.४.१, ६.४.१२९, ८.१.१६।

१५. परि.सं. २.३ 'यथोद्देशं संज्ञापरिभाषम्। कार्यकालं संज्ञापरिभाषम्।

सूत्रकारो यथा लौकिकसंस्कृतशब्दान् साधयति, तथैव वैदिक-संस्कृतशब्दानपि साधु संस्करोति। न सूत्रेषु वैदिकप्रक्रिया स्वरप्रक्रिया वा पृथङ् निर्दिष्टा, प्रत्युत लौकिकशब्दसंस्कारेण सहैव वैदिकाः शब्दा अपि यथावत् साधिताः, तद्यथा—'हलः श्नः शानज्झौ', 'छन्दसि शायजपि'[१] इति। छन्दसि व्यत्ययबाहुल्यदर्शनात् 'व्यत्ययो बहुलमिति'[२] सामान्येन सूचितमाचार्येण। वस्तुतो मुख्यतया वैदिकशब्दसाधनायैव सूत्रकारस्य प्रयत्नः[३], आनुषङ्गिकतया नान्तरीयकतया च तु लौकिकाः शब्दा अपि संस्क्रियन्ते। तदुक्तं कैयटेन—'सर्ववेदपारिषदं हीदं शास्त्रम्, तत्र नैकः पन्थाः शक्य आस्थातुम्, सर्ववेदाङ्गत्वादस्य व्याकरणस्य सर्ववेदसाधारणं लक्षणं बहुलादिग्रहणोपेतं क्रियते। आनुषङ्गिको लौकिकशब्दसंस्कार इति वेदग्रहणं कृतम्'[४] इति। पाणिनिकाले ये शब्दाः प्रयुक्ता आसन्, तेषां साधुत्वं सूत्रकारेण तेन व्यधायि। यतो विचित्रा हि शब्दानां शक्तयो यथादर्शनमभ्युपगन्तव्याः, न सामान्यतोदृष्टेनानुमानेन व्यवस्थापयितुं शक्यन्ते। अतः पाणिनिना लक्ष्यस्थित्यपेक्षया सूत्राणि प्रणीतानि। एतस्मिन् हि बहुतर्कमिष्टं सङ्गृह्यते। यद्यपि तेषामपि सर्वेषां पूर्णतया समाधानं न भवति, अल्पज्ञत्वान्मनुष्यस्य सर्वज्ञत्वाभावात्, तथापि दिगित्ययं प्रदर्शिता तेषु। एवमन्येऽपि साधवोऽर्हन्ति सम्भवितुम्। अत्रेदं तु न शङ्कनीयम्—सूत्रकारोऽसमर्थसमासं प्रतिरुन्धन्नपि स्वयं सूत्रेष्वसमर्थसमासं कुतो निर्दिशति, तद्यथा—'हल्ङ्याब्भ्यो दीर्घात्', 'अत्वसन्तस्य चाधातोः', 'नलोपः सुप्स्वरसंज्ञा'[५] इत्यादि। विषयेऽस्मिन् 'विचित्रा हि सूत्रस्य कृतिः पाणिनेः' इत्यार्षेय-वचनमवश्यमभ्युपगन्तव्यम्। इदमेव वचनमत्रैतत्समाधानाय साधु क्रमते।

---

१. पा. ३.१.८३-८४; २. पा. ३.१.८५।

३. 'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्' इति भाष्यकारप्रोक्तानि व्याकरणाध्ययनस्य मुख्यानि प्रयोजनान्यवशिष्टानि त्रयोदशानुषङ्गिकानि प्रयोजनानि चापि पाणिनीयं व्याकरणं मुख्यतया वैदिकशब्दसिद्ध्यर्थमेव साधयन्ति।

४. महा.प्र., भा. २, सू. २.१.५८, पृ. ६३४। अत्रावधेयं यद् उद्द्योतकारानुसारं केचन व्याख्याकाराः पाणिनीयं व्याकरणं लोकवेदोभयसाधारणमेव मन्यन्ते। परं बहुलग्रहणसिद्धस्यार्थस्योदाहरणानि वेदेषु बहूनीति ध्वनयितुमेव लोकवेदसाधारणेऽपि सर्ववेदपारिषदत्वोक्तिरिति परे।

५. पा. ६.१.६८, ६.४.१४, ८.२.२। अत्र विषये विश्वसंस्कृतपत्रिकायां मुद्रितः 'पाणिनीयाष्टाध्याय्यामविभक्तिकाः सौत्रा वा निर्देशा असमर्थसमासयुक्तानि स्थलानि च' इति शीर्षकोपात्तो मदीयो विशिष्टो लेखः (पृ. १-७) विशेषेण द्रष्टव्यः।

सूत्रकारशैल्यामनुसन्धीयमानायां संस्कृतभाषाव्याकरणस्येमे विषया अनवयवेन सङ्गृहीता भवन्ति। संज्ञासूत्राणि, परिभाषासूत्राणि, सन्धित्रयसूत्राणि, सुबन्तप्रकरणसूत्राणि, तिङन्तप्रकरणसूत्राणि, कृत्प्रकरणसूत्राणि, तद्धितप्रकरण-सूत्राणि, कारकप्रकरणसूत्राणि, समासप्रकरणाव्ययप्रकरणसूत्राणि, स्त्रीप्रत्ययसूत्राणि, स्वरप्रकरणसूत्राणि, वैदिकप्रकरणसूत्राणि—इत्येवं सर्वोऽपि संस्कृतभाषासम्बन्धी प्रयोगविषयः सूत्रकारेण स्वीयया विशिष्टशैल्या सङ्गृहीतः। वर्णानां स्थानप्रयत्नविवेकस्तु शिक्षाग्रन्थादेव बोद्धव्यः। सूत्रेषु स्थानप्रयत्नानां निर्देशो नास्ति। वस्तुतस्त्रुटिरेवेयमित्युत्प्रेक्षे।

प्रथमेऽध्याये प्रत्याहारगुणवृद्धिह्रस्वदीर्घप्लुतसंयोगानुनासिकसवर्णप्रगृह्य-सर्वनामाव्ययधातुप्रातिपदिकटिघुघप्रभृतयः संज्ञाः, 'षष्ठी स्थानेयोगा', 'अलोऽन्त्यस्य', 'अचश्चेत्यादयः'[१] परिभाषाः, 'स्थानिवदादेशोऽनल्विधौ', 'गाङ्कुटादिभ्योऽञ्णिन् ङित्'[२] इत्यादयोऽतिदेशाः, विशिष्टमित्संज्ञाप्रकरणम्, 'सरूपाणामेकशेष'[३] इत्याद्येकशेषप्रकरणम्, आत्मनेपद-परस्मैपदविधानम्, आकडारीया नदी-घि-अङ्ग-भ-पद-पुरुष-वचन-विभक्ति-प्रभृतयो गत्युपसर्गनिपात-कर्मप्रवचनीयरूपविशिष्टाः संज्ञाः प्रोक्ताः। अन्वर्थसंज्ञाविज्ञानार्थमाचार्येणा-व्ययसर्वनामप्रभृतयो महत्यः संज्ञा अपि विहिताः। उक्तञ्च भाष्ये—'महत्याः संज्ञायाः करण एतत्प्रयोजनम्—अन्वर्थसंज्ञा यथा विज्ञायेत'[४] इति।

द्वितीयेऽध्याये समासः, पराङ्गवद्भावो विभक्तिविधानं, द्विगुद्वन्द्वयोरेकवद्भावप्रकरणम्, आर्धधातुकाधिकारः, सुपो लुग्विधानं च निर्दिष्टम्। समासेषु प्रथममव्ययीभावं निर्दिशति। ततस्तत्पुरुषम्। ततस्तद्भेदं द्विगुम्। ततस्तद्भेदं कर्मधारयम्। तत एकदेशितत्पुरुषम्। ततो नञ्तत्पुरुषम्। गतिकारकोपपदसमासानन्तरं बहुव्रीहिम्। तस्य पञ्च भेदांश्च। ततो द्वन्द्वम्। इत्थं द्वितीयाध्यायस्य द्वितीयपादावधि सर्वं समासप्रकरणमवसाय्य तृतीये पादे प्रथमाद्वितीयातृतीयादिविभक्तिविधानं प्रस्तौति। तदनन्तरं कारकषष्ठ्याः शेषषष्ठ्याश्च विवेकं प्रद्योतयति। विभक्तिविधाने पूर्वं द्वितीयां, ततः तृतीयां चतुर्थीं पञ्चमीं सप्तमीं

---

१. पा. १.१.४९, १.१.५२, १.२.२८।

२. पा. १.१.५६, १.२.१।

३. पा. १.२.६४।

४. महा., भा. १, सू. १.१.२७, पृ. ८८-८९। तुलनीयम्—न्यासः (का.भा. २, सू. २.३.४८, पृ. २०९) 'आमन्त्रितमिति महत्याः संज्ञायाः करणं वैचित्र्यार्थमिति'।

च निर्दिश्य, ततः प्रथमां पर्यवसाने च षष्ठीं विधत्ते, येनेदं विज्ञायते यत् सर्वास्वपि विभक्तिष्वकारकत्वात् षष्ठीविभक्तिर्दुर्बलेति। एवं प्रथमाध्यायस्य चतुर्थे पादे कारकप्रकरणमधिकृत्य पूर्वमपादानं, ततः सम्प्रदानं, ततः करणमधिकरणं च, ततः कर्म, तदनन्तरं सर्वान्ते कर्तारं निर्दिशति, येनेदं विज्ञायते यत् कर्तृकारकं सर्वतो बलीय[1] इति।

एवं तृतीयेऽध्याये सन्क्यच्प्रभृतयो द्वादश नामधातवः, स्यतासिप्रभृतय एकविंशतिविकरणाः, तृतीयधात्वधिकारे कृत्संज्ञा, उपपदसंज्ञा च, सामान्यकृदन्ताः प्रत्ययाः, विशिष्टाः कृत्प्रत्ययाः, निरुपपदाः सोपपदाश्च कृदन्ताः, भूत-भविष्यद्वर्तमानकालिकाः कृत्प्रत्ययाः, पुंल्लिङ्गस्त्रीलिङ्गनपुंसकलिङ्गाः कृत्प्रत्ययाः, लकारार्थप्रक्रिया, अव्ययकृदन्ताः, तिङन्ता लादेशाश्च सन्ति। इत्थं चतुर्थाध्यायस्याद्ये पादे षट्सप्ततौ सूत्रेषु 'टाप्', 'डाप्', 'चाप्', 'ङीप्', 'ङीष्', 'ङीन्', 'ऊङ्', 'ति', 'ष्यङ्', 'ष्फ' इति दश स्त्रीप्रत्ययान् सूचयति। तदनन्तरमपत्याधिकारमारभ्य स्वार्थिकावधि तद्धितसंज्ञान् प्रत्ययान् पञ्चमाध्यायं यावद् रचयति। समासान्तप्रत्ययविधानप्रकरणं च समासप्रकरणात् पृथक्कृत्य पञ्चमाध्यायस्य चतुर्थपादान्ते प्रस्तौति, येन समासान्तविधिरनित्यो विज्ञायेत[2]।

षष्ठाध्यायस्याद्ये पादे अच्सन्धिं, विधिशेषं, षष्ठं द्वित्वप्रकरणं, शेषनिघातप्रकरणं च निर्माति। द्वितीये समासस्वरविषयं, तृतीयेऽलुक्प्रकरणं, समासाश्रयविधींश्च सूत्रयति। षष्ठस्य चतुर्थपादादारभ्य सप्तमाध्यायं यावद् अङ्गाधिकारः प्रकरोति। अङ्गाधिकारमध्ये भाधिकारः प्रवर्तते। अष्टमे आद्यपादे आष्टमिकं द्वित्वं, तिङन्तस्वरप्रकरणं चाभिधाय पदाधिकारं स्फुटीकरोति। तृतीयचतुर्थपादयोर्हल्सन्धिं, विसर्गसन्धिं, षत्वणत्वे च सूचयति। अष्टाध्याय्याः पर्यवसाने च 'अ अ'[3] इति सूत्रेण शास्त्रप्रक्रियायां विवृतमकारं शास्त्रान्तेऽवसित-शास्त्रप्रक्रियायां स्वरूपेऽवस्थानाय शुद्धं संवृतं प्रतिपादयति। निर्विकारं शुद्धं ब्रह्म यथा मायाशबलं सज्जगन्निर्माणे प्रभवति, न तु मायारहितम्। पर्यवसितजगन्निर्माणं चादो ब्रह्म यथा स्वकीये शुद्धे स्वल्पे मायारहितमेवावतिष्ठते, तथैव अकारादयो वर्णाः स्वयमविकृताः सन्तोऽपि आकारादीतरविवृतवर्णसन्धौ विकारं लभन्ते नेतरथा, वर्णानामक्षरत्वेन विनाशाभावाद् इति ब्रह्मसाम्यं सूचयति,

---

१. द्र. महा., भा. १, सू. १.४.१, पृ. ३०२, 'अपादानमुत्तराणि'।

२. परि.सं. ८४, 'समासान्तविधिरनित्यः'।

३. पा. ८.४.६८।

शब्दब्रह्मणोरैक्यादिति सङ्क्षेपः[१]। हंहो! दृश्यतां कीदृशीयं विचित्रा प्रशस्ताऽभिनन्दनीया च सूत्रकारस्य पाणिनेः सूत्राणां रचनाशैली।

किन्त्वत्रापि केचन प्रत्यवतिष्ठन्ते। बहव इमामभिनन्द्यां वन्द्यामपि शैलीं विलोक्योद्विजन्ते, न चैनां रोचयन्ते। कथयन्ति चैवम्—अस्यां शैल्यां स्वीक्रियमाणायां संस्कृतभाषाया बोधः कष्टेन भवति। अज्झल्विसर्गरूपत्रिविधसन्धेः सुबन्ततिङन्तयोश्च रूपाणां सुगमतया ज्ञानस्यानीषत्करत्वात् प्रतिकार्यं पृथक्-पृथगध्यायाश्रितत्वेन रूपसाधने सूत्राणां दूरापास्तत्वाद् इति। वयं तु मन्महे—न सत्यमेतत्। आर्षेयो ह्येष क्रमः। ऋषीणां ज्ञानं च कष्टसाध्यं भवति। 'ऋषीणां दर्शनं यत्तद् व्यवहारे नैव स्थितम्'[२] इति प्राचां वाचः; किन्त्वनेन पाणिनिरचितसूत्रक्रमेण ह्यधीयानः पुमान् कष्टात् कष्टतरमपि ज्ञानं सम्यक् शक्नोत्यवगन्तुम्। नान्तरेण तपःश्रमं ब्रह्मचर्यं श्रद्धां चैषा शैली शक्या बुद्धिमध्यमध्यारोढुम्। तपःश्रद्धाविहीनेन पुंसा तु वेदेषु प्रतिपाद्यमान ईश्वरोऽपि न शक्यः प्रतिपत्तुम्। तत्रापि तपोऽनुष्ठानमपेक्ष्यते। येषां त्वत्र प्रक्रमते मतिस्ते न किमपि काठिन्यमनुभवन्ति। एवमेव तच्छ्रुत्वा इति सन्धौ क्रियमाणे 'तद् + श्रुत्वा' इति विग्रहे क्रमेण दकारस्य जकारं, जकारस्य चकारं, शकारस्य छकारं च पूर्वत्रा- सिद्धीयप्रकरणं विद्वानेव विवेक्तुमर्हति। इतरस्तु तत् + श्रुत्वा इत्यशुद्धं विगृह्य तकारस्य चकारं शकारस्य च छकारं विधायानिष्टं सन्धिरूपं साधयेत्। अपि चान्तरेणाष्टाध्यायीक्रमं विप्रतिषेधभाङ्गाद्यधिकारव्यवस्थापि नाधिगन्तुं शक्या।

तस्मात् पाणिनेरियं सूत्ररचनाशैली सर्वथा साधुरेवाभ्युपगन्तव्या। यतो हि सर्वस्यापि व्याकरणस्य मूलं सूत्राण्येव 'सूत्रत एव हि शब्दान् प्रतिपद्यन्ते। आतश्च सूत्राण्येव, यो ह्युत्सूत्रं कथयेन्नादो गृह्यते'। अथवा नादोऽर्थरहितत्वाद्घोषमात्रमेव

---

१. तुलनीयम्—

(क.) महा., भा. १, प्रत्याहाराह्निकम्, ञमङणनम्-झभञ्-सूत्रम्, पृ. ३६।
वर्णज्ञानं वाग्विषयो यत्र च ब्रह्म वर्तते। तदर्थमिष्टबुद्ध्यर्थं लघ्वर्थं चोपदिश्यते'॥

(ख) तत्रैव पस्पशाह्निकम्, पृ. ३—'महो देवो मर्त्यानाविवेश' (ऋग्वेदे-४.५८.३)। महान् देवः शब्दः मर्त्यानाविवेश। महता देवेन सह नः साम्यं यथा स्यादित्यध्येयं व्याकरणम्'।

२. तुलनीयं वाक्यपदीयम्, के.वी. अभ्यङ्करसम्पादितम्, पूनाविश्वविद्यालयतः प्रकाशितम्। १९६५, का.सं. २.१३।

'ऋषीणां दर्शनं यच्च तत्त्वे किञ्चिदवस्थितम्।
न तेन व्यवहारोऽस्ति न तच्छब्दनिबन्धनम्'॥

गृह्येत। सूत्रमाधारीकृत्यैव वार्तिकं भाष्यं च समुज्जृम्भते। सूत्रनिर्माणं कठिनतमम्। तत्र निर्माणे दोषा अपि सम्भवन्ति। गुणाः प्रयोजनानि च बहुशः सन्ति। गुणगृह्यैर्विपश्चिद्भिर्गुणा ग्रहणीयाः। प्रतिविधेयं च दोषेषु। तथा चोक्तं भाष्यकारेण— **'न हि दोषाः सन्तीति परिभाषा न कर्तव्या सूत्रं वा न प्रणेयम्। न हि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रियन्ते। न हि मृगाः सन्तीति यवा नोप्यन्ते। दोषाः खल्वपि साकल्येन परिगणिताः। प्रयोजनानामुदाहरणमात्रम्। कुत एतत्? न हि दोषाणां लक्षणमस्ति। तस्माद्यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा कर्तव्या प्रतिविधेयं च दोषेषु'**[1] **इति।**

पाणिनिसमये यावान् शब्दस्य प्रयोगविषय आविरासीत्, तेन मुनिना तस्य सर्वस्यापि शब्दराशेरालोचनं यथामति हितं विहितम्। ये तु प्रयोगास्तदानीं नाभवन् तेषां साधनाय वार्तिककारो भगवान् कात्यायनो मुनिः प्रादुरास। **यीशुमहात्मनः प्राक् पञ्चशत्यां समायां पाणिनेः कालः समाम्नायते। तत ऊर्ध्वं प्रायो द्विशत्यामतीतायां वार्तिककारस्य कालः स्वीक्रियते।** तस्य काले संस्कृतभाषायाः प्रसारः प्रकाशो नानाभूय वितस्तरे। उदाहणार्थं यथा—'दयालुः, श्रद्धालुः' इति रूपे तु पाणिनिकालेऽप्यास्ताम्, तत्सूत्रेणालुचो विधानात्[2]; किन्तु 'शयालुः' इति रूपं त्वद्य श्रूयमाणं पाणिनिसूत्रेण सेद्धुं नार्हति। तदर्थं 'शीङश्चेति वक्तव्यम्' इति कात्यायनमुनिवचनात् शेतेरपि आलुचं विधायोक्तं साधनीयम्। कृपालुशब्दस्तु वार्तिककारसमयेऽपि नाभूदिति प्रतीमः। इतरथा शीङा सह कृप्धातोरपि स आलुचं विदध्यात्। कृपाशब्दाद्वा तद्धित आलुच् विज्ञेयः। एवन्तु 'दयालुः, श्रद्धालुः' इत्युभे रूपे विपद्येते। वार्तिककारस्य सूत्र(वार्तिक)-रचनायामयमेव विशेषो यत् पाणिनिसूत्रेषु यत्र क्वचित् न्यूनमधिकं वा समुचितं शक्येत कर्तुं तदनेन क्रियत[3] इति। 'अशिष्यो वा', 'आनर्थक्यम्', 'अपरिभाष्यम्' 'असम्प्रत्ययः', 'अप्रसिद्धिः', 'अग्रहणम्', 'अप्रतिषेधः', 'अनिर्देशः', 'अप्रसङ्गः', 'अनुपपत्तिः', 'उपसंख्यानम्', 'वक्तव्यम्' इत्यादिवचनैर्वार्तिककारः स्वसूत्राण्युपन्यस्यति। यावती संख्या पाणिनिसूत्राणां वर्तते, तावत्येव प्रायो वार्तिककारसूत्राणामप्यस्ति, इत्युत्प्रेक्षे। तेषु वार्तिकेषु मान्यप्रयोजकानि, अपुष्टार्थानि पुनरुक्तानि वा सन्ति, तेषां प्रत्याख्यानं

---

१. महा., भा. १, सू. १.१.३९, पृ. ९९-१००।

२. पा. ३.२.१५८। 'स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्'।

३. का.मी. द्वितीयोऽध्यायः, पृ. १०—'उक्तानुक्तदुरुक्तचिन्ताकरत्वं वार्तिकत्वम्'। तुलनीयम्– 'उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते। तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञाः मनीषिणः'।।

'नार्थः', 'शक्योऽवक्तुम्', 'शक्यमकर्तुम्', 'आचार्यप्रवृत्तिर्ज्ञापयति', 'नैतदस्ति प्रयोजनम्, किमर्थमिदमुच्यते, लोकत एतत् सिद्धम्', इत्यादिशब्दैः पतञ्जलिना मुनिना भाष्यकारेण विहितम्। 'यथोत्तरं मुनीनां प्रामाण्यम्'[१] इति वचनेन सूत्रवार्तिकभाष्यकारेषु मध्ये भाष्यकारस्यैवोत्तरवर्तिनः प्रामाण्यमभ्युगम्यतेऽधिक-लक्ष्यदर्शित्वात्[२]। न हि भाष्यकारादन्यः कश्चन शब्दविषयेऽभियुक्ततरोऽस्ति।

पाणिनेः सूत्ररचनायामइउण्-इत्यादिचतुर्दशभिः सूत्रैरयं चत्वारिंशतः प्रत्याहाराणामतीव बुद्धिकौशलं सूचयति। महतो महतः शब्दौघस्य प्रतिपत्तये प्रत्याहारो नाम लघीयानुपायः, प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा अस्मिन्निति व्युत्पत्तेः। 'अण्' इत्यनेन अ इ उ इतीमे त्रयो वर्णाः सङ्गृहीता भवन्ति। 'अल्' इत्यनेन च सर्वेऽपि वर्णाः सङ्गृह्यन्ते। अन्यथा प्रतिवर्णमुच्चारणं कर्तव्यं स्यात्। प्रत्याहारेण वर्णानामानुपूर्व्येण सन्निवेशात् शास्त्रप्रवृत्तौ लाघवं सम्पद्यते। हल्प्रत्याहारनिर्माणे यद्यपीतरेतराश्रयदोषः प्रादुर्भवति। कुतः? हल्प्रत्याहारज्ञानं विना 'हलन्त्यम्'[३] इतीत्संज्ञा न प्रवर्तेत। इत्संज्ञाज्ञानं विना च 'आदिरन्त्येन सहेता'[४] इति हल्प्रत्याहारो न सम्पद्येत, तथापि तद्दोषव्यावृत्त्यर्थमाचार्यो भगवान् भाष्यकारो वार्तिककारश्च 'हलन्त्यम्' इत्यत्र 'हल् लन्त्यम्' इत्येवं पृथगेकं लकारमपि प्रश्लिष्य हला सह लकारस्यापि विशिष्टस्य इत्संज्ञां वर्णयन्ति[५]। नवीनास्तु 'हल्' इति सूत्रस्यान्त्यं लकारमित्संज्ञकं भवतीति कल्पयन्ति[६]। तेन लकारप्रश्लेषं विनैव 'हल्'सूत्रस्य लकारस्येत्संज्ञा सिद्ध्यति। लकारस्येत्संज्ञां विधाय 'आदिरन्त्येन सहेता' इति सूत्रेण 'हयवरट्' इति हकारादारभ्य लकारं यावत् हल्प्रत्याहारो निर्बाधं सिद्धो भवति। सिद्धे च हल्प्रत्याहारे अण्, अक्, अच् इत्येवमादयः सर्वेऽपि प्रत्याहाराः स्वयमेव सिद्ध्यन्ति।

---

१. वैयाकरणसिद्धान्तकौमुदी, तत्त्वबोधिनी-बालमनोरमासहिता (वै.सि.कौ.), गिरिधरशर्म-सम्पादिता, मोतीलालबनारसीदास, दिल्लीतः प्रकाशिता १९७७; भा. १, सू. १.१.२९, पृ. २२३। तुलनीयम्, महाभाष्यप्रदीपोद्द्योतम्, भा. ३, सू. ३.१.८०, पृ. १५७—'अनेन सूत्रमतापेक्षया प्रत्याख्यानवादिमतं प्रबलमिति ध्वनितम्। एतद् 'धिन्विकृण्व्योश्च' इति सूत्रस्थधिन्वि-कृण्विधात्वोर्वत्वस्थानिकात्वमूलकमेव पठ्यते—यथोत्तरं मुनीनां प्रामाण्यमिति।

२. महा., प्र., भा. २., सू. २.४.२६, पृ. ८६२—'मुनित्रयाच्च भाष्यकारः प्रमाणतरम्, अधिकलक्ष्यदर्शित्वात्'।

३. पा. १.३.३; ४. पा. १.१.७१।

५. महा., भा. १, सू. १.३.३, 'तदुक्तं भाष्यवार्तिकम्—लकारस्यानुबन्धज्ञापितत्वाद् हल्-ग्रहणाप्रसिद्धिः'। तत्समाधानवार्तिकं च—सिद्धं तु लकारनिर्देशात्। हला सह लकारोऽपीत्संज्ञो भवतीति वक्तव्यम्। एकशेषनिर्देशाद् वा'।

६. वै.सि.कौ., भा. १. सू., १.३.३, पृ. ५, 'हल् इति प्रत्याहारसूत्रेऽन्त्यमित् स्यात्'।

एवम् 'अणुदित्सवर्णस्य चाप्रत्ययः'[१] इति ग्रहणकशास्त्रं ब्रुवता सूत्रकारेण प्रत्ययशब्दः श्लिष्ट उपात्तः। अप्रत्यय इत्यस्य प्रत्ययं वर्जयित्वा इत्येकोऽर्थः। प्रतीयते विधीयत इति प्रत्यय इत्येवं यौगिकव्युत्पत्त्या अप्रत्ययः अविधीयमानोऽण् इति द्वितीयोऽर्थः। प्रथमेऽर्थे न्यूनतां पूरयितुं भाष्यवार्तिककारावाहतुः—'अत्यल्पमिदमुच्यत—अप्रत्यय इति। अप्रत्ययादेशटित्किन्मित इति वक्तव्यम्। प्रत्ययादीन् वर्जयित्वा अण् सवर्णान् गृह्णातीति'। अथवा विधीयमानोऽण् सवर्णान्न गृह्णातीति। एतेन 'अप्रत्यय' इति ब्रुवतः सूत्रकारस्यार्थादापन्नं भवति—'भाव्यमानेन सवर्णानां ग्रहणं न भवतीति'[२]। 'अइउण्' इत्यत्र 'लण्' इत्यत्र च द्विर्णकारानुबन्धोऽपि चमत्करोति। द्विर्णकारानुबन्धेन 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्'[३] इति परिभाषा ज्ञाप्यते। तेन अणप्रत्याहारः अणुदित्सूत्रस्थमणं वर्जयित्वाऽन्यत्र सर्वत्र 'उरण् रपरः', 'केऽण्'[४] इत्यादिषु—अ इ उ ण् इति पूर्वणकारेणैव व्याख्यानाद् गृह्यते। इण्-प्रत्याहारश्च 'लण्' इति परसूत्रस्थणकारेणैव व्याख्यानाद् गृह्यते। एवं 'हयवरट्' इत्यत्र 'हल्' इत्यत्र च द्विर्हकारोपदेशोऽपि सप्रयोजनः। पूर्वो हकारोऽट्प्रत्याहारे हकारस्य ग्रहणार्थः। तेन 'अर्हेण' इत्यत्र हकारस्याट्त्वात् तद्व्यवायेऽपि 'अट्कुप्वाङ्नुम्व्यवायेऽपि'[५] इति णत्वं सिद्धं भवति। 'हल्' इत्यपरो हकारः शल्-प्रत्याहारे हकारस्य ग्रहणार्थः। तेन अधुक्षत् इत्यत्र दुह्धातोर्हकारस्य शल् प्रत्याहारान्तर्गतत्वात् 'शल इगुपधादनिटः क्सः'[६] इति च्लेः क्सः सिद्धो भवति।

अत्रावधेयम्—आचार्यः पाणिनिः सर्वदा सर्वत्र चैकामेव शैलीं नानुसरति। एषा ह्याचार्यस्य शैली दरीदृश्यते यदयं लक्ष्यानुरोधात् क्वचिदभिधानमाश्रयति क्वचिन्न्यायं क्वचिद्वचनं चेति[७]। लाघवेन लक्ष्याणां सुपरिग्रहणायायं यथास्थानं तन्त्रावृत्त्यैकशेषेष्वन्यतमेनापीष्टं साधयति, तद्यथा 'नमुने'[८] इति। एवमेवायं लघ्वर्थं स्वकीयं मनोगतं भावं सदा साक्षात् सूत्रोच्चारणेनैव न प्रतिपादयति, प्रत्युत प्रकारान्तरेणापि ज्ञापयति सूचयति च, यथा चाह भाष्यकारः—**'इहेङ्गितेन चेष्टितेन**

---

१. पा. १.१.६९; २. परि.सं. १९।
३. तत्रैव, सं. १।
४. पा. १.१.५१, ७.४.१३; ५. पा. ८.४.२।
६. पा. ३.१.४५।
७. तुलनीयम्, पा. १.२.५३, 'तदशिष्यं संज्ञाप्रमाणत्वात्'।
८. का., भा. ६, सू. ८.२.३, पृ. ३४२, 'योगद्वयमिदमुभयार्थं तन्त्रेणोच्चारितम्'।

**निमिषितेन महता वा सूत्रनिबन्धनेनाचार्याणामभिप्रायो लक्ष्यते'**[१] इति। मण्डूकप्लुतिगोयूथगङ्गाप्रवाहादिलोकन्यायप्रयुक्ताऽनुवृत्तिः (अनुकर्षणम्), सिंहावलोकितन्यायप्रयुक्तमपकर्षणं च पाणिनीयसूत्रशैल्याः प्रधानभूतौ गुणौ चकास्तः। पाणिनेरयमपि स्वभावोऽनुभूयते यदयं गुणा भेदका अभेदका वा, उणादयोऽव्युत्पन्नानि व्युत्पन्नानि वेत्यादिविवादग्रस्तविषयेषु प्रायो मध्यमं मार्गमेवाश्रयमाणो लक्ष्यते, 'कालोपसर्जने च तुल्यमि'त्याद्युक्तेः[२]।

वस्तुतो नेयं सरणिर्दोषकोटिमाटीकते। यतो हि पाणिनेस्तूभयं मतम्, लक्ष्यानुरोधात् क्वचित् किञ्चिदाश्रीयते क्वचित् किञ्चिन्न, उभयगतिरिह भवति। अपि च आचार्येण यदा एकेन ग्रहणेन भूयसां लक्ष्याणां ग्रहणमिष्यते तदायं सर्वनाम्ना निर्देशं करोति। यतो हि एते खल्वपि नैर्देशिकानां वार्त्ततरका भवन्ति ये सर्वनाम्ना निर्देशाः क्रियन्ते। एतैर्हि बहुतरकं व्याप्यते। पाणिनिना नैके एतादृशा व्याख्यानापेक्षाः शब्दा अपि प्रायोजिषत येषां कृते 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्' इति परिभाषोपयुज्यते। व्याख्यानमेवात्र शरणीकरणीयम्[३]। नैकमुदाहरणं योगारम्भं प्रायोजयतीत्यपि पाणिनेः शैली दृग्गोचरीभवति[४]। एकत्राचार्यो मन्दबुद्धीनां सुखप्रतिपत्तये सर्वानुग्रहाय वा गौरवमपि करोति, अपरत्र व्युत्पन्नमतीनां कृते प्रक्रियालाघवमपि सूचयति, यथा—'डः सि धुट्'[५] इत्यत्र प्रक्रियालाघवार्थं तडिति वक्तव्ये धुड्ग्रहणं **वैचित्र्यार्थं** मन्यन्ते वैयाकरणाः।

---

१. द्र.—महा., भा. ३, सू. ८.२.३, पृ. ३८८; न्यासः (का., भा. २, सू. २.२.५, पृ. १०४)—कालाः परिमाणिना इत्यत्र काला इति बहुवचननिर्देशोऽयं मात्राधिक्येन सूत्रप्रबन्धस्यार्थाधिक्यसूचनार्थम्, तथा चोक्तम्—'इहेङ्गितेन लक्ष्यन्त इति'। एवमेव पा. ६.३.११५। सूत्रस्थो न्यासोऽप्यत्र विषये द्रष्टव्यः।

२. पा. १.२.५७।

३. तुलनीयम्—पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना।
आक्षेपोऽथ समाधानं व्याख्यानं षड्विधं मतम्'।।

४. महा., भा. १, सू. १.१.४१, पृ. १००। तुलनीयम्, महा.प्र., भा. १, सू. १.१.१२, 'नैकमिति—अनेककार्यसिद्ध्यर्थं संज्ञासूत्रं नैकेन प्रयुज्यत इत्यर्थः। अन्यत्सूत्रमेकेनापि प्रयुज्यते—'मुद्गादण्' (पा. ४.४.२५) इत्यादि। भाष्यकारोऽन्यत्रापि कथयति—'नैकमुदाहरणह्रस्वग्रहणं प्रयोजयति' (महा., भा. ३, सू. ६.४.३, पृ. १८१)।
बालमनोरमाकारोऽत्र ब्रूते—एकस्य शब्दस्य साधनाय सामान्यसूत्रं नारम्भणीयम्, अन्यथा मुद्गादण् इत्यनुपपत्तेरिति कैयटः (वै.सि.कौ., भा. १, सू. ६.४.३, पृ. २०५)।

५. पा. ८.३.२९।

क्वचिद् द्वयोर्योगयोरेकयोगकरणे सम्भवे सत्यपि यो योगविभागः क्रियते, तेनाचार्यः स्वसूत्रशैल्या वैचित्र्यमेव प्रदर्शयति। यथा चोक्तं काशिकाकारेण— 'ईशीड्जनां सेध्वयोरित्येकमेव सूत्रं न पठितम्? विचित्रा हि सूत्रस्य कृतिः पाणिनेः'[१] इति। आचार्यः पाणिनिः सूत्रनिर्माणं कुर्वन् स्वैरं व्यवहरति, स्वतन्त्रेच्छस्य महर्षेर्नियन्तुमशक्यत्वात्[२]। फलतः प्रसङ्गेऽस्मिन्नयं सौत्रनिर्देशमपि करोति। ये नियमविरुद्धाः प्रयोगाः केवलं पाणिनेः सूत्रेष्वेव तदुपज्ञप्रज्ञोपज्ञाता दृश्यन्ते, ते सौत्रा इत्युच्यन्ते। परन्तु कर्तुमकर्तुमन्यथाकर्तुं वा सर्वथाऽलम्भूष्णुर्भगवान् पाणिनिराचार्यो वन्द्य एवास्ति। तद्यथा—'नेर्गदनदपतपदघु'[३] इति सूत्रे 'द्वन्द्वे घि', 'अल्पाच्तरम्'[४] इति वचनमनपेक्ष्य 'घु' इत्येतस्य पूर्वनिपातमकुर्वता नात्र वचनानुरोधेन प्रवर्तितव्यमपि तु इच्छयैवेति सूचितम्। तेन यत्रेच्छा भवति स एव गृह्यते। फलत इच्छया प्रवर्तितव्यमिति सूचनात् पूर्वोक्तसूत्रे इच्छालक्ष्यानुरोधान् माङ्मेङोरेव ग्रहणं भवतीति युक्तम्[५]।

यत्र तत्र सूत्रोपात्तसंख्यापि पाणिनेः सूत्रशैलीवैचित्र्यं जनयति कलयति वा। तद्यथा—'जक्षित्यादयः षट्'[६] इति। यद्यपि व्याख्याकारैरत्र जक्ष्, जागृ, दरिद्रा, शास्, दीधीङ्, वेवीङ्, चकास् इत्येते सप्त धातव इष्यन्ते, तथापि सूत्रे 'षड्ग्रहणेन' भ्रमस्तूपजायत एव, सप्तानां ग्रहणस्य दुर्ज्ञानत्वात्। वस्तुतस्त्वत्र स्पष्टप्रतिपत्तये 'जक्षित्यादयः सप्त' इत्येवं निर्देष्टव्यम्[७]। सप्तानामेव

---

१. का., भा. ६, सू. ७.२.७८, पृ. ७५९। तुलनीयम्, न्यासः (का., भा. १, सू. १.३.४८, पृ. ४४७) 'व्यक्तवाचां समुच्चारणे इत्यत्र व्यक्तवाचामित्यस्य स्थाने नृणां न कृतमिति वैचित्र्यार्थम्'।

२. (क) महा., भा. १, सू. १.४.३, पृ. ३१३। 'छन्दोवत् कवयः कुर्वन्ति' (कविः क्रान्तदर्शी ऋषिः)।

(ख) प.मं. (का., भा. ५, सू. ६.४.७५, पृ. ४२७ 'स्वच्छन्दमनुवर्तन्ते न शास्त्रमृषयः किल'।

(ग) बालमनोरमा (वै.सि.कौ., भा. १, सू. १.१.१, पृ. ३२) 'स्वतन्त्रेच्छस्य महर्षेर्नियन्तुमशक्यत्वात्'।

३. पा. ८.४.१७; ४. पा. २.२.३२, ३४।

५. न्यासः (का., भा. ६, सू. ८.४.१७, पृ. ६२५)।

६. पा. ६.१.६।

७. महा., भा. ३ सू. ६.१.६, पृ. ११ 'तथा च वार्तिकम्—जक्षित्यादिषु सप्तग्रहणं वेवीत्यर्थम्'।

जक्षित्यादीनामभ्यस्तसंज्ञाया इष्टत्वात्, न तु षण्णाम्, तद्यथा 'शमित्यष्टाभ्यो घिनुण्'[१] इतीष्टमष्टग्रहणं करोति। एवमेव 'अव्ययादाप्सुपः'[२] इत्यनुशासदपि पाणिनिः स्वेच्छया क्वचिदव्ययेभ्योऽपि सुपो लुकं न मृष्यति। तद्यथा— 'अहंशुभयोरुस्'[३] इत्यत्र 'अहम्', 'शुभम्' इत्यनयोरव्यययोरपि सतोराचार्येण षष्ठीद्विवचनं प्रयुक्तम्। यद्यपि 'युस्' प्रत्ययविधाने 'अहंशुभंभ्याम्' इति निर्देष्टव्यमासीत्, प्रत्ययविधौ पञ्चम्या एव न्याय्यत्वात्[४]। अथवा अविभक्तिक एव निर्देशः कर्तव्य आसीत्, यथा 'साक्षाद् द्रष्टरि संज्ञायाम्'[५] इत्यत्र 'साक्षात्'-शब्दोऽविभक्तिक एव निर्दिष्टः, अव्ययत्वेन विभक्त्यभावे पञ्चम्यर्थस्तु गम्यत एव, तथापि विचित्रा ह्याचार्यस्य शैली वर्तते यदयं क्वचिद् विभक्तिं निर्दिशति, क्वचिन्न।

यद्यपि 'तृषिमृषिकृशेः काश्यपस्य'[६] इत्यत्र पाणिनिना पश्चाद्भवस्य कात्यायनस्य 'इक्श्तिपौ धातुनिर्देशे'[७] इति वचनं प्रमाणीकृतं परमयमाचार्यः स्वशैल्यनुसारेण बहुत्र स्थलेष्वर्धजरतीयमनुसरति, अर्थात् क्वचिदिका धातुनिर्देशं

---

१. पा. ३.२.१४१; २. पा. २.४.८२।

३. पा. ५.२.१४०।

४. अत्रावधेयं केचन पूर्वाचार्याः प्रत्ययविधाने पञ्चमीविभक्तिस्थाने षष्ठीविभक्तिं प्रयुञ्जते स्म, तद्यथा क्षीरस्वामी निर्दिशति—'सूददीपदीक्षां च' (पा. ३.१.१५३, भ्वादिगणस्थे षूद्धातौ) 'सनाशंसभिक्षामुः' (पा. ३.२.१६८, भ्वादिगणस्थे शासिधातौ) च। एतेनेदमनुमीयते यदत्र विषये पूर्वेषामनुरोधादेव पाणिनिर्विभक्तिव्यत्ययं चकार।

५. पा. ५.२.९१; ६. पा. १.२.२५।

७. पा. ३.३.१०८, एवमेव छत्वममीति वाच्यमिति वार्तिकमपि (पा. ८.४.६३) गोत्रचरणाच्छ्लाघा (पा. ५.१.१३४) इत्यनेन सूत्रेण प्रमाणीकृतं द्रष्टुं शक्यम्। अनुमीयते पाणिनिना लाघवबुद्ध्या बहवो नियमा न सूत्रबद्धाः कृताः। गोष्पदीभूते पाणिनिव्याकरणे सर्वेषां नियमानां कृतेऽवकाशस्य सम्भावना नास्ति, तद्यथा—'यान्युज्जहारमाहेन्द्राद् व्यासो व्याकरणार्णवात्। पदरत्नानि किं तानि सन्ति पाणिनिगोष्पदे'।। इति। राजशेखरोक्तं 'तद्धितमूढाः पाणिनीयाः' इति वचनमपीदमेव द्रढयति। मन्ये, अत एव 'तृजकाभ्यां कर्तरि' (पा. २.२.१५) इति सूत्रस्य प्रणेता पाणिनिराचार्यः स्वयं 'तत्प्रयोजको हेतुश्च', जनिकर्तुः प्रकृतिः' (पा. १.४.५५) इत्यादिना स्वीयं नियममतिक्रामति। वस्तुतः पाणिनिकाले लोके 'तृजकाभ्यां कर्तरि' इति नियमस्य विकल्प आसीत्। परं शिष्टाः प्रायः समासनिषेधयुक्तमेव प्रयोगं कुर्वन्ति स्म। अतः पाणिनिनापि स एव समासनिषेधनियमः समर्थितः। परं तात्कालिकभाषाव्यवहारे यत्र तत्र स्वल्परूपेणैव तृजकोरपि समासस्य दृष्टत्वात् स्वसूत्रेषु तेन स्वविरुद्धप्रयोगोऽपि परोक्षरूपेण सूचितः।

करोति क्वचिन्न, तद्यथा—'शकिसहोश्च'[१] इत्यत्र तु इका निर्देशः कृतः, किन्तु 'वञ्चिलुञ्च्यृतश्च'[२] इत्यत्र द्वयोरेव धात्वोरिका निर्देशो विहितः, ऋतेश्च न कृत इति वैचित्र्यमेतत्। वस्तुतस्तु शैलीयमाचार्यस्य यत्रायं धातोर्ग्रहणमिच्छति तत्र सन्देहविच्छेदायावश्यं श्तिपा निर्देशं करोति। यत्र च न सन्देहस्तत्र करोति न करोति च। क्वचिद्वृत्तज्ञ[३] आचार्य उच्चारणार्थमनुबन्धमासजति क्वचिन्नेति वैचित्री, तद्यथा 'सुट् तिथोः'[४] इत्यत्र इकार उच्चारणार्थः, परं 'दधस्तथोश्च'[५] इत्यत्र तु नास्त्येवेति चित्रीयां कलयति। विचित्रास्तद्धितवृत्तयः[६]। **तथा चोक्तं राजशेखरेण–तद्धितमूढाः पाणिनीया[७] इति।** अत एव नातः 'उपाद्यमः स्वकरणे'[८] सूत्रस्थस्वकरणशब्दात् तद्धितश्च्विप्रत्यय उत्पद्यते। 'विशिष्टलिङ्गो नदीदेशोऽग्रामाः'[९] इत्यत्र तु सर्वमेव व्याकुलं तिष्ठति। प्रथमं तावद् 'नदीदेश' इति समस्तमसमस्तं वेति न सम्यक् प्रतीतं भवति। किञ्च 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्'[१०] इत्युपक्रम्य 'अनुवादे चरणानाम्'[११] इत्याद्येवं षष्ठीविभक्त्योपक्रमे किमिति 'अध्वर्युक्रतुरनपुंसकम्'[१२] 'विशिष्टलिङ्गो नदीदेशोऽग्रामाः' इति प्रथमाविभक्त्यन्तानामुपन्यासः क्रियते, अर्थात् षष्ठ्यन्तानामेकवद्भावे प्रक्रान्ते

---

१. पा. ३.१.९९।

२. पा. १.२:२४। अत्रावधेयम्—विलक्षणशैलीनां मिश्रणेन शास्त्रान्तरवाक्यसङ्ग्रहकर्म स्मृत्यन्तरोक्तविध्युपसङ्ग्रहणं वाऽनुमीयते यः पूर्वाचार्यानुमोदितः पन्थाश्चकास्ति। एतस्यां स्थितौ उपर्युक्तशैलीवैचित्र्यमेव सूक्ष्मेक्षिकापन्नानामाधुनिकानां विदुषां मतेऽष्टाध्यायीसूत्रपाठे भ्रष्टतामपपाठं प्रक्षेपाशङ्कां च जनयति। एतस्मिन् विषये विशेषाध्ययनाय, द्र.—

(क) Ashok Aklujkar, The Aṣṭādhyāyī as case in textual criticism, procedings of the International saminar pāṇini, University of Poona, 1980; PP. 1-10.

(ख) मदीयो लेखः, अष्टाध्यायीसूत्रपाठेऽव्यवस्था, राजस्थानसंस्कृत-अकादमी-जयपुरतः प्रकाशिता, स्वरमङ्गला-पत्रिका, १९८३, पृ. १८-२९।

३. द्र. महा., भा. १, सू. १.३.९, पृ. २६६—'वृत्तज्ञो ह्याचार्योऽनुबन्धानासजति'।

४. पा. ३.४.१०७; ५. पा. ८.२.३८।

६. महा.. भा. २, सू. ४.२.७०, पृ. २८४।

७. का.मी., अध्यायः ६, पृ. ४८; तुलनीयम्, महा. पस्पशाह्निकः पृ. ८, 'प्रियतद्धिता दाक्षिणात्याः'।

८. पा. १.३.५६; ९. पा. २.४.७।

१०. पा. २.४.२; ११. पा. २.४.३।

१२. पा. २.४.६।

किंहेतुकोऽयमेकवद्भाव: प्रथमान्तानामभिधीयते। नात्र किञ्चिन्निमित्तं विज्ञायते। एतेन केवलमाचार्यस्य सूत्ररचनाशैलीवैचित्र्यमेवात्र स्फुटीभवति। एवमेव 'मन्त्रे वृषेषपचमनविदभूवीरा उदात्त:' इत्यत्रापि 'वीरा' इति पञ्चम्यर्थे प्रथमा चकास्ति। तथा चोक्तमत्र सूत्ररचनावैचित्र्यं प्रदर्शयता काशिकाकारेण—'प्रकृतिप्रत्यययोर्विपरिणाम एव सम्बन्ध:। कस्मादेवं कृतम्? वैचित्र्यार्थम्'[1] इति।

एषाप्याचार्यस्य शैली लक्ष्यते यदयं बहूनां शब्दानां द्वन्द्वे क्वचित् समाहारद्वन्द्वेनैकवचनं निर्दिशति, यथा—'पुच्छभाण्डचीवराण्णिङ्', 'द्युप्रागपागुदीचो यत्'[2] इत्यादि, क्वचिच्च समाहाराविवक्षया द्विवचनबहुवचनाभ्याम्, यथा—'जातिकालसुखादिभ्योऽनाच्छादनात्', 'यत्तदेतेभ्य: परिमाणे वतुप्'[3] इत्यादि। सूत्रकार: समाहारद्वन्द्वविवक्षायामेकवचननिर्देशेऽपि नपुंसकलिङ्गमकृत्वा पुल्लिङ्गमेव भूयो निर्दिशति। एतेन न कोऽपि नियम एकान्ततया परिपालितो भवतीति पाणिने: शैली बहुलं विचित्रा प्रसिद्ध्यति। पाणिनेरिदमपि बहुधाऽवलोक्यते यदयं सूत्ररचनालाघवे सम्भवे सत्यपि[4] मन्दबुद्धीनां सुखप्रतिपत्तये सर्वानुग्रहाय[5] वा यत्र तत्र सन्ध्यभावादिरूपं गौरवमपि स्वीकरोति, यथा—'नाज्झलौ' (नाग्घलौ), 'पाघ्राध्माधेट्दृश: श:', 'वृद्धिरादैच्'[6] इत्यादि। असन्देहोऽपि व्याकरणाध्ययनस्य मुख्यं प्रयोजनम्। अत: स्पष्टप्रतिपत्त्यर्थमेवाचार्यो यथाप्रसङ्गं विभक्तिमपि न प्रयुङ्क्ते, यथा—'वयसि दन्तस्य दतृ'[7] इति। मन्येऽनुक्रियमाणरूपविनाशभियाऽत्र विभक्तिर्न कृता। अन्यथा 'दतृ'शब्दस्य सुविभक्तौ कृतायां 'दतृ' इति रूपं दुर्विज्ञानं स्यात्, 'दता' इति रूपं स्यात्[8]। एवमेव सूत्रकारस्येयमपि शैली नयनगोचरीभवति यदयं यद्यपि सामान्येन तु स्थानिनो निर्देशं षष्ठ्या एव करोति, तथापि स्वतन्त्रेच्छत्वात्, पूर्वाचार्याणामनुरोधेन वा यत्र तत्र प्रथमयापि स्थानिनं निर्दिशति,

---

१. का.भा. ३ सू. ३.३.९६, पृ. ६९।

२. पा. ३.१.२०, ४.२.१०१; ३. पा. ६.२.१७०, ५.२.३९।

४. महा., भा. १, पस्पशा. पृ १, 'लघ्वर्थं चाध्येयं व्याकरणम्'।

५. तत्रैव, भा. १, सू. १.२.३२, पृ. २०९, 'अन्वाख्यानमेव तर्हीदं मन्दबुद्धे:'।

६. पा. १.१.१०, ३.१.१३७, १.१.१; ७. पा. ५.४.१४१।

८. अत्र विषये सूत्रकारस्य शैलीवैचित्र्यं द्रष्टुं होशिआरपुरत: १९८१ तमे वर्षे प्रकाशितायां विश्वसंस्कृतम्-नाम्न्यां पत्रिकायां मुद्रित: 'पाणिनीयाष्टाध्याय्यामविभक्तिका: सौत्रा वा निर्देशा:' इति शीर्षकोपात्तो मदीयो लेखो (सित. १-१३, दिस. १.१०) विशेषेण द्रष्टव्य:।

यथा—'चित:' इति। अत्र भाष्यकारो ब्रूते—'पूर्वसूत्रनिर्देशश्च'। चित्वान् चित् इति[१]।

सूत्रकारस्यायमपि स्वभावोऽनुभूयते यदयं यस्य कस्यापि प्रकरणस्य आधारभूतं सूत्रापरपर्यायमेकं सामान्यं लक्षणं निर्माय पुनरन्यैर्विशेषैः सूत्रैरपि तस्य प्रपञ्चं व्याख्याविस्तरं वा विदधाति, तद्यथा—'पूर्वापरप्रथमचरम'[२] इत्यादीनि विशेषसूत्राणि 'विशेषणं विशेष्येण बहुलम्'[३] इति सामान्यसूत्रस्य प्रपञ्चभूतान्येव सन्ति। नैतत्करणं किञ्चिद् दोषावहं मन्तव्यं प्रत्युत सप्रयोजनमेवेदं स्वीकार्यम्, तथा चोक्तं भाष्यकारेण—'एते खल्वपि विधयः सुपरिगृहीता भवन्ति येषु लक्षणं प्रपञ्चश्च। केवलं लक्षणं केवलः प्रपञ्चो वा न तथाकारको भवति'[४] इति।

किं बहुना, पाणिनेः सूत्ररचनाया वैशिष्ट्यं निर्दोषत्वं च सूचयता भाष्यकारेण प्रशस्तिपरमिदमुक्तम्—**'सामर्थ्ययोगान्न हि किञ्चिदत्र पश्यामि शास्त्रे यदनर्थकं स्यात्'**[५] इति। लक्षणैकचक्षुष्कैर्नवीनैर्भट्टोजिदीक्षितप्रभृतिभिर्वैयाकरणैर्यद्यपि सूत्रकारं प्रति श्रद्धां दधानैरपि लघ्वर्थं स्वबुद्धिप्रकर्षेण पाणिनिसूत्ररचनायां परिवर्तनमुत्प्रेक्षितम्; परन्तु स्फुटबोधाभिप्रायेण तदापातरम्यमेव, तद्यथा—'अकः सवर्णे दीर्घः'[६] इत्यस्य स्थाने 'अकोऽकि दीर्घः' इति, 'नाज्झलौ'[७] इत्यत्र च 'नाऽऽज्झलौ' इत्याकारप्रश्लेष इत्यादि।

सूत्रकारेण पाणिनिना पूर्वं संहितापाठेनैव सूत्राणि पठितानि। तदनन्तरं वृत्तिकारैरन्यैर्वा तदाशयमनुरुध्य सूत्राणां पदपाठो रचितः। प्रायः सर्वत्रेष्टसिद्धावपि क्वचित् पदपाठः सूत्रकाराशयाद् विपरीतोऽपि समजनि, तद्यथा—'यजुष्युरः' इति सूत्रम्। पूर्वं 'यजुष्युर आपो जुषाणो'[८] इत्येवं संहितापाठ आसीत्। तस्य सन्धिच्छेदो द्वेधा भवितुमर्हति—'यजुष्युरः' इति विसर्गान्तः, 'यजुष्युरो' इति ओकारान्तश्च।

---

१. महा., भा. ३, सू. ६.१.१६३, पृ. १०४, अत्रत्यो महा.प्र. अपि द्रष्टव्यः—पूर्वव्याकरणे प्रथमया कार्यो निर्दिश्यत इति। तुलनीयम्, प.मं. (का., भा. ५, सू. ६.४.१२८, पृ. ४८०, 'षष्ठ्यर्थे प्रथमा 'मघवा बहुलम्' इति'।

२. पा. २.१.५८;

३. पा. २.१.५७।

४. महा., भा. २, सू. २.१.५८ पृ. १, अत्रत्यो प्र., द्र. 'केवलेन लक्षणेन मन्दबुद्धिर्विषयविभागं नावधारयति। केवलप्रपञ्चेन वा सामान्यलक्षणरहितेन प्रतिपदपाठवच्छास्त्रस्य गौरवप्रसङ्गः'।

५. तत्रैव, भा. ३, सू. ६.१.७७, पृ. ५४।

६. पा. ६.१.१०१, सूत्रस्था वै.सि.कौ.—'अकोऽकि दीर्घ इत्येव सुवचम्'।

७. पा. १.१.१०१ सूत्रस्था वै.सि.कौ.—'आकारसहितोऽच् आच्, स च हल् चेत्येतौ मिथः सवर्णौ न स्तः'।

८. पा. ६.१.११७-११८।

'यजुष्युरः' इति विसर्गान्तपदच्छेदे वक्षःस्थलवाची उरःशब्दो निःसरति। स च प्रकृतेऽनुपयोगाद् व्यर्थ एव। 'उरो' इति ओकारान्तपदच्छेदस्तु सार्थकः। 'उरु'शब्दस्य महद्वाचकस्य सम्बुद्धौ 'उरो' इति रूपम्। प्रकृतसूत्रेण एङन्त 'उरो' शब्दः अति परतः प्रकृत्या भवति, 'उरो अन्तरिक्ष' इत्याद्युदाहरणम्। 'उरो अन्तरिक्षम्' इति कौमुद्यादिषु पाठस्तु भ्रष्ट एव, यजुषि तथा पाठाभावात्। अत एव केचित् प्रेक्षावन्तस्तु 'यजुष्युरो' इति सन्धिच्छेदं विधाय तथैव सूत्रं पठन्ति[१]। इदं विमृड्भिरवश्यं विमृश्यम्। एषा ह्याचार्यस्य शैली लक्ष्यते यद् येनैवावयवकार्यं भवति, तेनैव समुदायकार्यमपि भवतीति। उदाहरणार्थं येनैव विस्पष्टपटुरित्यत्रावयवकार्यं समासविशेषप्रयुक्तः पूर्वपदप्रकृतिस्वरः क्रियते, तेनैव समुदायकार्यमपि समासः (समाससंज्ञा) भविष्यति—'विस्पष्टादीनि गुणवचनेषु'[२]।

एवमेवायमाचार्यो यत्र प्रथमाद्वितीयाविभक्त्योरेकत्र समृद्य ग्रहणमिच्छति तत्र 'प्रथमयोरिति' निर्देशं विदधाति, यथा—'प्रथमयोः पूर्वसवर्णः', 'ङे प्रथमयोरम्'[३] इति। एवमेवायं खल्वाचार्यश्चित्रीयति यद् धातूनां क्वचिदनेकानर्थानादिशति, क्वचित्त्वेकमिति, क्वचिन्नेति, एकमपि नादिशति, अनेकमार्गमाश्रयतीत्यर्थः। 'दिवादिभ्यः श्यन्', 'तुदादिभ्यः शः', 'भृञामित्'[४] इत्यादिसूत्रेषु धातुपाठस्थधातूनां निर्देशः, 'सर्वादीनि सर्वनामानि', 'पूर्वादिभ्यो नवभ्यो वा', 'लोहितादिकतन्तेभ्यः'[५] इत्यादिसूत्रेषु गणपाठस्थशब्दानां निर्देशाद् गणपाठः, 'उणादयो बहुलम्', 'भूतेऽपि दृश्यन्ते', 'भविष्यति गम्यादयः'[६] इत्यादिसूत्रेषूणादिप्रत्ययनिर्देशाच्च उणादिपाठः कृतो विद्यते। एवं रमणीयायामपि रचनायां कानिचित् सूत्राणि निष्प्रयोजनानीव प्रतिभान्ति, तद्यथा—'रायो हलि'[७] इति सूत्रेण हलादौ विभक्तौ विधीयमानं 'रै'-शब्दस्यात्वं न कुत्राप्युपलभ्यते, 'रै'शब्दस्य केवलवेदैकगम्यस्य हलादौ विभक्तौ रूपानुपलम्भात्। 'रायः', 'राया', 'राये'[८] इत्याद्यजादिविभक्तिष्वेव रैशब्दो वेदे

---

१. का.भा. ४ सू. ६.१.११७, पृ. ५९२, 'अपरे यजुष्युरो इति सूत्रं पठन्ति, उकारान्तमुरुशब्दं सम्बुद्ध्यन्तमधीयते। त इदमुदाहरन्ति उरो अन्तरिक्षं सजूरिति'।

२. पा. ६.२.२४; ३. पा. ६.१.१०२, ७.१.२८।

४. पा. ३.१.६९, ३.१.७७, ७.४.७६।

५. पा. १.१.२७, ७.१.१६, ३.१.१३।

६. पा. ३.३.१,२,३; ७. पा. ७.२.८५।

८. (क) सामवेदे ८७१—'रायः समुद्रांश्चतुरः'।
(ख) यजुर्वेदे ७.१०—'राया वयं ससवांसो मदेम'।
(गा) ऋग्वेदे, १.१८९.१—'अग्ने नय सुपथा राये अस्मान्'।

प्रयुक्तो दृश्यते। किञ्च, 'केतवो रामविन्दन्'[१] इत्यृग्वेदीयमन्त्रे 'राम्' इति रैशब्दस्यात्वे कृते रूपं प्रतीयते। आत्वं च 'रै'शब्दस्य 'रायो हलि' इत्यनुशासनाद् हलादावेव विधीयते। 'राम्' इति चाजादिः, 'अम्प्रत्ययो' द्वितीयैकवचनम्। तत्रैवं सति 'रायो हलि' इत्यस्य वैयर्थ्यमेवापद्यते। इदं चिन्तनीयं मनीषिभिः। 'राम्' इत्यृग्वेदे समुपलभ्यमानः पाठः 'रा'शब्दस्यापि शक्यः सम्भवितुम्; किन्तु 'रा'शब्द एव तावन्नास्ति, कुतस्तरां 'राम्' इति रूपम्।

एवमेव 'अणोऽप्रगृह्यस्यानुनासिकः'[२] इत्यनुनासिकविधायकं सूत्रमपि विमृश्यमवश्यम्। इदं सूत्रं प्रगृह्यभिन्नस्याणः संहितायां पादावसानेऽनुनासिकत्वं विदधाति, यथा—'इदं श्रेष्ठं ज्योतिषां ज्योतिरागात्'[३] इति ऋग्वेदीयमन्त्रस्य 'यथा प्रसूता सवितुः सवायँ' इति तृतीयपादावसाने 'सवायँ' इत्यणोऽनुनासिकत्वं संहितायां दृश्यते। एवमेव 'आमेन्यस्य रजसो यदभ्र आँ अपो वृणाना विनोति मायिनी'[४] इत्यत्रापि 'अभ्र आँ' इति पादावसाने संहितायामनुनासिकः। अस्मिन् प्रसङ्गेऽनेनैवानुनासिकत्वे सिद्धे पुनः 'आङोऽनुनासिकश्छन्दसि'[५] इति आङोऽनुनासिकत्वविधायकं सूत्रमपि व्यर्थमेव। 'पर्षि दीने गभीर आँ उग्रपुत्रे सरस्वति'[६] इत्यत्रापि 'गभीर आँ' इति पादावसाने संहितायामनुनासिकत्वम्। अनुनासिकत्वे सत्यपि सन्धिः कस्मान्न भवति, प्लुतप्रगृह्ययोरेव प्रकृतिभावविधानेन सन्ध्यभावात्[७]। अनुनासिकस्य तु प्रकृतिभावो न केनापि विधीयते। अत्र विमृशो विमृशन्तु। किं संहितायामनुनासिकत्वमेतदर्थमेव क्रियते यत् सन्धिर्न स्यादिति। कैमर्थक्यादिदमनुमीयते? अन्तरेण विधिमनुनासिके सन्ध्यभावश्चिन्त्य एव, किञ्च, अवसानाभावेऽपि ऋग्वेदे बहुत्र संहितायामनुनासिकत्वं दृग्गोचरीभवति, तद्यथा—'कन्येव तन्वा शाशदानाँ एषि'[८] इति। अत्रोषोवर्णने 'शाशदानाँ' इत्यस्य संहितायामनुनासिकत्वम्। एवमेव 'आ ते सुवर्णा अमिनन्तँ एवैः'[९] इत्यत्र 'अमिनन्त' इति क्रियापदेऽवसानाभावेऽपि अणोऽनुनासिकत्वम्। एवमेव 'एवाँ अग्निमजुर्यमुः'[१०] इति ऋग्वेदमन्त्रे 'एवाँ' इत्यस्य संहितायामवसाना-

---

१. ऋग्वेदे, १०.१११.७;
२. पा. ८.४.५७।
३. ऋग्वेदे, १.११३.१;
४. तत्रैव-५.४८.१।
५. पा. ६.१.१२६;
६. ऋग्वेदे-८.६७.११।
७. पा. ६.१.१२५ 'प्लुतप्रगृह्या अचि नित्यम्'।
८. ऋग्वेदे, १.१२३.१०;
९. तत्रैव, १.७९.२।
१०. तत्रैव-५.६.१०।

भावेऽप्यनुनासिकत्वम्। इदं सर्वं (सूत्ररचनाशैलीशैथिल्यम्) विदाङ्कुर्वन्तु विद्वांसः[१]। पाणिनेः सूत्राणि प्रायः सुगमानि, बोधगम्यानि, प्रसादगुणगुम्फितानि च सन्ति, तद्यथा—'धर्मं चरति', 'समवायान् समवैति', 'तेन क्रीतम्', 'तदर्हति'[२] इत्यादि। यत्र तत्र सूत्रेषु छन्दोगन्धोऽप्यनुभूयते, तद्यथा—'वृद्धिरादैजदेङ्गुणः', 'पक्षिमत्स्यमृगान् हन्ति' 'परिपन्थं च तिष्ठति'[३] इत्यादि। जाम्बवतीविजयं काव्यमपि लोके पाणिनेर्नाम्ना प्रसिद्धं शैलीमिमां पोषयति।

आधुनिकसमालोचकैरयं छन्दोगन्धरूपो विशेषः पाणिनिना पूर्वाचार्यैर्गृहीत इति मन्यत इति त्वन्यदेतत्। अद्यत्वे तु कविहृदयैः कैश्चिद्वैयाकरणैः पाणिनिसूत्राणि समाश्रित्य श्लोका अपि प्रणीता दृश्यन्ते, तद्यथा—'पक्षिमत्स्यमृगान् हन्ति[४] परिपन्थं च तिष्ठति[५]। व्रातेन जीवत्यधुना[६] न वशः[७] पूर्ववत्सनः'[८]॥ 'राजन् यद्यपि ते बाहू कान्तालिङ्गनलालसौ। तथापि समरे भेत्तुं शक्तौ हस्तिकपाटयोः'[९]॥ इति। 'औङ्' 'आङ्'[१०] इत्यादयोऽन्येऽपि केचन पारिभाषिकाः शब्दाः पाणिनिव्याकरणे प्राप्यन्ते, पूर्वाचार्यानुरोधेनैव ते प्रयुक्ता मन्तव्याः। अस्तु, 'टिड्ढाणञ्द्वयसच्', 'वुञ्छण्कठ'[११] इत्यादीनि कर्णकटूनि सूत्राणि तु दुःश्रवत्वदोषं नावहन्ति। 'वक्त्राद्यौचित्यवशाद् दोषोऽपि गुणः क्वचित्, क्वचिन्नोभौ'[१२] इति मम्मटभट्टोक्तदिशा वैयाकरणवक्तुरौचित्यवशात् कर्णकटोरपि शब्दस्य गुणत्वेन दोषानभ्युपगमात्, तद्यथा—

---

१. अत्र विषये जयपुरतः १९७७ तमे वर्षे प्रकाशितायां भारतीशोधसारसङ्ग्रहाभिधायां पत्रिकायां मुद्रितः 'प्रयोजन की दृष्टि से पाणिनि के चार सूत्रों की समीक्षा' इति शीर्षकोपात्तो मदीयो लेखः (२७-३५), विशेषेण द्रष्टव्यः।

२. पा. ४.४.४१,४३, ५.१.३७,६३।

३. पा. १.१.१-२, ४.४.३५-३६, अत्र विषये रामशङ्करभट्टाचार्यप्रणीतं 'पाणिनि व्याकरण का अनुशीलन' नामकं पुस्तकं (पृ. ८६-८८) विशेषेण द्रष्टव्यम्।

४. पा. ४.४.३५; ५. पा. ४.४.३६।

६. पा. ५.२.२१; ७. पा. ६.१.२०।

८. पा. १.३.६२; ९. पा. ३.२.५४।

१०. पा. ७.१.१८ (औङ् आपः), ७.३.१२० (आङो नास्त्रियाम्)।

११. पा. ४.१.१५, ४.२.८०।

१२. काव्यप्रकाशः, श्रीनिवासशास्त्रिसम्पादितः, साहित्य-भण्डार-मेरठतः प्रकाशितः, १९८३, सप्तम उल्लासः, कारिका-सं. ५९, पृ. ३७०।

'दीधीङ्वेवीङ्समः कश्चिद् गुणवृद्ध्योरभाजनम्।
क्विप्प्रत्ययनिभः कश्चिद् यत्र सन्निहिते न ते'।।

इति वैयाकरणे वक्तरि सति दुःश्रवत्वं नाम दोषोऽपि काव्ये गुण एव सम्पन्नः, वक्तृबोद्धव्ययोरुभयोरपि रसास्वादात्। अहं तु मन्ये—

'आचार्यः पाणिनिश्चक्रे साधुशब्दानुशासनम्।
यत्र सूक्ष्मेक्षिका गुर्वी क्वचिद् व्यतिशय्यते।।

अम्बुराशेर्यथैकाम्बुव्ययो दोषो न शंसति।
तथैवाचार्यशास्त्रेऽमी स्युर्दोषाः गुणतां गताः।।

संक्षेपेण वयं गोलार्थमुदीरयामो यत् सूत्रकारपाणिनेः सूत्ररचनेयमतिमधुरा रुचिरा सरसा च सती सहृदयमनांसि रञ्जयति चिरं जयति च।

एवमेव वार्तिककारस्य वैदुष्यमपि पदे पदेऽवगम्यते। सूत्रकारशैली-मनुहरन्त्येव वार्तिककारशैल्यपि मनोहरार्थसम्पद्युक्ता चकास्ति। उभावप्याचार्यौ प्रतिस्वमर्थं स्पष्टयन्तावपि न मिथः कलहायेते न मथेते न च द्विष्टः, तद्यथा— 'लोहितादिडाज्भ्यः क्यष्'[१] इति पाणिनिसूत्रं परिवर्तयन् वार्तिककारः प्राह— लोहितडाज्भ्यः क्यष्वचनं भृशादिष्वितराणि' इति। तदेतत् संशोधनमुत्तर-कालवर्तिना भगवता भाष्यकारेण पतञ्जलिना मुनिनाप्यङ्गीकृतम्। अयमाशयो यत् सूत्रकारो लोहितादिगणस्थेभ्यः सर्वेभ्योऽपि प्रातिपदिकेभ्यो भवत्यर्थे क्यषमिच्छति। वार्तिककारस्तु केवलं लोहितशब्दादेव क्यषमाह, तदितरेभ्यः क्यङमेवेच्छति। भृशादिगणं पठित्वा 'भृशादिभ्यो लुक्'[२] इति पूर्वसूत्रेण क्यङ् भवति। लोहितात्तु क्यष्। तेन 'वा क्यषः'[३] इत्युभयपदम्—लोहितायति, लोहितायते इति।

वार्तिककारावपि द्वौ प्रतीयेते। एकः श्लोकवार्तिककारः, अपरः सामान्य-(वाक्य)वार्तिककारः। श्लोकवार्तिककारः स्वीयं विवक्षितं स्वनिर्मितश्लोकैरेव प्रत्याययति, तद्यथा—

---

१. पा. ३.१.१३; २. पा. ३.१.१२।
३. पा. १.३.९०।

'स्तोष्याम्यहं पादिकमौदवाहिं ततः श्वोभूते शातनीं पातनीं च।
नेतारावागच्छतं धारणिं रावणिं च ततः पश्चात् स्रंस्यते ध्वंस्यते च'[1]।। इति।

क्वचित्तु भाष्यकारोऽपि श्लोकं ब्रुवन्नन्तरङ्गं तरङ्गयति, तद्यथा—

'जग्धिविधिर्ल्यपि यत् तदकस्मात् सिद्धमदस्ति कितीति विधानात्।
हिप्रभृतींस्तु सदा बहिरङ्गो ल्यब्भरतीति कृतं तदु विद्धि'[2]।। इति।

'इकः कित्त्वं गुणो मा भूद् दीर्घारम्भात् कृते भवेत्।
अनर्थकं तु ह्रस्वार्थं दीर्घाणां तु प्रसज्यते'[3]।।

इत्ययं तु श्लोकः श्लोकवार्तिककारस्यापि भवितुमर्हति। एवमेव—

'यस्मिंस्तु कर्मण्युपजीयतेऽन्यद् धात्वर्थयोगापि च यत्र षष्ठी।
तत्कर्म कल्मेति च कल्म नोक्तं धातोर्हि वृत्तिर्न रल्त्वतोऽस्ति'[4]।।

इत्यादयः श्लोकाः श्लोकवार्तिककारस्यैव चमत्कारं जनयन्ति।

'उत्तु कृञः कथथो विनिवृत्तौ णेरपि चेति कथं विनिवृत्तिः।
अब्रुवतस्तव योगमिमं स्याल् लुक् च चिणा नु कथं न तस्य'[5]।।

इत्यादीन्युदाहरणानि क्लिष्टस्यापि व्याकरणविषयस्य माधुर्यं व्यञ्जयन्ति भान्ति। अन्यदपि दृश्यताम्।

'औकारोऽयं शीविधौङिद्गृहीतो ङिच्चास्माकं नास्ति कोऽयं प्रकारः।
सामान्यार्थस्तस्य चासञ्जनेऽस्मिन् ङित्कार्यं ते श्यां प्रसक्तं सदो'[6]।। इति।

इमं स्वीयं श्लोकमपि **शालिनीच्छन्दसा** गायन्निव प्रतिभाति वार्तिककारः।

आदौ तावद् वार्तिककारः प्रायः सामान्येन प्रत्येकं सूत्राणां प्रयोजनमभिधाय तदनु विशिष्टया सरलया युक्त्या, दृष्टेन तदनुकूलेन लोकव्यवहारेण प्रमाणेन वा सूत्रस्यान्वाख्यानं प्रत्याख्यानं वा करोतीति वार्तिककारस्य शैली भाष्ये प्रतीता भवति। क्वचिन्न्यासान्तरेण लक्षणया, विवक्षया, अनुवृत्त्या, प्रकृत्यन्तरेण, निपातनेन, योगविभागेन, अभिधानानभिधानेनान्वर्थसंज्ञाविज्ञानेन वा सूत्रस्य प्रत्याख्यानं क्रियते। क्वचिन्न्यूनतापूर्त्यर्थं शिष्यबुद्धिव्युत्पादनाय वार्तिकं प्रणीयते।

---

१. महा., भा. १, सू. १.१.५७, पृ. १४४; २. तत्रैव-सू. २.४.३६, पृ. ४८४।
३. तत्रैव-१.२.९, पृ. १९५-९६; ४. तत्रैव-सू. १.४.५१, पृ. ३३६।
५. तत्रैव, भा. ३, सू. ६.४.२२, पृ. १८९।
६. तत्रैव, भा. ३, सू. ७.१.१८, पृ. २४७।

पुनः स्वयमेव तस्य प्रत्याख्यानमपि क्रियते। नासौ सूत्रकारं प्रति कमपि द्वेषभावं विधत्ते[१]। नूतनां कामपि कमनीयामुद्भावनां कृत्वाप्ययं न च स्वीयमहङ्कारं प्रकटीकरोति। उदाहरणानि यथा—'आद्यन्तवदेकस्मिन्'[२] इति सूत्रस्य सामान्येन प्रयोजनमाह—'सत्यन्यस्मिन्नाद्यन्तवद्भावादेकस्मिन्नाद्यन्तवद्वचनम्' इति भाष्यकार एतस्य वार्तिकस्य व्याख्यानं करोति। पुनः वार्तिककारः सूत्रं सप्रयोजनं मत्वाऽपि न्यासान्तरेण तत्प्रत्याचष्टे—'तत्र व्यपदेशिवद्वचनम्'। भाष्यकारस्तस्य व्याख्यानं करोति, पृच्छति च—'स तर्हि व्यपदेशिवद्भावो वक्तव्यः? न वक्तव्यः। अवचनाल्लोकविज्ञानात् सिद्धम्' इति वार्तिकं पठित्वा वार्तिककारः स्वयमेव व्यपदेशिवद्भावं प्रत्याख्यातुं लोकव्यवहारं प्रदर्शयति।

एवमेव 'न धातुलोप आर्धधातुके'[३] इति सूत्रस्य प्रत्याख्यानाय 'यङ्यक्क्य-नलोपे प्रतिषेधः' इति न्यासान्तरं वार्तिककार उपक्षिपति। अनन्तरं तस्य प्रयोजनान्यन्यथा साधयन् 'अनारम्भो वा' इत्युक्त्वा स तमेव न्यासं प्रत्याख्याति। एवमेव 'ह्रस्वो नपुंसके प्रातिपदिकस्य'[४] इति सूत्रे 'अव्ययप्रतिषेधः' इति वार्तिकमुपन्यस्य पुनः 'न वा लिङ्गाभावात्' इति वचनेन स्ववचनमेव प्रत्याख्याति। 'कर्मणा यमभिप्रैति स सम्प्रदानम्'[५] इति सूत्रे 'क्रियाग्रहणञ्च कर्तव्यम्' इति वार्तिकं न्यूनतापूर्त्यर्थमुपन्यस्तम्। परन्तु तस्य प्रत्याख्यानं भाष्यकृता कृतम्, न तु वार्तिककारेण[६]। भाष्यकारः क्वचिद् वार्तिककारवचनमनुमन्यते, तद्यथा—

१. तुलनीयम्, महा., भा. ३, सू. ८.४.६८, पृ. ४६७ भगवतः पाणिनेः सिद्धम्।
२. पा. १.१.२१; ३. पा. १.१.४।
४. पा. १.२.४७; ५. पा. १.४.३२।
६. अत्रावधेयम्—एषा हि भाष्यकारस्य शैली यदयमेकत्र सूत्रं प्रत्याख्याति, अपरत्र च तदेव प्रत्याख्यातं सूत्रमभिसम्बध्नाति, अर्थात् तेन प्रत्याख्यातेन सूत्रेणापरं सूत्रं प्रत्याचष्टे, तद्यथा—'अनुपसर्जनाद् इत्येष योगः प्रत्याख्यायते, तत्रैवमभिसम्मत्स्यामः—अनुपसर्जन अ अ अदिति' (महा., भा. १, सू. १.१.२७, पृ. ८७)। एवमेव भाष्यकार इतरेतराश्रयशैलीमपि यत्र तत्र प्रयुक्ते, यथा उपर्युक्तं 'क्रियाग्रहणं कर्तव्यम्' इदं वार्तिकमेवास्ति। 'क्रियाऽपि कृत्रिमं कर्म' इति ब्रुवता भाष्यकारेण 'कर्मणा यमभिप्रैति' (पा. १.४.३२) इति भाष्ये इदं वचनं प्रत्याख्यातम्। परमिदं खण्डितं क्रियावचनमाश्रित्यैव भाष्यकारोऽन्यत्र 'गत्यर्थकर्मणि' (पा. २.३.१२) इति सूत्रमपि खण्डयतीति महदाश्चर्यम्। अन्यदपि दृश्यतां यथा—सन्निपातपरिभाषामाधृत्य 'न धातुलोप' सूत्रप्रत्याख्यानं 'न धातुलोप'-सूत्रमाश्रित्य च सन्निपातपरिभाषाप्रत्याख्यानमस्याः शैल्या उत्तमं निदर्शनम्। वस्तुतस्त्वत्र भाष्यकारस्येयं 'पक्षान्तरैरपि परिहारा भवन्तीत्येवंरूपा' व्याख्यानशैल्येव विलसति या खलु टीकाकाराणां मते प्रौढिरेकदेशयुक्तिर्वा चकास्ति। परं पूनावास्तव्याः डॉ. एस.डी. जोशीप्रभृतयः केचनाधुनिका विद्वांस इमां भाष्यकारीयां शैलीममत्वा एतानंशान् प्रक्षिप्तान् मन्यन्ते। लेखकमतौ तु किञ्चिच्चिन्त्यमेतत्।

'लोहितडाज्भ्यः क्यष्वचनं भृशादिष्वितराणि'[१] इति वार्तिकं भाष्यकृतानुमोदितम्। क्वचिच्चासौ वार्तिककारवचनं प्रतिबध्नाति, तद्यथा उपर्युक्तं क्रियाग्रहणं चेति।

त्रयाणामपि मुनीनां मूलाधारः सूत्रमेव। सूत्रप्रणयने हि साधीयसी मनीषा समुन्मिषितापेक्ष्यते। अत एव पाणिनेराचार्यस्य सिद्धत्वात् पाणिनिशब्दो लोके प्रकाशते[२] आकुमारं च यशः पाणिनेः प्रसरति[३]। अत्र सूत्रकारः पाणिनिरितराभ्यां द्वाभ्यामपि मुनीभ्यां महीयते। तदेव पाणिनिप्रणीतं सूत्रमुद्दिश्य वार्तिककारः स्वमनीषया तत्प्रत्याख्याने प्रयतते। क्वचित् स सफलीभवति। क्वचिच्चासौ स्ववचनव्याघातेनैव विहन्यते। भाष्यकार उभाभ्यां मुनिभ्यामुत्तरः सन्नपि सर्वेषामुत्तमो लाघवदृष्ट्या क्वचित् स्वप्रतिभया सूत्रकारं खण्डयति, अर्थात् लघ्वर्थं स सूत्रस्यांशं सकलं वा सूत्रं खण्डयितुं यत्नवान् भवति, तद्यथा—'च्लि लुङि'[४] इति सूत्रे भाष्यकारश्च्लिग्रहणमेव प्रत्याचख्यौ, न तु सम्पूर्णं सूत्रम्, अर्थात् च्लेः स्थाने सिजेवोत्सर्गः कर्तव्य इति भाष्यकाराभिप्रायः। क्वचित्तु सूत्रमखण्डयित्वा वार्तिककारकृतं न्यासमेव खण्डयति, तद्यथा—'भोज्यं भक्ष्ये'[५] इति सूत्रम्। वार्तिककारो 'भक्ष्ये' इत्यस्य स्थाने 'अभ्यवहार्ये' इति परिवर्त्य 'भोज्यमभ्यवहार्ये' इति न्यासमुपक्षिपति। भाष्यकार उभयोः पक्षयोर्निष्पक्षः सन् यदुचितं रुचितं च स्वबुद्ध्या मन्यते तथा निर्णिक्तं निर्णयति। 'यथोत्तरं मुनीनां प्रामाण्यम्'[६] इति वचनाच्च मुनित्रयमध्ये तस्यैव वचनं प्रमाणकोटिमाटीकते। तत्र भाष्यकारो 'भोज्यं भक्ष्ये' इति पाणिनीयं सूत्रमेव साधीयो मन्वानः 'अभ्यवहार्ये' इति वार्तिककारीयं न्यायं न्यासान्तरं वा प्रतिक्षिपति।

एवम् 'आश्चर्यमनित्ये'[७] इति पाणिनीयं सूत्रं वार्तिककार 'आश्चर्यमद्भुते' इति न्यासान्तरेण पर्यवीवृतत्। भाष्यकारस्तु स्वमनीषया 'आश्चर्यमनित्ये' इति पाणिनीयसूत्रमेव स्वीचक्रे। 'अद्भुते' इति वार्तिककारकृतं न्यासं नाङ्गीचकार। एवम् 'न क्वादेः', 'अजिव्रज्योश्च'[८] इत्यादिपाणिनीयसूत्राणां स्थाने वार्तिककारो

---

१. पा. ३.१.१२-१३।

२. का., भा. २, सू. २.१.६, पृ. २२।

३. महा., भा. १, सू. १.४.८९, पृ. ३४७।

४. पा. ३.१.४३;

५. पा. ७.३.६९।

६. वै.सि.कौ., भा. १, सू. १.१.२९, पृ. २२३।

७. पा. ६.१.१४७;

८. पा. ७.३.५९-६०।

'निष्ठायामनिट:' इति न्यासान्तरमुपक्षिप्तवान्। भाष्यकारस्तूभयो: पक्षयोर्मध्यस्थतां भजन् न कमपि प्रत्याचख्यौ। अयमत्राभिसन्धि:—सूत्रवार्तिकभाष्यकाराणां त्रयाणामपि शैली प्राय: सम्मिलत्येव। यतो हि यद् येन कर्तव्यं भवति, स तत् करोति। सूत्रकारेण तु तटस्थेन सता लक्ष्यस्थित्यपेक्षया सूत्राणि निर्मितानि। तेषां सोदाहरणं प्रयोजनं च प्रत्यक्षदृश्यमेव समेषां शेमुषीजुषाम्। समालोचक-पक्षनिक्षिप्तौ वार्तिककारभाष्यकारौ प्राय: परस्परं संवदेते एव, न तु विवदेते। तद्यथा—'न बहुव्रीहौ'[१] इति सूत्रं पाणिनिमते त्वावश्यकमेव, वार्तिककारभाष्यकारयोर्मते त्वनावश्यकम्। वार्तिककारस्तु 'संज्ञोपसर्जनप्रतिषेध:' इत्युक्त्वा तत् प्रत्याचख्यौ। भाष्यकारश्चान्तरङ्गादकचं मन्यमान: सूत्रमद: प्रत्याचचक्षे। उक्तं हि भाष्ये—

'अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गमुक्तसंशयौ।
त्वकत्पितृक: मकत्पितृक इत्येव भाव्यम्'।। इति।

अत्रायं तु विशेषो यदिमावुभावपि भाषाशास्त्राभिप्रायेण लक्ष्यस्थित्यपेक्षया हेयमुपादेयं च तत्त्वतो ज्ञातुकामौ प्रवर्तेते। अनयोरुभयोरपि निष्पक्षयो: समालोचकयोरिदमेव लक्ष्यमलक्ष्यत यत् केनाल्पेन यत्नेन महतो महत: शब्दौघान् प्रतिपद्येरन् इति येन प्रतिपत्तिगौरवं परिहृतं स्यात्। अत एव कात्यायनेन स्ववार्तिकानि पृथगेव रचितानि, सूत्रेषु तेषां प्रक्षेपो न कृत:। अत्र पतञ्जलेरयं प्रयासोऽवश्यं दर्शनीयो यदयं व्यर्थमेव सूत्रं वार्तिकभारग्रस्तं न साधु मन्यते। तस्मादयं प्रतिपत्तिगौरवपरीहारार्थं प्रायो यथान्यासमेव सूत्रं न्याय्यं मन्यते, समर्थयति च—

**'सूत्रेष्वेव तत्सर्वं यद्वृतौ यच्च वार्तिके।**
**सूत्रं योनिरिहार्थानां सूत्रे सर्वं प्रतिष्ठितम्'**[२]।। इति।

अनेकत्र भाष्यकार: सूत्रप्रत्याख्याने सम्भवेऽपि क्लिष्टकल्पनागौरवात् सूत्रमेवानुमोदमान: सूत्रकारं प्रति श्रद्धातिशयमेवम्प्रकारेणाभिव्यनक्ति—'सिद्ध्यत्येवम्। अपाणिनीयं तु भवति। यथान्यासमेवास्तु'[३]। नावश्यमिहैव प्रत्युतान्यत्राप्ययं सूत्रं प्रत्याख्याय पुन: 'आरभ्यमाणेऽप्येतस्मिन् योगे'[४] इत्यादि

---

१. पा. १.१.२९;
२. तन्त्रवार्तिकम्, २.३.११।
३. महा., भा. १, पस्पशा., पृ. १४;
४. तत्रैव, सू. १.१.५६, पृ. १३४।

ब्रुवन् प्रकारान्तरेण सूत्रकारमेव स्तौति। किन्तु प्रयोगाणामन्वाख्यानस्यास्मिन् लघु प्रक्रममार्गे यदि काचित् पाणिनीयसूत्ररचनापि गौरवपूर्णा गरीयसी वा प्रतिभाति, तर्हि तस्या अपि भाष्यवार्तिककाराभ्यां विरोध एव कृतः। प्रसङ्गेऽस्मिन् यत्र तु भाष्यकारः साफल्यमलभत तत्र तु सूत्रप्रत्याख्यानं विधीयते; परन्तु यत्र साफल्यं न लेभे तत्रायं कण्ठरवेण सूत्रकारं स्तोतुमारभते[१]। परमयमुक्तसूत्रकारविरोधः पाश्चात्त्यविद्वत्प्रोक्तः शत्रुमित्ररूपो न ग्राह्यः, प्रत्युत लघुतया संक्षेपेण च सार्धं व्यापकतायुक्तस्य पाणिनीयव्याकरणस्य क्षतिपूरकरूपेण समन्वयात्मक एव स्वीकरणीयः। नात्र कोऽपि कस्यापि शत्रुर्मित्रं वा। भाष्यकारो यथास्थानं पाणिनिना सह कात्यायनायाप्यादरसूचकं भगवच्छब्दं प्रयुङ्क्ते[२]।

भाष्यकारस्य पतञ्जलेरियं विशिष्टा शैली यद् यत्र सूत्रे वार्तिकं भवति तदसौ पूर्वं व्याख्याति। ततः प्रश्नपूर्वकं पृच्छति 'तत्तर्हि वक्तव्यम्' इति। ततस्तन्निराकरोति—'न वक्तव्यम्' इति। उदाहरणं यथा—'यङोऽचि च'[३] इति सूत्रे 'अतोऽचि' इति न्यासान्तरेण वार्तिककृता सूत्रस्य प्रत्याख्यानं कृतम्। भाष्यकारस्तद्व्याख्याय वार्तिकं निराकरोति—'तत्तर्हि वक्तव्यम्? न वक्तव्यम्। इष्टमेवैतत् सङ्गृहीतम्—सनीस्रंसो दनीध्वंस इत्येव भवितव्यम्' इति। एवमेव 'गातिस्थाघुपाभूभ्यः'[४] इति सूत्रे गापोर्ग्रहणे 'इण्पिबत्योर्ग्रहणम्' इति वार्तिकम्। भाष्यकारस्तद् व्याख्याय पृच्छति—'तत्तर्हि वक्तव्यम्'। समाधत्ते—'न वक्तव्यम्। इण्ग्रहणे तावद् वार्तम्। 'गाति' इति निर्देशादेव व्यक्तलुग्विकरणस्य ग्रहणमिति। पाग्रहणे चापि वार्तम्। उक्तमेतत्—सर्वत्रैव पाग्रहणे अलुग्विकरणस्य ग्रहणमिति'। एवमेव 'तनादिभ्यस्तथासोः'[५] इति सूत्रे 'तथासोरात्मनेपदवचनम्, एकवचनग्रहणं वा, अवचने ह्यनिष्टप्रसङ्गः' इति वार्तिकत्रयं व्याख्याय भाष्यकारस्तन्निराकुर्वन्नाह—'तत्तर्हि वक्तव्यम्? न वक्तव्यम्। यद्यपि तावदयं तशब्दो दृष्टापचारः, अस्त्यात्मनेपदम्, अस्ति च परस्मैपदम्। अस्त्येकवचनम्, अस्ति च बहुवचनम्। अयं तु खलु थास्शब्दोऽदृष्टापचारः, आत्मनेपदमेकवचनं च। तत्रास्य कोऽन्यः

---

१. महा., भा. ३, सू. ६.१.७७, पृ. ५४।
'सामर्थ्ययोगान्नहि किञ्चिदत्र पश्यामि शास्त्रे यदनर्थकं स्यात्'।

२. द्र. महा., भा. २, सू. ३.२.३, पृ. ९७।

३. पा. २.४.७४;

४. पा. २.४.७७।

५. पा. २.४.७९।

सहायो भवितुमर्हत्यन्यदत आत्मनेपदादेकवचनाच्च। तद्यथा—अस्य गोर्द्वितीयेनार्थ इति गौरेवानीयते नाश्वो न गर्दभः' इति। एवम्प्रायाण्यनेकान्युदाहरणानि वार्तिकप्रत्याख्यानाय भगवता भाष्यकारेण भाष्ये प्रदत्तानि।

'कृन्मेजन्तः'[१] इति सूत्रे वार्तिककृता प्रोक्तानि सन्निपातपरिभाषाप्रयोजनानि सर्वाण्येव भाष्यकृता समाधानान्तरेण प्रत्याख्यातानि। स्वयं च 'शकटौ', 'पद्धतौ' इत्यादीनि स्वोपज्ञप्रज्ञोपज्ञातानि प्रयोजनानि प्रोच्य स्वीकृतानि। यद्यपि कैयटेन तान्यपि निराकृतानीत्यन्यदेतत्[२]। 'निकुचित' इति 'न धातुलोप'[३]-सूत्रप्रयोजनं सर्वसम्मतमस्ति। भाष्यकृता सन्निपातपरिभाषामाश्रित्य तत् प्रत्याख्यातम्, उक्तञ्च वार्तिकम्—'उदुपधमकित्वस्य निकुचिते' इति। सन्निपातपरिभाषा च 'न धातुलोप'-सूत्रमाश्रित्य प्रत्याख्यातेति 'पक्षान्तरैरपि परिहारा भवन्ति'[४] इति न्यायमनुरुध्य भाष्यकारस्य महतीयमद्भुताश्चर्यभूता च शिष्यबुद्धिव्युत्पादनाय परिगृहीता इतरेतराश्रयमूलिका प्रत्याख्यानशैली। यत्र वार्तिकं न भवति, यथा—'षष्ठी स्थानेयोगा'[५] इति, तत्र स्वबुद्धिप्रकर्षेण सूत्रे प्रबलया वाचोयुक्त्या भाष्यकारः सूत्रं प्रत्याख्याति, या कामपि कमनीयतामावहति। प्रत्याख्यातं च सूत्रं पृच्छति—'न तर्हीदानीमयं योगो वक्तव्यः'? समाधत्ते—'वक्तव्यश्च। किं प्रयोजनम्? षष्ठ्यन्तं स्थानेन यथा युज्येत, यतः षष्ठ्युच्चारिता। किं कृतं भवति—निर्दिश्यमानस्यादेशा भवन्तीति परिभाषा न कर्तव्या भवति'।

भाष्यकारस्येयमपि शैली दरीदृश्यते यदसौ शिष्यबुद्धिव्युत्पादनाय न केवलं चर्चापदानि पठति, प्रत्युत उदाहरणं प्रत्युदाहरणं वाक्याध्याहार इत्येतत् समुदितं शङ्कासमाधानपूर्वकं सूत्रव्याख्यानं करोति। व्याकरणसदृशं रुक्षं विषयमप्यसौ सौविध्येन सुगमतया चावगमयितुं गुडजिह्विकान्यायेन वार्तिककारवद् यथासम्भवं लोकव्यवहारमपि पृष्ठतोऽनुगच्छति[६]। अत एवायं प्रकृतोदाहरणादिसिद्धये

---

१. पा. १.१.३९।

२. द्र.—महा., प्र., भा. १, सू. १.१.३९, पृ. ३१४। 'अच्च घेरिति तपरकरणेनाप्यत्र टाब्निवर्तयितुं शक्यते। इदुतोर्हि स्थाने मात्रिक एवाकारो भविष्यति भाव्यमानत्वाद्वा सवर्णस्याकारो ग्राहको न भविष्यतीति लक्षणान्तरेणापि प्राप्तस्य दीर्घत्वस्य निराकरणार्थं तपरकरणं सम्पद्यते।

३. पा. १.१.४।

४. महा., भा. १, प्रत्याहाराह्निके ॠऌक्-सूत्रम्, पृ. २०।

५. पा. १.१.४९।

६. महा., भा. १, सू. १.२.६४, पृ. २४१—'तेनानेकार्थाभिधाने यत्नं कुर्वताऽवश्यं लोकः पृष्ठतोऽनुगन्तव्यः केष्वर्थेषु लौकिकाः कान् शब्दान् प्रयुञ्जते इति'।

शास्त्रीयवाचोयुक्तिप्रदर्शनानन्तरमपि मनसि अपरितुष्यन्[१] 'द्विर्बद्धं सुबद्धं भवति'[२] इति न्यायमाश्रित्य तदनुकूलेन लोकन्यायापरपर्यायेण लोकव्यवहारेणापि तद् द्रढयति। 'यथा लोके तथा व्याकरणे। यदीदं व्याकरणं लोकाद् भिद्येत ततो यत्नार्हं स्यात्'[३] इत्येवं पदे पदे कण्ठरवेणोच्चारिता भाष्यकारप्रतिज्ञा पूर्वोक्तकथनं स्पष्टमकष्टमुपोद्बलयितुं क्षमा।

यत्र तत्र भाष्यकार: 'अन्यथाकृत्वा चोदितमन्यथाकृत्वा परिहार:' इति वाक्कीलरीतिमनुसृत्य पक्षान्तरेणापि समाधत्ते, 'पक्षान्तरैरपि परिहारा: भवन्तीत्युक्ते:'[४]। एतन्मूलिका शैल्येवोत्तरवर्तिनां व्याख्याकाराणां मते प्रौढिवादापरपर्याया एकदेश्युक्तिरुच्यते[५]। 'शब्दप्रमाणका वयम्। यच्छब्द आह तदस्माकं प्रमाणम्'[६] इत्युद्घोषयन् लक्ष्यैकशरण इष्टिज्ञो वा भाष्यकार आचारतो निवासतश्च शिष्टपदभाजां[७] लोकानां प्रयोगेभ्य एतावन्महत्त्वं प्रददाति। यदयं

---

१. (क) शब्दकौस्तुभ:, भा. २, सू. १.४.९०, पृ. १०७। 'एतदपरितोषादेव वा तत्र पक्षान्तराण्युक्तानीति दिक्'।
(ख) तत्रैव, भा. १, सू. १.१.१२, पृ. १२९। 'अत एवापरितोषाद् भाष्यकारेणाथवेति पक्षान्तरमाश्रितमिति दिक्'। तुलनीयम्, अभिज्ञानशाकुन्तले १.२—। 'आपरितोषाद् विदुषां न साधु मन्ये प्रयोगविज्ञानम्'।

२. महा., भा. ३, सू. ६.१.२२३, पृ. ११९।

३. तत्रैव. भा. १, सू. १.१.१, पृ. ४०, यद्यपि यत्र तत्र (महा.भा. १, सू. १.१.१, पृ. ३९, सू. १.१.२३, पृ. ८१) भाष्यकारेण 'न यथा लोके तथा व्याकरणे' इत्यपि निगदितं परमेतत्कथनमपवादभूतमेव मन्तव्यम्। यतो हि शब्दप्रमाणकानां वैयाकरणा-नामाधारभूतो राद्धान्तस्तु व्याकरणशास्त्रं लोकव्यवहारानुकार्येव मनुते।

४. तत्रैव. प्रत्याहाराह्निके ऋलृक्-सूत्रम्, पृ. २०।

५. द्र., महा.प्र.उ.भा. ३, सू. ३.१.३२, पृ. १०९, भगवतो भाष्यकारस्येति एकदेशिन इति शेष:। अनेन इमेऽपि तर्हि यद्यपि इत्यादिभाष्यग्रन्थ एकदेशिन उक्तिप्रत्युक्तिपरतया प्रौढिवाद एवेति ध्वनितम्। अपि च द्र. महा.प्र.उ., भा. १, सू. १.१.६, पृ. १५३। 'वस्तुतस्त्वत्रत्यमिदं भाष्यमेकदेश्युक्ति:'।

६. महा., भा. १, पस्पशा., पृ. ११।

७. (क) तत्रैव, भा. ३, सू. ६.३.१०९, पृ. १७४—'के पुन: शिष्टा:? वैयाकरणा:। कुत एतत्? शास्त्रपूर्विका हि शिष्टिर्वैयाकरणाश्च शास्त्रज्ञा:.....एवं तर्हि निवासत आचारतश्च (शिष्टा ज्ञायन्ते)'।
(ख) तत्रैव, भा. १, सू. २.४.५६, पृ. ४८८ 'प्राप्तिज्ञो देवानाम्प्रियो न त्विष्टिज्ञ:'।

८. तत्रैव., भा. १, सू. १.३.१, पृ. २५९। 'स चावश्यं शिष्टप्रयोग उपास्य:.....तुलनीयम्—तस्मादाप्तप्रयोगस्य यथाकथञ्चिन्निर्वाह:, न तु यथारुचि पद्ययोग इति धीरा मन्यन्ते (प.मं., का., भा. २ सू. २.२.१२, पृ. ११४)।

शिष्टप्रयोगमुपास्यं मनुते[८]। प्राप्तिज्ञो लक्षणैकशरणो वा नैवं महत्त्वं प्रतिपाद्येत। नैकेषां प्रयोगाणां साधुत्वविनिश्चायिका भाष्यकारप्रोक्ता अभिधानानभिधानव्यवस्था इमं शिष्टप्रयोगमेव प्रमाणत्वेनाङ्गीकरोति[१]। अभिधानप्रसङ्गे भाष्येष्टीनामपि महत्त्वपूर्णं स्थानं वरीवर्ति। 'इष्टमेवैतत् सङ्गृहीतम्'[२] इत्युक्त्वा भाष्यकार इष्टत्वाद् दृष्टत्वाच्च भूयसो लौकिक-(शिष्ट) प्रयोगान् सहसैवानुमन्यते। इतोऽतिरिक्तं शब्दानां व्युत्पत्तौ प्रवृत्तौ च न वस्तुसन्निधानं प्रधानं कारणमपि तु विवक्षैव, अर्थाद् विवक्षा हि शब्दव्युत्पत्तेः प्रधानं कारणम्। कारकाणां विषये तु भाष्यकारो बहुशो विवक्षाशैलीमाश्रयते, 'विवक्षातः कारकाणि भवन्तीत्युक्तेः'। लकारार्थप्रक्रियायां भाष्यकारस्यारोपशैली सविशेषं प्रस्फुटिता निदर्शनीया।

अपि च प्रसङ्गानुरोधात् पाणिनिसूत्राणां क्रमशः सिद्धत्वासिद्धत्वे प्राच्यानां नव्यानां च वैयाकरणानां मतभेदोऽप्यवश्यं द्रष्टव्यो विमर्ष्टव्यश्च भवति, तद्यथा— लज्जते, मज्जति, भृज्जति इत्यत्र क्रमशः 'लस्ज्'-'मस्ज्'-'भ्रस्ज्' धातूनां पूर्वं-सकारस्य 'झलां जश् झशि'[३] इति जश्त्वेन दकारः। ततः 'स्तोः श्चुना श्चुः'[४] इति श्चुत्वेन दकारस्य जकार इति प्रक्रियाक्रमं प्राच्याः काशिकाकारादयः प्रतिपन्नाः[५]। नव्या भट्टोजिदीक्षितप्रभृतयस्तु 'पूर्वत्रासिद्धम्'[६] इत्यसिद्धत्वात् पूर्वं 'झलां जश् झशि' इति जश्त्वस्य प्रवृत्तिर्न भवितुमर्हति। अतः पूर्वं 'स्तोः श्चुना

---

१. तुलनीयम्, महा., भा. २, सू. ३.३.१९, पृ. १४६, 'अभिधानलक्षणाः कृत्तद्धितसमासाः'। अत्रत्यो महा.प्र. द्रष्टव्यः 'कृत्तद्धितसमासानामभिधानं नियामकं लक्षणं त्वनभिज्ञानां तदभिज्ञानसूचकम्'। अत्रावधेयम्—इयं अभिधानानभिधानव्यवस्था भाष्यकारकालं यावत् संस्कृतं व्यावहारिकभाषां ज्ञापयति। यतो हि लोके एतस्य प्रयोगस्याभिधानमस्त्येतस्याभिधानं नास्तीति विवेकः जीवितापरपर्यायाया व्यावहारिकभाषाया विषय एव प्रवर्तते। त्रिमुनि व्याकरणमित्याभाणकेनाप्युक्तं तथ्यं पुष्यति।

२. महा., भा. १, सू. २.४.६२, पृ. ४९१।

३. पा. ८.४.५३।

४. पा. ८.४.४०।

५. का., भा. ६, सू. ८.४.४०, पृ. ६४८। 'स्तोः श्चुना श्चुरित्यत्र काशिकाकारप्रदत्तस्य मस्जति इत्युदाहरणव्याख्यावसरे पदमञ्जरीकार आह मज्जतीति, 'झलां जश् झशि' इति सकारस्य दकारे कृते तस्य श्चुत्वं जकारः। असिद्धत्वं तु जश्त्वस्य न भवति, 'नमुने' इत्यत्र नेति योगविभागात्। न्यासकारस्तु 'मस्जिनशोर्झलि' इति सूत्रे मज्जेरिति कृतश्चुत्वनिर्देशाज्जश्त्वस्यासिद्धत्वमपाकरोति'।

६. पा. ८.२.१।

श्चुः' इति श्चुत्वेन सकारस्य शकारः, ततो 'झलां जश् झशि' इति जश्त्वेन शकारस्य जकार इति क्रमं प्रतिपन्नाः[१]।

एवमेव 'उत्त्थानम्' इत्यत्र 'उदः स्थास्तम्भोः पूर्वस्य'[२] इति विहितः सकारस्य स्थाने पूर्वसवर्णः थकारः। तस्य 'खरि च'[३] इति सूत्रं प्रत्यसिद्धत्वात् चर्त्वं तकारो न भवति। तेन 'उत्थ्थानम्' इति रूपं नव्या दीक्षितादयः प्राहुः[४]। प्राञ्चः काशिकाकारादयस्तु भाष्यमनुसन्धानाः 'खरि च' इति सूत्रं प्रति 'उदः स्थास्तम्भोः पूर्वस्य' इति विहितं पूर्वसवर्णं थकारं सिद्धं मन्यन्ते। तेन थकारस्य चर्त्वेन तकारे सति 'उत्त्थानम्' इति रूपमाहुः[५]। अयमाशयो यद् भाष्यकारमते 'उदः स्थास्तम्भोः' इति सूत्रात् परतः 'खरि च' इति सूत्रपाठात् पूर्वसवर्णस्य सिद्धत्वम्। आधुनिकोपलब्धाष्टाध्यायीसूत्रेषु तु 'खरि च' इति सूत्रस्यानन्तरम् 'उदः स्थास्तम्भोः' इति पठ्यते। अतः 'खरि च' इति सूत्रं प्रति 'उदः स्थास्तम्भोः' इत्यस्यासिद्धत्वमनुमीयते'[६]। किं पुनरत्रार्थसतत्त्वमित्याकाङ्क्षायां भाष्यकारशब्देष्वेव

---

१. वै.सि.कौ., भा. ३, सू. ३.१.७७, पृ. ३५०। भ्रस्जपाके 'ग्रहिज्या' (पा. ६.१.१६) इति सम्प्रसारणम्। सस्य श्चुत्वेन शः। शस्य जश्त्वेन जः। भृज्जति।

२. पा. ८.४.६१; ३. पा. ८.४.५५।

४. वै.सि.कौ., भा. १, सू. ८.४.६१, पृ. १२७-१२८। 'उत्थानम् उत्तम्भनम्-अत्राघोषस्य महाप्राणस्य सस्य तादृश एव थकारः। तस्य 'झरो झरि' (पा. ८.४.६२) इति पाक्षिको लोपः। लोपाभावपक्षे तु थकारस्यैव श्रवणं न तु 'खरि च' इति चर्त्वम्। चर्त्वं प्रति थकारस्यासिद्धत्वात्'।

५. उदः स्थास्तम्भोः पूर्वस्येत्यत्र काशिकाकारप्रदत्त उत्थातेत्युदाहरणव्याख्यावसरे न्यासकारः कथयति—उत्थातेति, 'आदेः परस्य' (पा. १.१.५४) इति सकारस्य महाप्राणस्याघोषस्य तादृश एव पूर्वसवर्णस्थकारः, 'खरि चेति' थकारस्य तकारः, 'अनचि च' (पा. ८.४.४७) इति पूर्वतकारस्य द्विर्वचनम्, 'झरो झरि' इति पक्षे एकस्य लोपः।

६. द्र. बालमनोरमा (वै.सि.कौ., भा. १, पृ. १२८) 'वस्तुतो दीर्घादाचार्याणामित्युत्तरम् 'अनुस्वारस्य ययि परसवर्णः', 'वा पदान्तस्य', 'तोर्लि', 'उदः स्थास्तम्भोः पूर्वस्य', 'झयो होऽन्यतरस्याम्', 'शश्छोऽटि' इति षट्सूत्रीपाठोत्तरं 'झलां जश् झशि', 'अभ्यासे चर्च', 'खरि च', 'वाऽवसाने', 'अणोऽप्रगृह्यस्यानुनासिकः' इति पञ्चसूत्रीपाठ इति 'हलो यमाम्' इति सूत्रस्थभाष्यसम्मतः सूत्रक्रमः। एवं च 'खरि च' इति चर्त्वे कर्तव्ये 'उदः स्थास्तम्भोः' इति पूर्वसवर्णस्य थकारस्यासिद्धत्वाभावाच्चर्त्वे उत्त्थानमिति द्वितकारमेकथकारं च रूपम्, उत्तम्भनमिति तु त्रितकारमेव रूपमिति शब्देन्दुशेखरे प्रपञ्चितम्। अत्र विषये राजस्थानसंस्कृत-अकादमी-जयपुरतः १९८३ तमे वर्षे प्रकाशितायां स्वरमङ्गलाभिधायां पत्रिकायां मुद्रितः 'अष्टाध्यायीसूत्रपाठेऽव्यवस्था' इति शीर्षकोपात्तो मदीयो लेखः (पृ. १८-२९) विशेषेण द्रष्टव्यः।

निवेद्यते—'देवा एवैतज् ज्ञातुमर्हन्ति'[१]। अन्ते श्रितसम्बन्धं निबन्धमिमं **पुष्पिताग्रावृत्तेनोपसंहरन् हरं स्मरन्नहं रुच्यं वचः प्रोच्य विरमामि—**

**'इति मतमुदितं लघौ निबन्धे ह्यभिमतमत्र मया मुनित्रयस्य।**
**जयतु सुललिता प्रियार्षशैली मधुरगुणानुगुणा च पुष्पिताग्रा'।।** इति।

इत्थं यथाक्रमं मुनित्रयकृतानां सूत्रवार्तिकभाष्याणां शैली सङ्क्षिप्य प्रदर्शिता। विस्तरस्तु स्वयं महाभाष्यमवलोक्य ऊह्यः।



१. महा., भा. १, सू. २.४.६२, पृ. ४९२।

# सुदिवदिशब्दयोः शुद्धस्वरूपत्वविमर्शः

**डॉ. हरिश्चन्द्रमणित्रिपाठी**

निदेशकः
प्रकाशन-संस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणस्याम्



लोके भाषायां क्वचित् सुदि-वदि-शब्दप्रयोगः, क्वचित् सुदी, वदीति क्वचित् शुदि-शुदीति, बदिबदीति प्रयोगः। क्वचित् शुति-वतीति प्रयोगोऽपि दृश्यते। एवञ्च प्रयोगेषूक्तशब्दस्वरूपवैविध्यात् स्वभावतो जिज्ञासा जायते, तयोः शब्दयोः किं शुद्धं रूपमिति। अत्र निबन्धे शास्त्रदृष्ट्या विमर्शः क्रियते।

**प्राचीनतमायां माधुरीनामिकायां** (माधुरी - ४।३) **मासिकहिन्दीपत्रिकाया-मतिमहत्त्वपूर्णायां सुप्रतिष्ठितायां श्रीगौरीशंकरहीराचन्द-ओझा-महोदयेन विदुषान्वेषकेण तयोः शब्दयोर्विषये शास्त्रतः शिलालेखादिना प्रमाणेन च बहुधा विमृश्य स्वसिद्धान्तः स्थापितः।**

तस्यायमाशयः—यद्यपि संस्कृतभाषायां सुदि-वदि-शब्दौ अव्ययौ शुक्लपक्ष-कृष्णपक्षयो रूढौ। अत एव सिद्धान्तकौमुद्यामव्ययप्रकरणे स्वरादौ आकृतिगणत्वात् तयोः शुक्लकृष्णपक्षवाचकत्वेन पाठः कृतोऽस्ति। सुदि-वदीत्येतौ द्वावपि शब्दौ प्रकृतिप्रत्ययरूपावयवरहितौ, अत एवावयवार्थशून्यौ रूढ्या शुक्लकृष्णपक्षाभिधायकौ मणिनूपुरादिशब्दवद्रूढौ, सर्वलिङ्गेषु सर्वासु च विभक्तिषु एकरूपत्वादव्ययौ। उक्तञ्च—सदृशं त्रिषु लिङ्गेषु[1]......। तथापि 'सुदि-वदि' इति न शुद्धौ, अपि तु 'शुदि-बदि'-शब्दौ शुद्धौ। शुदि-बदि-शब्दौ न यौगिकौ, न वा रूढौ, नापि योगरूढौ, न चाव्ययौ, न वा कृदन्तौ, न च तद्धितान्तौ; अपि तु शुक्लदिनम्-बहुल(कृष्ण)दिनमिति शब्दयोः पूर्वोत्तरपदयोराद्यक्षरद्वयरूपौ। शुक्लशब्दस्थाने संक्षेपेण 'शु' इति, दिनशब्दस्थाने च 'दि' इति, उभयोः सम्मेलने 'शुदि' इति शुक्लदिनस्य सङ्केताक्षरम्। एवं बहुलदिनमित्यत्र पूर्वोत्तर-

१. सिद्धान्तकौमुद्याम् – अव्ययप्रकरणे, पा.सू. २.४.८२; गोपथब्राह्मणम्, १.१.२६।

पदयोराद्यक्षराश्रयणेन संक्षिप्तसङ्केतः 'बदि' इति। आधुनिके काले सर्वस्यामपि भाषायां विशेषत आङ्ग्लभाषायामेवंविधाः सङ्केतशब्दाः संक्षेपाक्षररूपाः सम्पूर्णस्य शब्दस्य अनेकपदात्मकस्य बोधका बाहुल्येन प्रयुज्यन्ते, यथा—टी.वी., पी-एच्.डी., वी.डी.ओ., बी.एच.यू. इत्यादयः। हिन्दीभाषायामपि भा.ज.पा., स.पा., का.हि.वि.वि., सं.सं.वि.वि. इत्यादयः शतशः शब्दाः सङ्केताक्षररूपाः प्रचलिताः सन्ति। न केवलं पदान्येव सङ्केताक्षरेण प्रदर्श्यन्ते; अपि तु वाक्यान्यपि सङ्केतेन प्रदर्श्यन्ते, प्रसिद्धमेतद् राजकार्येषु। संस्कृतेऽपि अधुना तथाविधाः सङ्केताः क्रियन्ते, सङ्केतैश्च सम्पूर्णाः शब्दास्तदर्थाश्च बोध्यन्ते। **तद्वत् 'शुक्लदिने बहुलदिने' इति वक्तव्ये लाघवात् सङ्केतेनोच्यते 'शुदि-बदि' इति। क्वचिच्च 'शुक्लतिथिः, बहुलतिथिः' इत्यनयोः स्थाने 'शुति', 'वति' इति प्रयोगो दृश्यते।** 'सुदि'-'वदि'-शब्दौ असाधू। एवं 'सुदी'-'वदी'-शब्दावपि असाधू। 'शुदि'-'बदि'-शब्दौ शुद्धौ सङ्केताक्षररूपौ शुक्लदिन-बहुलदिनबोधकौ। बहुलशब्दः कृष्णपक्षपर्यायः। स्वकीयेऽर्थे लेखकेन विदुषा अर्वाचीनतया सिद्धान्तकौमुदीमुपेक्ष्य प्राचीनतमशिलालेखेषु दानपत्रेषु च शुदिबदिशब्दप्रयोगः प्रामाणिकत्वेनाङ्गीकृतः। तद्यथा—

१. कोटाराज्ये शेरगढ़े सामन्तदेवदत्तस्य बौद्धलेखे ६ लिखितम्—'सम्वत् ८४७ माघशुदि ६'। (इण्डियन ऐंटीक्वेरी, जिल्द १४, पृ. ३५१)

२. ग्वालियरप्रान्ते कन्नौजप्रतिहारस्य राज्ञो भोजदेवस्य शिलालेखे 'सम्वत्सरशतेषु नवसु त्रयस्त्रिंशदधिकेषु माघशुक्लद्वितीयायां सं. ९३३ माघशुदि २' लिखितमस्ति। (एपिग्राफिका इण्डिका, जिल्द १, पृ. १५९)

३. हड्डाला-(काठियावाड़) स्थाने कन्नौजप्रतिहारस्य राज्ञो महीपालदेवस्य सामन्तधरणावराहस्य (शकसं. ८३६, वि.सं. ९७१) दानपत्रे 'शकसम्वत् ८३६, पौषसुदि ४ उत्तरायणे' उट्टङ्कितमस्ति।

(एफिग्राफिका इण्डिका, जिल्द ५, लेख-सं. ३५३)

४. खेडा-(गुजरात) स्थाने गुर्जरवंशिनो राज्ञो द्वितीयस्य दद्दाख्य-(प्रशान्तरागस्य) कलचुरी संवत् ३८० (वि.सं. ६८७) कार्त्तिक-सुदि १५ दानपत्रे—'संवत्सरशतत्रयेऽशीत्यधिके कार्त्तिकशुद्धपञ्चदश्यां.......सं. ३८० कार्त्तिक-शु. १५' इति लिखितम्।

(एफिग्राफिका इण्डिका, जिल्द ५, परिशिष्टलेख-सं. ३९५)

५. सीयडोनी-(संयुक्तप्रदेश)स्थानात् प्राप्ते कन्नौजप्रतिहारस्य महाराजाधिराजस्य महेन्द्रपालस्य शिलालेखे—'सम्वत्सरशतेषु नवसु षष्ट्यधिकेषु

चतुरन्वितेषु मार्गशिरमास-बहुलपक्षतृतीयायां सम्वत् ९६४ मार्गवदि ३' लिखितमस्ति। (एपिग्राफिका इण्डिका, जि. ५, परिशिष्टलेख-संख्या २०)

अत्र वर्षमासपक्षतिथयः पूर्णतः संक्षेपतश्च लिखिताः सन्ति।

६. लखनऊपुरातत्त्वसङ्ग्रहालये (म्यूजियमे) सुरक्षिते कन्नौजस्य गहडवालवंशिनो महाराजाधिराजस्य श्रीगोविन्दचन्द्रदेवस्य कमौलीग्रामाल्लब्धे दानपत्रे—'षट्सप्तत्यधिकैकादशशतसम्वत्सरे ज्येष्ठमासे कृष्णपक्षे पञ्चदश्यां तिथौ रविदिनेऽङ्कतोऽपि संवत् ११७६ ज्येष्ठवदि १५ रवौ' लिखितमस्ति। (एपिग्राफिका इण्डिका, जि. ५, लेख-सं. ९०)

७. मान्धातुः (महेश्वराद् इन्दौरराज्यात्) प्राप्ते मालवाप्रान्तस्य परमारराजस्य जयदेवसिंहस्य दानपत्रे—'संवत् १११२ आषाढ-वदि १३' लिखितमस्ति। (एपिग्राफिका इण्डिका, जि. ५, ले.सं. ६७)

८. कन्नौजस्य प्रतिहारवंशीयमहाराजाधिराजस्य त्रिलोचनपालदेवस्य दानपत्रे बङ्गाल-एशियाटिक-सोसाइटीसङ्ग्रहे सुरक्षिते—'सं. १०८५ श्रावण-वदि ४' लिखितमस्ति। (एपिग्राफिका इण्डिका, जि. ५, लेख-सं. ६०)

उपर्युक्तेषूदाहरणेषु शिलालेखदानपत्रात्मकेषु स्पष्टतया प्रतीयते यद् एतयोः शब्दयोः प्रयोगः प्रायेण संयुक्तप्रदेशे राजपुतानाप्रदेशे मालवागुजरातकाठियावाडेषु पश्चिमोत्तरप्रदेशेष्वभूत्।

बङ्गप्रदेशे सौरगणनाप्रधानत्वात् तत्र सुदिवदिशब्दयोः प्रयोगाल्पता दृश्यते। शब्दकल्पद्रुमे कोषे सुदिशब्दोऽव्ययत्वेन गृहीतः पश्चिमप्रदेशे प्रसिद्धः। वदिशब्दस्तत्र न दृश्यते। वाचस्पत्यबृहदभिधानकोषे सुदिशब्दः शुक्लपक्षसूचकः 'अव्ययम्' इति वर्णितम्। वदिशब्दस्तत्रापि नोपात्तः। तत्र बहुलशब्दो बहलशब्दो वा कृष्णपक्षसूचकः, शुक्लः शुद्धश्च शुक्लपक्षसूचक इति च लिखितम्।

सुदि-वदि-शुदि-बदि-शब्दा न वर्णपदवाक्यरूपाः; अपि तु शुक्लबहुलपक्षसङ्केताक्षरमात्रपरा इति निर्णीतं लेखकमहोदयेन।

एवमस्मिन्नर्थे 'सुति-वति'-शब्दावपि दृश्येते दानपत्रशिलालेखादिषु। न चैतौ शब्दौ क्वचित् कोषे व्याकरणे काव्ये वा दृश्येते। इमावपि शुक्लतिथिबहुलतिथिशब्दयोः संक्षिप्तसङ्केताक्षररूपावेवेति शुति-वति-शब्दप्रयोगादेव विज्ञायते। 'शुदि-बदि'-शब्दावपि तथा शुक्लबहलदिनसङ्केतपरावेवेति न स्वतन्त्रौ शब्दौ तत्तदर्थवाचकौ।

१. शुति-वति-प्रयोगे उदाहरणं यथा— देहल्यां फिरोजशाहकोटलायां गृहोपरि सुरक्षिते महाराजाशोकलेखयुक्ते विशाले स्तम्भे, सुल्तानफिरोजशाह-तुगलकेन पञ्जाबप्रान्ताद् अम्बालानगराद् आनीते अजमेरप्रान्तस्य चौहानराजस्य वीसलदेवस्य त्रयो लेखा उट्टङ्किताः सन्ति, येषु एकस्मिन्—'संवत् १२२० वैशाख-शुति १५', द्वितीये—'संवत् श्रीविक्रमादित्ये १२२० वैशाख-शुति १५ गुरौ' इति लिखितमस्ति। (इण्डियन ऐंटीक्वेरी, पृ. २१८)

२. सुंगल-(चम्बाराज्ये)स्थानात् प्राप्ते राज्ञो विदग्धस्य दानपत्रे—'प्रवर्धमाण(न)कल्याणविजयवत्सराजसम्वत्सरे चतुर्थे संवत् ४ माघ-शुति-प्रतिपद्(त्) १' इति लिखितमस्ति। (डॉक्टर फोजल—ऐंटीक्विटीज् ऑफ दि चम्बा स्टेट, पृ. २६७)

३. तूरगाँवस्थानात् (चम्बाराज्ये) प्राप्ताया एकस्या मूर्त्तेरधोभागे लेखे—'माघशुतिद्वादश्यां भौमवासरे प्रतिष्ठितमि'ति टङ्कितम्। (डॉ. फोजल—ऐंटिक्विटीज् ऑफ दि चम्बा स्टेट, पृ. १७३)

४. वियेना-लाइब्रेरी-(आष्ट्रिया) सुरक्षिते डॉ. बूलरसंगृहीते शारदा-(काश्मीरी)लिपिलिखिते हस्तलिखितपुस्तके अन्ते—'श्रीविक्रमादित्यशकाः १७३२, श्रीमच्छालिवाहनशकाः १५९७, श्रीमदौरङ्गशाहशकाः १८, श्रीसप्तर्षिचारमतेन संवत् ५१ वै. शुति १० शनौ' इति लिखितमस्ति। (इण्डियन ऐंटीक्वेरी, जिल्द-सं. २०, पृ. १५२, संख्या ७)

५. ब्राह्मोर-गाँव-(चम्बाराज्ये) स्थाने प्राप्ते राज्ञो युगाकरवर्मणो दानपत्रे—'सम्वत् १० वैशाख-वति १०' इति लिखितम्। (डॉ. फोजल—ऐंटिक्विटीज् ऑफ दि चम्बा स्टेट, पृ. १६२)

६. डडवारस्थाने (चम्बाराज्ये) प्राप्ते शिलालेखे 'सम्वत् १७ ज्येष्ठ-वति १२ बुधवासरे रेवतीनक्षत्रे' इति टङ्कितम्। अयं संवत् १७ सप्तर्षि-संवत् (शास्त्रसंवत्, विक्रमसंवत् १०९८) अस्ति। (डॉ. फोजल—ऐंटिक्विटीज् ऑफ दि चम्बा स्टेट, पृ. १७७)

७. हरिपर्वतस्य एकस्मिन् शिलालेखे 'सं. ६० श्रा.वति.प्र. शुक्रे मुहम्मदशाहराज्ये' इति टङ्कितमस्ति। अस्मिन् लेखे श्रा(=श्रावणस्य), वति(=बहुलतिथेः), प्र(=प्रतिपदः) शब्दाः संक्षेपबोधकाः सन्ति। अयं संवत् अपि सप्तर्षि-संवत्, यो वैक्रमे १४४१ भवति।

(इण्डियन ऐंटीक्वेरी, जि. २०, पृ. १५३, सं. ९)

८. डॉ. सर ओरल स्टाइल-महोदयेन प्राप्तायां शारदालिपिनिबद्धायां रत्नावलीनाटिकायाम् अन्ते—'सं. ६९ चैत्र-वति-एकादश्यां चन्द्रवासरे श्रवणनक्षत्रे' इति लिखितमस्ति। (इण्डियन ऐंटीक्वेरी, जिल्द-सं. २०, पृ. १५३, संख्या १०)

एतैरुदाहरणैर्ज्ञायते यत्—संयुक्तप्रदेशराजपुतानामालवागुजरातकाठियावाडादिस्थानेषु 'शुदि-बदि'-प्रयोगः प्रसिद्धः। तथैव पञ्जाबकाश्मीरादिप्रदेशेषु शुति-वति-प्रयोगः प्रसिद्धः। एतेनोदाहरणजातेन युक्तिभिश्च विचारेण निर्णयो भवति यत्-'शुदि-बदि-शुति-वति'-शब्दा न स्वतन्त्राः; अपि तु शुक्लबहुलपक्षदिनतिथि-सङ्केतपराः सन्ति। तेषां शुक्लादिशब्दानामाद्यक्षराण्यादाय एते शब्दा लिखिता भवन्ति। सुदि-सुदी-वदि-वदी-शब्दा असाधव एव। सुदि-वदि-शब्दौ सिद्धान्तकौमुद्यां पठितौ अव्ययौ न प्रामाण्यमर्हतः, स्वल्पकालप्रभवत्वात् सिद्धान्तकौमुद्या इति लेखकमहोदयस्याशयः।

अत्र मयापि विमृश्य विदुषां समक्षं किञ्चिद् उपस्थाप्यते। लाघवेन स्वाभिप्रायवर्णनं स्वभावो विदुषामविदुषां वा। शास्त्रेषु च समस्तेषु लाघवस्य समादरो दृश्यते, गौरवस्य च दोषावहत्वम्। अर्द्धमात्रालाघवेन वैयाकरणाः पुत्रोत्सवं मन्यन्त इति वैयाकरणनिकाये प्रसिद्धम्। शास्त्रेषु च किञ्चिदुक्त्वा सम्पूर्णस्येति शब्देन इत्यादिशब्देन च निर्देशः क्रियते। यथा 'पाघ्राध्मेति'[१] सूत्रम्, 'ज्वरत्वरेति'[२], 'अइउण्' इत्यादि-चतुर्दशसूत्राणि। एवंविधाः प्रयोगा लाघवमूलका भवन्ति।

अत एव भगवता पाणिनिना 'आदिरन्त्येन सहेते'[३]ति सूत्रमारभ्यते प्रत्याहारार्थम्। प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा यस्मिन् स प्रत्याहारः। 'अच्' इति अकारादिचान्तसमुदायघटकानां वर्णानां संज्ञा। एवं हल्-झल्-इत्यादिष्वपि बोध्यम्। 'अइउण्' इत्यादि-सूत्रस्य आद्यक्षरमकारमादाय 'ऐऔच्' इति सूत्रान्तिमेन चकारेण सहोच्चारणे 'अच्' इति मध्यगानां स्वस्य च बोधिका संज्ञा। इयं प्रक्रिया लाघवेन शास्त्रप्रवृत्त्यर्था। ज्यौतिषशास्त्रेऽपि गुरुपदानां स्थाने लाघवात् तद्घटककतिपयवर्णपदं प्रयुज्यते। यथा 'अहोरात्र'-स्थाने 'होरा' इति। अत्र अहोरात्र-पदे आद्यन्ताक्षरलोपे होरेति शब्दः। स च अहोरात्रवाचकः। अहोरात्रे च षष्टिघट्यो भवन्ति। तदवयवेष्वपि होराशब्दः प्रयुज्यमानो दृश्यते। यथा होरा(घण्टा)द्वयं होरात्रयमित्यादि। तथा जातकशास्त्रं ज्योतिषस्कन्धभूतमपि

---

१. पा.सू. ६.३.७८;     २. तदेव–६.४.२०।

३. तदेव–१.१.७१।

होराशब्देनोच्यते। एतस्य शब्दस्य 'पृषोदरादीनि यथोपदिष्टमि'[१]ति पाणिनीयसूत्रेण यथोपदेशं सिद्धिः क्रियते। यथोक्तं बृहज्जातके सारावल्यादिग्रन्थे—

'होरेत्यहोरात्रविकल्पमेके वाञ्छन्ति, पूर्वापरवर्णलोपात्'।

(बृ.जा. १.३)

आद्यन्तवर्णलोपाद्धोराशास्त्रं भवत्यहोरात्रम्।

तत्प्रतिबद्धश्चायं ग्रहभगणश्चिन्त्यते यस्मात्।। (सारावली-२.२)

एवं पुराणेष्वपि 'शतक्रतुः' इत्यस्य स्थाने 'शक्रः' इति प्रयुज्यते। तत्र 'श' इत्यक्षरं शतशब्दस्य क्रेति क्रतुशब्दस्य चोपस्थापकम्; किन्तु शक्रशब्दश्रवणे शतक्रतुशब्दस्वरूपमनुपस्थाप्यैव शक्रशब्द इन्द्रार्थस्य बोधको भवति, तथानुभवात्। यथा वा साहित्ये द्विरेफशब्दो रेफद्वयघटितभ्रमरपदस्य बोधकः, भ्रमरशब्दश्च मधुकरार्थोपस्थापक इति लक्षितलक्षणाया उदाहरणम्।

तत्रापि द्विरेफपदं रेफद्वयवत्त्वमबोधयित्वैव मधुकरार्थोपस्थापकम्। एवं सुरभारत्यां प्राचीनकालादेव लाघवात् क्वचित् मध्याक्षराभ्यां, क्वचिद् आद्यन्ताक्षराभ्यां, क्वचिच्च तद्घटिताक्षरवत्त्वेन पूर्णार्थस्य बोधकाः सङ्केतरूपाः शब्दा दृश्यन्ते।

तत्र सर्वत्रापि अपदं न प्रयुञ्जीतेति महाभाष्यकारमर्यादया पदत्वं दृश्यते। सुबन्तं तिङन्तञ्च पदम्। तत्राल्पाक्षरसङ्केतात्मकशब्देष्वपि सुब्विभक्तिः पदसंज्ञा च भवति। अन्यथा तेषां शब्दानामसाधुत्वमापतेत्।

आङ्ग्लभाषायामपि सङ्केताक्षरसमुदायः प्रयुज्यमानो दृश्यते, यथा—News न्यूज्-शब्दः। अत्र N अक्षरं नार्थ-बोधकं, E शब्द ईस्ट-बोधकः, W शब्दो वेस्ट-बोधकः, S शब्दश्च साउथबोधक इति चतुर्दिग्बोधको न्यूज्शब्दश्चतुर्दिक्-सम्बन्धवृत्तोपलक्षकः।

प्रकृते शुदि-बदि-शब्दावपि शुक्लपक्षबहुलपक्षबोधकौ निर्देशकौ वेति नात्र काचन विप्रतिपत्तिः, तथाविधप्रयोगस्य बहुलोपलम्भात्; किन्तु शङ्का जायते यदि इमौ तथाविधौ, तर्हि तत्र विभक्तिसहितप्रयोगेण भवितव्यम्, अन्यथा पदत्वाभावाद् असाधुत्वं स्यात्। न च 'सामान्ये नपुंसकम्' रीत्या नपुंसकत्वमाश्रित्य 'स्वमोर्नपुंसकात्'[२] इति सूत्रेण तत्र लुका भवितव्यमिति वाच्यम्, तृतीयादिविभक्तिषु लोपाभावाद् विभक्तिश्रवणप्रसङ्गात्। न च

१. पा.सू. ६.३.१०९; २. तदेव – ६.१.२३१।

दानपत्रशिलालेखादिषु विभक्तिर्दृश्यते। न च शुदि-बदिशब्दावपि अव्ययाविति वाच्यम्, शुदि-बदिशब्दयोः स्वरादिगणे पाठाभावात्। तथा च 'अव्ययादाप्'[१] इति विभक्तिलोपे सति एकरूपतैव सर्वस्यां विभक्तौ। यथोक्तम्—

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्।। इति।

न च स्वरादेराकृतिगणत्वादेवाव्ययत्वमिति वाच्यम्, तथाविधसम्प्रदायाभावात्। अपि च सुदिवदिशब्दावेव पठितौ आकृतिगणत्वात् स्वरादौ दृश्येते। न च प्रमादादेव शुदिबदिस्थाने सुदिवदीति स्वरादौ पठितमिति वाच्यम्, बहुतरमनः-प्रणिधानपूर्वकपूर्वसम्प्रदायसिद्धगणपाठेषु प्रमादासम्भवात्। किञ्च शिलालेखेषु दानपत्रेष्वेव वा सुदिवदिस्थाने शुदिबदीति प्रमादात् लिखितं स्यात्, तत्र प्रमादस्य लब्धावसरत्वात्। यतो हि दानपत्रशिलालेखका न वैयाकरणा भवन्ति। लेखोपजीविनां साधारणानां टङ्ककानां लिपिकाराणां च प्रमादसम्भवात्। प्राचीनहस्तलिखितपुस्तकेष्वपि अस्माभिः पठ्यमानेषु लेखककृतदोषाः, अशुद्धयो वा बाहुल्येनोपलभ्यन्ते। न हि पण्डिता एव प्राचीनकाले लिपिलेखका बभूवुः; अपि तु ये लेखनेन जीविकामुपार्जितवन्तः; त एव लेखका आसन्। ते न व्याकरणज्ञाः, न वा शास्त्रज्ञाः; अपि तु लिपिशिल्पकरा बभूवुः। एवञ्च सम्भवेन्नाम 'सुदिवदि'-स्थाने प्रमादात् शुदिबदिलेखनं शुतिवतिलेखनञ्च। न च व्याकरणशास्त्रे तथाविधप्रमादस्य स्थानम्।

किञ्च शब्दसाधुत्वे न कस्यचिद् अनाप्तस्य मुनित्रयरहितस्याप्तस्य वा कस्यचित् शिलालेखस्य दानपत्रस्य वा प्रामाण्यं शक्यते वक्तुम्, तेषां देशकालेतिहासवृत्ते प्रामाण्यास्पदानां शब्दसाधुत्वे प्रमाणाभावात्। तत्र व्याकरणस्यैव परमं प्रामाण्यं विद्वद्भिः सर्वैरङ्गीक्रियमाणं दृश्यते। अतो लेखबलेन सुदिवदिशब्दौ सिद्धान्तकौमुद्यामव्ययप्रकरणे पठितौ अप्रामाणिकौ तस्या अर्वाचीनत्वादीत्युक्तिः साहसमात्रम्।

सिद्धान्तकौमुदी वृत्तिग्रन्थः श्रीमद्भट्टोजिदीक्षितविरचितः। न च तत्र महान् आचार्यः किञ्चित् कामकारेण लिखति; अपि तु सूत्रवार्त्तिकभाष्यकैयटप्रभृत्याचार्यसम्मतं व्याकरणं पूर्वपरम्पराप्रसिद्धं व्युत्पादयति। न गणपाठेषु अप्रामाणिकमसम्बद्धं वा क्वचित् तत्र उपलभ्यते। अतः पूर्वसिद्धा एव स्वरादिगणशब्दास्तत्र निर्दिष्टाः, न स्वबुद्धिकल्पिताः। तथा च तस्याः सिद्धान्तकौमुद्यास्त्रिमुनिप्रामाण्यानुसारित्वात् प्रामाण्यं न शक्यते कम्पयितुम्।

१. पा.सू.-२.४.८२।

तस्माद् अव्यये पठितौ सुदिवदिशब्दौ सर्वविभक्तिवचनलिङ्गेषु समानरूपत्वात् शुक्लबहुलपक्षवाचकौ मणिनूपुरादिवद् रूढौ प्रामाणिकौ मन्तव्यौ। न तत्र विप्रतिपत्तिः कार्या।

**शिलालेखादिषु प्रयुज्यमानौ शुदिबदि-शुतिवतिशब्दानाम् इदानीं गतिश्चिन्त्या।**

तत्र भवतु नाम इमे शब्दाः शुक्लबहुलपक्षसूचका आद्याक्षरयोजिता लाघवाल्लेखशिल्पाद् वा प्रयुक्ताः। तत्र नास्माकं विप्रतिपत्तिः। तद्बलात् सुदिवदिशब्दौ अव्ययौ प्रामाणिकौ न स्त इति वचनं न युक्तिसङ्गतमस्ति, व्याकरणस्यैव शब्दसाधुत्वे परमप्रमाणात्।

१. शिलालेखादिषु प्रयुक्ताः शुदिबदिशुतिवतिशब्दा नूनं लाघवाच्छुक्लबहुलपक्षतिथिनिर्देशरूपाः, ते चैकादेशानुकरणरूपास्तदनुकार्याश्च शुक्लबहुलपक्षतिथिशब्दाः स्वार्थबोधकाः। अनुकार्यानुकरणयोः पक्षद्वयं भेदोऽभेदश्च। तत्र भेदपक्षे अनुकार्यनिरूपिता शक्तिरनुकरणे कल्प्यते। तदा च वृत्तिमत्त्वाद् अर्थवत्त्वाद् अनुकरणात्मकस्य शब्दस्य प्रातिपदिकत्वं पदत्वं च सम्भवति। यदा चोभयोरभेदविवक्षा, तदा अभेदाद् अत्यन्तसादृश्यादेवार्थस्यानुकार्य-रूपस्योपस्थापकत्वाद् वृत्तिमत्त्वाभावान्न प्रातिपदिकत्वं न वा पदत्वमिति। यथा **गवेत्ययमाह, गवीत्ययमाहेति।**

अत्र शुदि-बदिशब्दौ शुक्लदिनबहुलदिनशब्दयोराद्यक्षरानुकरणपरौ अनुकार्यशब्दौ च। तत्र शुदिबदिशब्दौ स्वसमानघटितवर्णवत्त्वेन सादृश्यात् शुक्लदिनबहुलदिनशब्दयोरुपस्थापकाविति न प्रातिपदिकत्वं न वा पदत्वमिति तादृशप्रयोगस्य निर्विभक्तिकस्य साधुत्वं शब्दानुशासनसिद्धम्। यद्यपि अनुकार्यं शुक्लघटकं 'शु' इति, दिनघटकं 'दि' इति। एवं शुतिवतीत्यत्र तिथि-घटक-तीति, तथापि तद्घटितत्वेन एकदेशानुमत्या वा शुक्लदिनबहुलतिथिशब्दा अनुकार्या भविष्यन्ति।

२. अथवा यथा द्विरेफपदं स्वशक्यरेफद्वयवत्त्वेन भ्रमरं बोधयित्वा मधुकरमर्थं बोधयति। अर्थात् स्वशक्यघटितभ्रमरपदप्रतिपाद्यत्वसम्बन्धेन मधुकरे द्विरेफपदस्य लक्षणा, सा च लक्षितलक्षणेत्युच्यते, तथा शुदिबदिशब्दावपि स्वशक्य=(शु, दि, ब, दि) इति तद्घटिताः शुक्लदिनबहुलदिनशब्दाः, तत् प्रतिपाद्याः शुक्लबहुलदिवसास्तद्बोधकौ भविष्यतः। अर्थात् शुशब्दः स्वशक्यघटितशुक्लशब्दप्रतिपाद्यार्थस्य बोधकः। स्वं='शु' इति शब्दः, तच्छक्यं

'शु' इति शब्दस्वरूपं तद्घटितं शुक्ल इति रूपम्, तत् प्रतिपाद्यः शुक्लोऽर्थः। एवं 'शुति'-'वति'-शब्देष्वपि बोध्यम्। एवञ्चोक्तपरम्परासम्बन्धेनाक्षरनिर्देशपराः सर्व एव शब्दा लक्षणया स्वशक्यार्थलक्षका इति युक्तं प्रतिभाति। इयं च रीतिः अक्षरेण निर्देशे सर्वत्र साध्वी; परन्तु अस्मिन् पक्षे शुदिबदिशुतिवतिशब्देषु सर्वत्रैव प्रातिपदिकत्वात् स्वादिविभक्तौ सत्यां पदत्वं दुर्वारम्। न च शुदिबदीत्यादिशब्देषु विभक्तिरूपं लभ्यते। **शक्रहोरादिशब्देषु** पदत्वं सुबन्तत्वं दृश्यते। इह तु न दृश्यते। अतोऽनुकरणपक्ष एव ज्यायान् प्रतिभाति। न चानुकरणमपि 'इति'-परं दृश्यते—पटदिति, पटपटेति, गवीति, भूरिति, आप इति। तत्र शुदीति बदीति न दृश्यत इति वाच्यम्, अनुकरणस्यानितिपरस्यापि सम्भवात्। यथा भू सत्तायाम्, एध वृद्धाविति। तस्मात् शुक्लशब्दस्यैकदेशानुमत्या 'शु'-शब्दोऽनुकरणम्, एवं दिवसस्य अनुकरणं 'दि'-शब्दः, तिथेरनुकरणं 'ति'-शब्दः। स्वघटितत्वेन शुक्लबहुलदिनतिथि-शब्दानामुपस्थापकाः। स्वशक्यघटितपदप्रतिपाद्यत्वसम्बन्धेन शुक्लाद्यर्थोप-स्थापकाः सादृश्येनेति शास्त्रीयः पक्षः।

३. शास्त्रेऽपि वाक्यप्रयोगे वाक्यैकदेशस्य प्रयोगो दृश्यते, यथा—पिण्डीं भुङ्क्ष्वेति प्रयोक्तव्ये 'पिण्डीम्' इति भुङ्क्ष्वेति वा प्रयुज्यते।

तथा पदेऽपि प्रयोक्तव्ये पदैकदेशः प्रयुज्यते, यथा देवदत्त इति प्रयोक्तव्ये देवः, दत्तः, सत्यभामेति प्रयोक्तव्ये सत्या भामेति। तथैव अत्रापि भवितव्यम्। **शुक्ल इति प्रयोक्तव्ये शु इति, दिनमिति प्रयोक्तव्ये दीति। बहुल इति प्रयोक्तव्ये बेति, तिथिरिति प्रयोक्तव्ये तीति।**

किन्त्वस्मिन्नपि पक्षे प्रत्येकं विभक्तिमत्त्वेन भवितव्यम्। न च दानपत्रादिषु शुदिबद्यादिशब्दाः सविभक्तिका दृश्यन्ते, सर्वत्र विभक्तिवचनलिङ्गरहितत्वेन समानरूपप्रयोगात्। न च तर्हि अव्यया एव एते शब्दाः, प्रमाणाभावात्। **अत एव वैयाकरणैः सुदिवदिशब्दौ रूढौ अव्ययौ शुक्लकृष्णपक्षवाचकाविति स्वीकृतम्। तत्स्वीकारे च कस्यापि दोषस्य सम्भावना नास्ति।**

**तस्मान्मन्ये प्रयुक्तेषु शिलालेखादिषु सुदिवदिशब्दावेव स्यातां साधू। शुदिबदिशुतिवतिशब्दास्तदर्थबोधका असाधव एव कल्पनीयाः।** अथवा पूर्वोक्तानुकरणपक्षमादाय तेऽपि साधवः। किञ्च शिलालेखादिषूपलब्धा एते शब्दा न वाचकाः, न लक्षकाः, न च व्यञ्जकाः, न स्वतन्त्राः; अपि तु प्रथमाक्षरेण सम्पूर्णस्य पदस्य सूचका निर्देशकाः, लाघवात् लेखनकौशलात्

तावन्मात्रोपादानेन पूर्णपदस्य स्मारका एते भवन्ति। अधुनापि सङ्क्षेपेण लेखने तादृशः प्रयोगो बाहुल्येन उपलभ्यते।

**अतः 'सुदि-वदिशब्दौ' साधू, अव्ययौ, शुक्लपक्षबहुलपक्षवाचकौ, रूढौ, मान्याविति सिद्धान्तः। शुदिबदि-शुतिवतिशब्दाश्च शुक्लदिनबहुलदिन-शुक्लतिथिबहुलतिथिशब्दानां सूचकाः स्मारका लेखविस्तारभयाल्लाघवात् प्रयुक्ता अनुकरणपराः।**

सुदिवदिशब्दानामपि बहुतरलेखने सम्भाषणे शास्त्रे प्रयोगो बाहुल्येनोपलभ्यत इति निर्णयो मम प्रतिभातीति विद्वद्भिर्विभावनीयम्।



# न्यायमतानुसारी सप्तम्यर्थविचारः

**डॉ. के.इ. धरणीधरः**
अध्यक्षः, संस्कृतविभागस्य
पाण्डिचेरीविश्वविद्यालये,
पाण्डिचेरी



'आधारोऽधिकरणम्'[१] इति पाणिनीयं सूत्रम्। एतदर्थं कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणसंज्ञं स्याद् इति प्राचीकशत् कौमुदीकारो भट्टोजिदीक्षितः। अस्यायमाशयः—'कारके'[२] इत्यधिकाराद् अत्र कारकपदं प्रथमान्ततया विपरिणम्यते। तच्च आधारस्य विशेषणम्। आधारः कारकमधिकरणमिति लभ्यते। आधारो नाम आश्रयः। किन्निष्ठाधेयता-निरूपिताधारतावान् इति नियमेन आकाङ्क्षोदयात् साक्षात् क्रियाधारत्वं लभ्यते। साक्षात् फलाधारस्य नाधिकरणसंज्ञा, कर्मसंज्ञाविधायकेन उत्तरशास्त्रेण बाधात्। नापि साक्षाद् व्यापाराश्रयस्याधिकरणसंज्ञा युक्ता, परेण कर्तृसंज्ञाविधायकेन शास्त्रेण बाधात्। तथा च कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारभूतं कारकमधिकरणसंज्ञकं भवतीति सूत्रार्थः फलति। एवञ्च अधिकरणकारकं स्वाश्रयाश्रयत्वस्वनिष्ठसमवेतत्व एतदन्यतरसम्बन्धेन क्रियाश्रयो भवतीति ज्ञेयम्। यथा—'कटे आस्ते चैत्र' इत्यत्र स्वं कटः, तदाश्रयश्चैत्रस्तद्वृत्तिः स्थितिक्रिया, यथा च—'स्थाल्यां पचति तण्डुलान्' इत्यत्र स्वं स्थाली तन्निष्ठास्तण्डुलास्तद्वृत्तिर्विक्लित्तिः। अत एव कर्तृकर्मद्वारा क्रियाधारभूतां स्वाश्रयाश्रयत्वरूपपरम्परासम्बन्धेन सहायकं कारकमधिकरणमिति अभिप्रेत्य हरिरप्याह[३]—

कर्तृकर्मव्यवहितामसाक्षाद् धारयत् क्रियाम्।
उपकुर्वन् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्।।इति।

न च कालस्य साक्षात् क्रियाधारत्वात् समये चैत्रः पचतीति प्रयोगानुपपत्तिः स्यादिति वाच्यम्, सूत्रे स्वरितत्वप्रतिज्ञया कालस्यापि परम्परया क्रियाश्रयत्वात्।

---

१. अष्टाध्यायी–१.४.४५; २. तदेव–१.४.२३।
३. वाक्यपदीयम्, साधनसमुद्देशः, १४८।

अत एव च साक्षात्क्रियाधारत्वविवक्षायां काल: पचतीति प्रयोगोऽपि सम्भवति। अत एव 'भूतानि काल: पचतीति वार्ता' इति महाभारतवचनमपि साधु सङ्गच्छत इति वैयाकरणानां प्रक्रिया।

न चैवं सति तण्डुलं पचतीत्यत्र धात्वर्थस्य विक्लित्तिरूपफलस्यापि व्यपदेशिवद्भावेन फलाश्रयत्वेन कर्मतया तादृशकर्मण आश्रयस्तण्डुलस्तद्द्वारा धात्वर्थाश्रयत्वलाभेन तण्डुले पचतीति प्रयोगापत्तिरिति वाच्यम्, तण्डुले धात्वर्थव्यापारजन्यफलाश्रयतया कर्मसंज्ञाया अपि सत्त्वेन परया कर्मसंज्ञया अधिकरणसंज्ञाया बाधान्न दोष इति। एतेन मोक्षे इच्छा अस्तीतिवत् मोक्षे इच्छति भवतीति प्रयोगापत्तिरिति दूषणमपि निरस्तम्, कर्मसंज्ञाविधायकशास्त्रस्य अन्तरङ्गत्वात् परत्वाच्चेति ध्येयम्। अधिकरणमिदमौपश्लेषिक-वैषयिकाभिव्यापकादिरूपेण त्रिप्रकारमिति वाक्यपदीयकारो हरिराह[1]।

**न्यायमतेन सप्तम्यर्थविचार:**

अत्राहुर्व्युत्पत्तिवादकृतो गदाधरभट्टाचार्या:[2]—आधारोऽधिकरण-मित्याधारस्यैवाधिकरणत्वाद् अधिकरणे च सप्तम्याविहितत्वाद् आधारसप्तम्या आधेयत्वमर्थ:, तस्य च क्रियायामन्वय इति। आधेयत्वञ्च वृत्तित्वम्। तथा च भूतले घट इत्यस्य भूतलवृत्तिर्घट इति शाब्दबोधो जायते। भूतलनिरूपिताधेयतावान् घट इति क्रियाशून्यवाक्यस्थले बोध: सम्पद्यते। भूतले वर्तते घट इति क्रियायोगस्थले तु सप्तम्यर्थाधेयताया धात्वर्थाधेयतायां समानरूपत्वेनास्वीकारान्निरूप्यत्वं सप्तम्यर्थ:, भूतलनिष्ठनिरूप्यताया घटनिष्ठवृत्तौ बाधविरहान्न किञ्चिदत्रानुपपन्नम्। एवञ्चात्र निरूप्यत्वं सप्तम्यर्थ:। तत्र भूतलस्य निरूपितत्वसम्बन्धेनान्वय:। वृतुधातोरर्थ आधेयत्वम्। तत्र आश्रयतासम्बन्धेन उक्तनिरूप्यत्वस्यान्वय:। धात्वर्थाधेयताया निरूपितत्वसम्बन्धेन आख्यातार्थे आश्रयत्वेऽन्वय:। तच्चाश्रयत्वं प्रथमान्तार्थे भूतले स्वरूपसम्बन्धेनान्वेतीति भूतलनिरूपितनिरूप्यत्वाश्रयाधेयतानिरूपिताश्रयतावान् घट इति बोधो जायते।

एतादृशस्थले निरूप्यत्वस्य सप्तम्यर्थत्वादेव 'इति हेतुस्तदुद्भवे'[3] इत्यत्र हेतौ हेतुतायाञ्च उद्भवपदार्थभूता या उत्पत्तिस्तद्वृत्तित्वाभावेऽपि हेतुतायामुत्पत्तिनिरूपितत्वमस्त्येवेति तादृशनिरूपितत्वरूपार्थमाश्रित्य उद्भवपदादत्र

---

१. वाक्यपदीयम्, साधनसमुद्देश:, १४९।

२. व्युत्पत्तिवाद:, पृ. ५२४;

३. काव्यप्रकाश:–१.३।

सप्तमी सङ्गच्छते। न चात्र सप्तम्या आधेयत्वमेवार्थोऽस्त्विति वाच्यम्, काव्योत्पत्तौ काव्यहेतुभूतशक्त्यादेर्वा तन्निष्ठहेतुताया वा विरहात्। तथा चात्र काव्योत्पत्तिनिरूपितहेतुताश्रय: शक्त्यादित्रयमिति बोध:।

अत्रैव पक्षान्तरमपि प्राचीकशद् व्युत्पत्तिवादकारोऽथवेति ग्रन्थेन। तथा हि भूतले वर्तते घट इत्यादौ सप्तम्यर्थ आधेयत्वमेव। तत्र भूतलं निरूपितत्वसम्बन्धेनान्वेति। वृतुधातोराधारत्वमर्थ:, तत्र सप्तम्यर्थाधेयता अन्वेति। आख्यातार्थो निरूपकत्वरूपं कर्तृत्वम्। तत् प्रथमान्तार्थे घटे आश्रयता-सम्बन्धेनान्वेति। तथा च भूतलनिरूपिताधेयत्वस्याधिकरणतानिरूपको घट इति बोध:। भूतलाधिकरणकभूतलनिष्ठाधारतानिरूपको घट इति यावत्।

अत्रेदं तत्त्वम्—आधेयत्वस्य सप्तम्यर्थत्वप्रतिपादनेन आधारत्वं नार्थ इति सम्पद्यते। तत्र किं निदानमिति चेत्, उच्यते—आधारत्वस्य सप्तम्यर्थत्वे तस्य निरूपकत्वसम्बन्धेनान्वयो वाच्य:। तथा सति नञ्समभिव्याहारस्थले भूतले न घट इत्यत्र निरूपकत्वस्य वृत्त्यनियामकत्वेन प्रतियोगितानवच्छेदकत्वाद् नञा निरूपकतासम्बन्धावच्छिन्नप्रतियोगिताकाधिकरणत्वाभावस्य बोधयितुमशक्यत्वाद् आधेयत्वस्यैव सप्तम्यर्थत्वे वक्तव्यत्वात् प्रतियोग्यभावान्वयतुल्य-योगक्षेमतानियमानुरोधात् सर्वत्रैवाधेयत्वमेव सप्तम्यर्थ इत्यभ्युपेयम्। तथा च भूतले घट इत्यत्र भूतलनिरूपिताधेयताश्रयो घट इति, नञ्समभिव्याहारस्थले भूतलनिरूपिताधेयतानिष्ठाश्रयतासम्बन्धावच्छिन्नप्रतियोगिताकाभाववान् घट इति बोधो जायते।

किञ्च प्रतियोगित्वानुयोगित्ववद् विलक्षणप्रतीतिसाक्षिक: स्वरूपसम्बन्ध-विशेष आधेयत्वम्। स चातिरिक्तो वाऽनतिरिक्तो वेत्यन्यदेतत्। गेहे चैत्र: पचतीत्यत्र अध:सन्तापनस्य पाकस्य साक्षाद् गेहावृत्तित्वेऽपि कर्तृघटितपरम्परा-सम्बन्धाधिकरणत्वमाधेयत्वं वा सप्तम्यर्थ: पाकादिक्रियान्वयी। एवं स्थाल्यामोदनं पचतीत्यत्र अध:सन्तापनस्य पाकस्य साक्षात् स्थाल्यवृत्तित्वेऽपि स्वाश्रयकर्मवत्त्वरूपपरम्परासम्बन्धेनाधिकरणत्वमाधेयत्वं वा सप्तम्यर्थ: पाकादावन्वेति। तथैवानुभवबलेन व्युत्पत्तेरिति वृद्धा:। तदाहु:[१]—

कर्तृकर्मव्यवहितामसाक्षाद् धारयत् क्रियाम्।
उपकुर्वन् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्।।इति।

---

१. वाक्यपदीयम्, साधनसमुद्देश:, १४८।

आधाराधेयभावश्च न संयोगादिरूपसम्बन्धात्मकः कुण्डादिसंयोगिनो बदरादेरपि कुण्डाधारताप्रसङ्गात् संयोगस्य समवायेनोभयत्र सत्त्वात्; अपि तु पदार्थान्तरमेव। अथवा तत्तत्सम्बन्धावच्छिन्नाधारत्वं तत्तत्सम्बन्धरूपम्, नातिरिक्तमिति पक्षद्वयं प्रदर्शितं **भट्टाचार्यैः**।

इयाँस्तु विशेषः—अनुगताकारप्रतीत्या प्रतियोगित्वादिवद् अधिकरणत्वमाधेयत्वं चाखण्डोपाधिरूपम्। शक्यतावच्छेदकानुरोधेन करणत्वादिवत् पदार्थान्तरकल्पने बाधकाभावात्। यत्र हि सखण्डपदार्थस्यैव शक्यतावच्छेदकतया प्रतीतिरानुभाविकी न तत्र पदार्थान्तरकल्पनम्।

यत्र तु तद्घटकपदार्थाप्रतीतावपि तत्प्रतीतिस्तत्र स्याद् व्यवहारानुरोधादपि तत्कल्पनमिति।

'सप्तम्यधिकरणे[१] चे'त्यत्र चकाराद् दूरान्तिकार्थेभ्योऽपि सप्तमी। वनस्य दूरे अन्तिके वा ग्रामः। दूरत्वावच्छिन्नप्रदेशे दूरे। प्रतियोगित्वं षष्ठ्यर्थः। क्तस्येन्विषयस्य कर्मण्युपसंख्यानमिति वार्तिकम्[२]—इन्प्रत्ययान्तो यः क्तप्रत्ययान्तस्तस्य कर्मणि सप्तमी वाच्या। अधीती व्याकरणे। अधीतमनेनेति विग्रहे भावक्तान्ताद् अधीतशब्दात् कर्तरि इनि प्रत्यये अधीतीत्यस्य अधीतवान् इत्यर्थः पर्यवस्यति। किमधीतवानिति जिज्ञासायां व्याकरणं कर्मत्वेन अध्ययनेऽन्वेति। व्याकरणकर्मकाध्ययनकर्तेति बोधो वैयाकरणानाम्। अत्र पदवाक्यरत्नाकरकारः[३]—

सप्तमी स्यात् कर्मणि वा यदीष्टादिपदादिनिः।
अन्ये तु नित्यमेवात्र सप्तमीत्यत्र चक्षिरे।।

अत्र 'अधीती वेदान् वेदेषु वा' इत्यादौ वेदकर्मकाध्ययनकर्तेति बोधः। अत्र मुख्ये कर्मण्येव सप्तमी, न तु गौणे। तेन मासमधीती इत्यादयः प्रयोगाः सूपपादाः।

## निमित्तात् कर्मयोगे[४]

कर्मयोगे निमित्तवाचकाच्छब्दात् सप्तमी वाच्येति भावः। निमित्तशब्देन हेतुभूतं फलमुच्यते। कर्मसंयोगो नाम कर्मणा साकं संयोगसमवायात्मकः सम्बन्धः। 'चर्मणि द्वीपिनं हन्ति' प्रकृत्यर्थस्य चर्मादेर्हननक्रियानिमित्तत्वं बोधयति। निमित्तत्वञ्च कारणत्वम्। चर्मादेर्हननक्रियाकारणत्वे प्रमाणाभावात्। इच्छाकृत्यादिना

१. अष्टाध्यायी–२.३.३६;
२. वार्तिकम्, १४८५।
३. पदवाक्यरत्नाकरः, पृ. ६८६;
४. वार्तिकम्, १४९०।

अन्यथासिद्धत्वात्। अपि तु क्रियाजनिकाया विनियोज्यत्वेनेच्छा तद्विषयत्वम्। सप्तम्या विषयित्वाश्रयेच्छाधीनत्वमर्थः। विषयित्वे निरूपितत्वसम्बन्धेन प्रकृत्यर्थस्य चर्मणोऽन्वयः। चर्मनिरूपितविषयित्वाश्रयेच्छाधीनव्याघ्रकर्मकहननक्रियानुकूल-कृतिमान् इति बोधः। एवमुपरागे स्नायाद् इत्यत्र स्नाने उपरागजन्येष्टजनकत्व-लक्षणमुपरागादिनिमित्तकत्वं सप्तम्या बोध्यते।

तृतीयाकारके प्रसङ्गवशाच्छरदि पुष्प्यन्ति सप्तच्छदा इति वाक्यस्यार्थो वक्ष्यमाणरीत्या गदाधरैरुपवर्णितः[१]—तत्र अन्वयितावच्छेदकतावच्छिन्नत्वमेव विशेषणसम्बन्धे भासत इति नास्ति नियमः। शरदि पुष्प्यन्ति सप्तच्छदा इति वाक्यार्थानुपपत्तेः। तत्र हि आख्यातान्तस्य पुष्पोत्पत्तिरर्थः। न च पुष्पोत्पत्तित्वावच्छेदेन शरद्वृत्तित्वान्वयो वाच्यः, बाधात्। न हि सर्वाणि पुष्पाणि शरदि उत्पद्यन्ते। न चैवं सति सामानाधिकरण्येनान्वयो वाच्य इति शङ्कनीयम्, शरदि पुष्प्यन्ति चम्पका इत्यविशेषेण प्रयोगापत्तेः, शरत्कालेऽपि कदाचित् चम्पकपुष्पाणामुत्पत्तिदर्शनात्। न चैवं शङ्कनीयम्, सप्तच्छदपुष्पोत्पत्तित्वावच्छेदेन शरद्वृत्तित्वान्वय आख्यातान्तार्थे पुष्पोत्पत्तौ वाच्य इति, सप्तच्छदपुष्पोत्पत्तित्वस्य अन्वयितानवच्छेदकतया तदवच्छिन्नत्वस्य शरत्कालवृत्तित्वे भानासम्भवात्। पदात् पदद्वयाद् वा अनुपस्थितस्य नान्वयितावच्छेदकत्वसम्भवः। तस्माद् अन्वयितानवच्छेदकावच्छिन्नत्वमपि विशेषणसम्बन्धे भासत इति स्वीकृत्य शरत्कालसम्बन्धे सप्तच्छदपुष्पोत्पत्तित्वावच्छिन्नत्वभानमङ्गीकृत्य शरदि पुष्प्यन्ति चम्पका इति प्रयोगो वारणीय इति व्युत्पत्तिवादकृदाशयः। प्रकारान्तरेणाप्यत्र बोधो वर्णितो व्युत्पत्तिवादे, यदि चेति ग्रन्थेन। विस्तरभिया स चात्र नोल्लिख्यते।

'यस्य[२] च भावेन भावलक्षणम्' (पा.सू. २.३.३७) इति सप्तमीविधायकं सूत्रम्। यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी स्यादिति कौमुदीकारो भट्टोजिदीक्षितः। अस्यायमाशयः—निर्ज्ञातकाला हि क्रिया, अनिर्ज्ञातकालायाः क्रियायाः कालपरिच्छेदकत्वाल्लक्षणम्। तत्र प्रसिद्धक्रियाश्रययोः कर्तृकर्मणोर्वाचकाद् ब्राह्मणादिशब्दाल्लक्ष्यलक्षणभावसम्बन्धे षष्ठ्यां प्राप्तायां सप्तमीविधानार्थमिदं सूत्रं प्रवर्तते। लक्षणत्वमिह क्रियायाः साक्षात्। आश्रययोः कर्तृकर्मणोः क्रियाद्वारेणेति बोध्यम्। व्यापाररूपक्रियाश्रयः कर्ता, फलरूपक्रियाश्रयः कर्मेति कर्तृकर्मणो-र्द्वयोरपि क्रियाश्रयत्वमुपपन्नम्। तत्र कर्तरि उदाहरणं ब्राह्मणेषु अधीयानेषु गतः, कर्मणि च गोषु दुह्यमानासु गत इति। अत्राहुर्**गदाधराचार्याः**[३]—भावपदं क्रियापरम्। यद्विशेषेण कृदन्तार्थविशेषणतापन्नक्रियया क्रियान्तरस्य लक्षणं व्यावर्तनं

१. व्युत्पत्तिवादः, पृ. ३९३; २. तदेव, पृ. ५२९।

तद्वाचकपदात् सप्तमी इति सूत्रार्थः। गोषु दुह्यमानासु गत इत्यत्र गोविशेषेण कृदन्तार्थो दुह्यमानपदार्थस्तत्र विशेषणतापन्ना या क्रिया दोहनक्रिया तया क्रियया क्रियान्तरस्य गमनक्रियारूपस्य व्यावर्तनं कालिकव्यवच्छेदः क्रियत इति तद्वाचकात् पदात् सप्तमी।

अत्र गमनादिक्रिया गोदोहनादिसमानकालीनत्वादिपुरस्कारेण बोध्यतया अभिप्रेता। अतो व्यावर्तकविशेषणप्रविष्टतादृशक्रियाया अपि व्यावर्तकतया तत्कर्माद्यभेदान्वयिगवादिपदात् सप्तमी। अत्र तादृशसप्तम्याः समानकालीन-त्वादिकमात्रमर्थः। तत्र दुह्य द्युपस्थापितदोहनादेर्निरूपितत्वसम्बन्धेनान्वयाद् दोहनसमानकालीनत्वादिकं गमनादौ लभ्यते। एतच्च वर्णनं न साधु। दुह्याद्युपस्थापितक्रियायाः कृदर्थविशेषणतयोपस्थापितायाः समानकालीनत्वादि-विशेषणत्वासम्भवात्। एकत्र विशेषणतया उपस्थितस्यान्यत्र विशेषणतया नान्वय इति व्युत्पत्तेः। प्रकृत्यर्थगवादिनानन्वितस्यार्थस्य सप्तम्या बोधनासम्भवाच्च, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्युत्पत्तेः। अतः समभि-व्याहृतदोहनादिक्रियैव सप्तम्यर्थः। तस्याश्च समानकालीनत्वादिसम्बन्धेन क्रियान्तरेऽन्वयः। दुह्यमानाभिन्नगोकर्मकदोहनसमानकालीनगमनवानिति बोधः। तत्र वर्तमानार्थककृत्समभिव्याहारस्थले समानकालीनत्वम्, दोग्धव्यासु गत इत्यादि-भविष्यदर्थककृत्स्थले प्राक्कालीनत्वम्, दुग्धासु गत इत्यादौ अतीतार्थककृत्स्थले उत्तरकालीनत्वं सम्बन्धतया भासते। दोहनकर्माभिन्नगोकर्मकदोहनप्राक्कालीन-गमनवान्, दोहनकर्माभिन्नगोकर्मकदोहनोत्तरकालीनगमनवान् इति रीत्या बोधः।

साध्यवद्भिन्नसाध्याभाववदवृत्तित्वमिति व्याप्तिलक्षणं व्याचक्षाणो **दीधितिकारः**[१] साध्यवद्भिन्ने यः साध्याभावस्तद्वदवृत्तित्वमिति सप्तमी-तत्पुरुषसमासमाश्रित्य प्राह। न च 'कारके'[२] इत्यधिकारीयेण सूत्रेण सप्तम्यधिकरणे चेति सूत्रेण कारकाधिकरणवाचिन एव शब्दात् सप्तमीविधानादत्र सप्तमीसमाश्रयणं नोपपद्यत इति वाच्यम्, सप्तम्यधिकरणे चेति सूत्रस्य अनुक्तसमुच्चायकचकारेण कारकाधिकरणवाचिनोऽपि शब्दात् सप्तम्यनुशासनेन नानुपपत्तेरिति सप्तमीतत्पुरुषसमाश्रयणेन प्रसक्तं साध्याभावपदवैयर्थ्यमपि तत्र परिहृतमिति ध्येयम्।

एवमत्र विस्तरभिया अन्यान्युदाहरणानि न प्रस्तूयन्त इति शम्।

●

---

१. व्याप्तिपञ्चकम्, द्वितीयलक्षणमणिव्याख्या।

२. अष्टाध्यायी–१.४.२३।

# प्राचीननवीननैयायिकमतयोः आकाशपद-शक्तिविचारः

**डॉ. कमलेशमिश्रः**
उपाचार्यः, न्यायदर्शनविभागस्य
श्रीजगन्नाथसंस्कृतविश्वविद्यालये
श्रीविहारः, पुरी



शक्तिर्नाम शाब्दबोधानुकूलः पदपदार्थयोर्मुख्यसम्बन्धः। इयमीश्वरेच्छेति प्राचीनाः, इच्छेति च नव्याः। इयमीश्वरेच्छा सङ्केतरूपा। तस्या आकारः—'अस्मात् पदादयमर्थो बोद्धव्यः' इति। यथा घटपदाद् घटत्वावच्छिन्नो बोद्धव्य इत्येतादृशी इच्छा अर्थविशेष्यिका। 'इदं पदमिममर्थं बोधयतु' इति वा। यथा घटपदं घटत्वावच्छिन्नं बोधयत्विति। एतादृशी इच्छा पदविशेष्यिका।

इयमिच्छारूपा शक्तिस्तद्विशिष्टे भवति। तद्विशिष्टे शक्तिर्नाम घटत्वादिविशिष्टे शक्तिरिति। तथा च तद्धर्मतद्वैशिष्ट्यतदाश्रयेष्वेव शक्तिरित्यर्थः फलितः। अत्र तद्धर्मो नाम घटत्वादिधर्मः, तद्वैशिष्ट्यं नाम घटत्वादिसमवायः, तदाश्रयो नाम घटत्वाद्याश्रयो घटादिरिति।

ननु घटपदस्य कुत्र शक्तिः? घटत्वावच्छिन्न इति। अतो घटत्वं शक्यतावच्छेदकम्। शक्यतावच्छेदकं नाम प्रवृत्तिनिमित्तम्। प्रवृत्तिनिमित्तं नाम तत्तत्पदव्यवहारप्रयोजकम्। तथा च यद्धर्मविशिष्टेऽर्थे यत्पदस्य मुख्यव्यवहारो भवति, स धर्मस्तत्पदस्य प्रवृत्तिनिमित्तरूप इति भावः। प्रवृत्तिनिमित्तलक्षणं 'वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारत्वमि'ति[१] **गदाधरेणावादि**। घटघटत्वतत्समवायेषु घटपदस्य शक्तिः। अतो घटपदवाच्या एते त्रयः। लक्षणसङ्गमनं प्रस्तूयते। घटत्वं घटपदवाच्यम्, घटपदवाच्यघटे वर्तमानम्, वाच्यभूतघटविषयकस्मृतौ प्रकारीभूतमिति लक्षणसमन्वयः। लक्षणे वाच्यत्वे सतीति वाच्यत्वविशेषणस्य याथार्थ्यं घटत्वादेर्घटादिपदवाच्यत्वे सम्भवति, तथा—'जात्याकृतिव्यक्तयस्तु पदार्थ'[२] इति **महर्षिगौतमोक्त**पदार्थत्वस्यापि न त्वन्यथेति।

---

१. शक्तिवादे सामान्यकाण्डे;    २. न्यायसूत्रम्-२.२.६५।

अतो यथा घटादिपदार्थो घटादिपदवाच्यस्तथैव घटादिपदार्थप्रकारीभूतधर्म घटत्वादिरपि। तथा च घटादिपदजन्यशाब्दबोधे यथा घटादिपदार्थ-विषयकघटादिपदवाच्यत्वज्ञानस्यापेक्षा, तथैव प्रकारीभूतघटत्वादिधर्मविषयक-घटादिपदवाच्यत्वज्ञानस्यापि। तेन च समवायादिसंसर्गकघटत्वादिप्रकारक-घटादिविशेष्यकशाब्दबोधो जायत इति।

पदार्थप्रकारीभूतधर्मांशे वाच्यत्वज्ञानस्यापेक्षितत्वे आकाशपदात् शब्दाश्रयत्व-प्रकारकाकाशविशेष्यकशाब्दबोधो न स्यात्, प्राचीनैराकाशपदवाच्यताया: शब्दाश्रयत्वेऽनङ्गीकृतत्वात्। अत: शब्दाश्रयत्वस्यावाच्यताप्रतिपादनार्थं प्रवृत्ति-निमित्तलक्षणे 'वाच्यत्वे सति' इति विशेषणोपादानमिति चेत्, न, प्राचीनानामाकाशांशे शब्दाश्रयत्वधर्माप्रकारकशाब्दबोधस्य सम्मतत्वात्।

अत्र प्राचीनानामिदं तात्पर्यम्—यथा घटत्वादिर्जाति:, न तथा आकाशत्वं शब्दाश्रयत्वं वा, एकव्यक्तिमात्रवृत्तेश्च जातित्वानङ्गीकारात्। आकाशोऽष्टद्रव्याति-रिक्तद्रव्यरूप:। अत: शब्दाश्रयत्वमिवाष्टद्रव्यातिरिक्तद्रव्यत्वमप्याकाशपदेन ग्राह्यम्। यदि शब्दाश्रयत्वे आकाशपदशक्तिस्तर्हि अष्टद्रव्यातिरिक्तद्रव्यत्वेऽपि। तथा तु न सम्भवति, एकस्मिन् धर्मिणि प्रकारीभूतेषु नानाधर्मेष्वेकपदस्य पर्याप्त्या नानाशक्तीनां कुत्राप्यभानात्। न चोभयत्रापि एका शक्ति:, एकदा आकाशपदादुभयधर्मप्रकारकबोधानवलोकनात्। एकतरपक्षपातिन्या युक्तेरभावान्नैकत्र शक्तिर्नैकत्र च लक्षणेति। तस्माद् गत्यन्तराभावादाकाशपदस्य निर्विकल्पकबोध इति।

ननु निर्विकल्पकं नाम तत्र निष्प्रकारकं ज्ञानमिति। पदात्तु सामान्यतो निष्प्रकारकं ज्ञानं न सम्भवति। तथा सति पदार्थस्य पदार्थान्तरसम्बन्धो न स्यात्। अत: शाब्दबोधे निर्विकल्पकत्वञ्च तदंशे तत्पदोपस्थाप्यधर्माप्रकारकत्वम्, न तु सामान्यतो निष्प्रकारकत्वमित्युक्तम्[1]। यदि आकाशपदादुपस्थिति: शब्दाश्रयत्व-प्रकारिका शाब्दबोधश्च निष्प्रकारकस्तर्हि उपस्थितिशाब्दबोधयो: समानप्रकारकत्वनियमोच्छेद: स्यात्। अतोऽत्र निर्विकल्पकपदं निर्विकल्पक-स्मरणपरम्, न तु निर्विकल्पकशाब्दबोधपरम्। निर्विकल्पकस्मरणञ्चाकाश-पदोपस्थाप्यशब्दाश्रयत्वरूपवस्तुनाऽविशेषिताकाशधर्मिविषयकशब्दानुभवजनकम्। यदि चाकाशपदादाकाशस्य स्वरूपत एवोपस्थिति:, तर्हि न तयो: समानप्रकारत्वनियमोच्छेद:। नन्वनुभवात् संस्कार:, संस्काराच्च स्मृति:। तेन च स्मरणं सविकल्पकं सप्रकारकं वा भवति, न तु निर्विकल्पकमिति। अतो

---

१. शक्तिवादे विशेषकाण्डे।

निर्विकल्पकस्मरणस्य नोपपत्तिरिति चेत्, न, **मुरारिमिश्रैर्नि**र्विकल्पकस्मरणस्योपपादितत्वात् प्रकारान्तरेण। तत्र रहस्यञ्चानुभूतस्यैव स्मरणं भवति; किन्त्वनुभूतस्य स्मरणं भवत्येवेति नियमो नास्ति, संस्कारप्रमोषेण निर्विकल्पकस्मरणस्य सम्भवात्। यथा कटकादिविशिष्टदेवदत्तस्य कालान्तरे कटकादिविषयकसंस्कारप्रमोष:। तेन च देवदत्तव्यक्तिमात्रविषयकस्मरणम्। तथैव शब्दाश्रयत्वविषयकसंस्कारप्रमोषेणाकाशपदादाकाशव्यक्तिमात्रविषयकं निर्विकल्पकस्मरणमिति।

अथाकाशपदादाकाशस्य स्वरूपत उपस्थितिरिति; किन्तु स्वरूपत उपस्थितिरनुल्लिख्यमानजातेरिति न्यायनये प्रसिद्धि:। जात्यखण्डोपाधिनिष्ठा प्रकारता न केनापि धर्मेणावच्छिन्ना; किन्तु तदतिरिक्तपदार्थनिष्ठा प्रकारता। अत्राकाशो न वा जातिर्न वाऽखण्डोपाधि:। तस्य यदि स्वरूपतो भानं स्वीक्रियेत तर्हि 'आकाशवासी'त्यत्र आकाशप्रकारकाकाशवासिविशेष्यकबोधो न स्यात्, आकाशस्य स्वरूपत: प्रकारत्वासम्भवात्। अपि च 'नीलमाकाशमि'त्यत्र आकाशविशेष्यकोऽपि बोधो न स्यात्, अन्वयितावच्छेदकधर्मस्याकाशेऽभावात्। नियमश्चान्वयितावच्छेदकावच्छिन्न एव पदार्थान्तरान्वय इति। यथा नीलो घट इत्यत्र घटनिष्ठाया अन्वयिताया अवच्छेदकं घटत्वमेव। तदवच्छिन्ने घटे पदार्थान्तरस्य नीलस्यान्वय:। आकाशपदादाकाशस्य स्वरूपतो भानस्वीकारे 'नीलमाकाशमि'त्यत्र आकाशस्यान्वयितावच्छेदकधर्माभावेऽपि शाब्दबोधस्वीकारे 'अन्वयितावच्छेदकावच्छिन्न एव पदार्थान्तरान्वय:' इति नियमस्यानुपपत्ति:।

तस्मादाकाशस्य स्वरूपतो भानं न सम्भवति। आकाशपदार्थप्रकारीभूतधर्मशब्दाश्रयत्वे शक्तिज्ञानमावश्यकम्। तेन च 'आकाशवासी'त्यत्र शब्दाश्रयत्वेनाकाशस्य प्रकारतया भानमाकाशवासिनि चाकाशस्य प्रकारत्वसम्भव:। 'नीलमाकाशमि'त्यत्रापि शब्दाश्रयत्वेनान्वयितावच्छेदकेनावच्छिन्ने आकाशे नीलपदार्थान्वयसम्भव:। यथा गोत्वादेर्गवादिपदवाच्यत्वं तथा आकाशपदवाच्यत्वं शब्दाश्रयत्वस्येति। दीधितिकारेण **रघुनाथशिरोमणिनापि** गुणटिप्पण्यां रूपग्रन्थे गोत्वादिना शब्दाश्रयत्वस्य तुल्ययुक्तित्वं प्रतिपादितम्। अपि च प्रवृत्तिनिमित्तलक्षणे वाच्यत्वविशेषणस्योपादानं दूषितम्।

किन्तु प्रत्यक्षमणिदीधितौ गोत्वादेरपि गवादिपदवाच्यत्वं दूषितम् (द्र. शक्तिवादे सामान्यकाण्डे)। तेन च स्वमतस्य पूर्वापरविरोध इति प्रतीयते। गोत्वादौ गवादिपदशक्तेरस्वीकारे गवादिपदजन्यबोधे गवादौ यथा गोत्वादे: प्रकारतया भानं तथा द्रव्यत्वादेरपीत्याशङ्का। अस्या आशङ्काया: 'गोपदं गोत्वावच्छिन्नवाचकमिति' भगवत्सङ्केतस्वीकारात् समाधानं विहितम्। तथा च

गोत्वादेः प्रकारतायां शक्यतावच्छेदकत्वमेव प्रयोजकम्, न तु गवादिपदवाच्यत्वम्। शक्यतावच्छेदकं गोत्वादिकं गवादिपदावाच्यमिति मतं **गदाधरेणा**पाकृतम् (शक्तिवादे सामान्यकाण्डे)। शाब्दबोधे 'शक्यतावच्छेदकस्यैव प्रकारतया भान'मिति स्वीकारे 'द्रव्यत्वप्रकारकबोधः स्यात्, न तु गुणत्वप्रकारकः; किन्तु गोत्वादेर्वाच्यत्वस्वीकारे गुणवत्त्वप्रकारकस्तत्र बोधो भवेदिति। अत्र मतान्तरं केचित् प्रतिपादयन्ति। तत्र इदं तात्पर्यम्—आकाशपदान्नियमतः शक्त्या शब्दाश्रयत्वेनैव बोधो न भवति; किन्त्वष्टद्रव्यातिरिक्तद्रव्यत्वादिनापि। नियमतः शक्त्या तस्य शब्दाश्रयत्वेन बोधस्वीकारे 'आकाशः शब्दाश्रयः' इति सहप्रयोगस्य मुख्यता न स्यात्।

अत्रायं भावः—अभेदान्वयो विरूपोपस्थितयोरेवेति[1] नियमः। तथा च परस्परविरुद्धाभ्यां धर्माभ्यामुपस्थितयोः पदार्थयोरभेद इत्यर्थः सिद्ध्यति। यथा नीलो घटः। नीलत्वेन धर्मेण नीलपदार्थस्य, घटत्वेन धर्मेण च घटपदार्थस्योपस्थितिः। नीलत्वं घटत्वञ्च परस्परं विरुद्धम्। अत्र च अभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबोधः। प्रकारतावच्छेदकं धर्मितावच्छेदकमभेदान्वये भिन्नमावश्यकम्। यत्र परस्परं विरुद्धधर्माभ्यां पदार्थयोर्नोपस्थितिस्तत्र नैवाभेदान्वयः। यथा घटो घटः। अत्र प्रकारतावच्छेदकं धर्मितावच्छेदकञ्चैकं घटत्वरूपम्।

'आकाशः शब्दाश्रयः' इत्यत्र आकाशपदेन शब्दाश्रयत्वेनोपस्थितिः, शब्दाश्रयपदेनापि शब्दाश्रयत्वेनोपस्थितिः। अतः परस्परं विरुद्धधर्माभावान्नैवाभेदान्वयः। यदि तत्र लक्षणया अष्टद्रव्यातिरिक्तद्रव्यत्वेनाकाशस्योपस्थितिः, तर्हि अन्वयबोधसत्त्वेऽपि वाक्यस्य मुख्यता न स्यात्, शक्यार्थप्रतिपादन एव मुख्यतायाः सम्भवात्।

अत्र शक्त्या अष्टद्रव्यातिरिक्तद्रव्यत्वेनापि यदि बोधः स्वीक्रियेत, तर्हि वाक्यस्य मुख्यता स्यात्। तथा चाकाशपदेन शक्त्या अष्टद्रव्यातिरिक्तद्रव्यत्वेनोपस्थितिः शब्दाश्रयपदेन च शब्दाश्रयत्वेनोपस्थितिरिति भावः फलितः।

तथा सति आकाशपदस्य नानाशक्तिकल्पनम्। एकशक्त्या क्वचिच्छब्दाश्रयत्वेन क्वचिदपरशक्त्या चाष्टद्रव्यातिरिक्तद्रव्यत्वेनाकाशबोधः स्यात्।

नेदं मनोरमम्, नानाधर्मविशिष्टे धर्मिणि एकपदस्य नानाशक्तीनां क्वचिदप्यदर्शनात्। किन्तु नानाशक्तिकल्पना यदि न क्रियेत, तर्हि

---

१. व्युत्पत्तिवादेऽभेदान्वयप्रकरणे।

सहप्रयोगस्यात्र मुख्यता न स्यात्। अतो विनिगमनाभावात् कस्यापि धर्मस्य विशेषणत्वासम्भवात् शब्दाश्रयत्वोपलक्षित एवाकाशे आकाशपदशक्तिरिति प्राचीनमतमेव ग्राह्यम्। तथा च उपलक्षणत्वस्याविशेषात् क्वचित् शब्दाश्रयत्वेन क्वचिदष्टद्रव्यातिरिक्तद्रव्यत्वेन शक्त्या एव शाब्दबोधः। 'आकाशः शब्दाश्रयः' इत्यत्र मुख्यत्वस्य नानुपपत्तिः।

ननु शाब्दबोध उपलक्षणस्य न प्रकारतया भानं किन्तु विशेषणस्य। अतः शब्दाश्रयत्वोपलक्षिते आकाशे शब्दाश्रयत्वाद्युपलक्षणस्य कथं प्रकारतया भानमिति चेत्, उच्यते—विशिष्टवाचकविशिष्टावाचकभेदेन द्विविधं पदम्। तत्र विशिष्टवाचकपदं गवादिपदम्। तत्र गोत्वादेर्विशेषणत्वम्। विशिष्टावाचकं चाकाशादिपदम्। तत्रोपलक्षणस्य गत्यन्तराभावात् प्रकारत्वम्, कस्यचिद्धर्मस्य विशेषणत्वाभावात् निष्प्रकारकशाब्दबोधासम्भवाच्च।

न च शब्दाश्रयत्वस्योपलक्षणत्वे तस्यैवाविशेषात् प्रमेयत्वादेरपि आकाशपदजन्यानुभवे प्रकारतापत्तिः, प्रमेयत्वादेरतिप्रसक्तत्वाद् अनतिप्रसक्त-शक्यतावच्छेदकत्वेन शब्दाश्रयत्वादीनां स्वीकारात्।

नव्यास्तु लक्षणया अष्टद्रव्यातिरिक्तद्रव्यत्वरूपेण आकाशोपस्थितिं स्वीकुर्वन्ति। अपि च 'आकाशः शब्दाश्रयः' इति सहप्रयोगस्य मुख्यत्वमसिद्ध्या नाङ्गीकुर्वन्ति। आकाशः शब्दाश्रय इत्यत्र अष्टद्रव्यातिरिक्तद्रव्यत्वरूपेणाथवा आकाशपदवाच्यत्वेन लक्षणा एवास्तीति स्वीकुर्वन्ति। तेन चाभेदान्वये न काप्यनुपपत्तिः।

आकाशः शब्दाश्रय इत्यत्र यद्याकाशपदस्य मुख्यत्वं स्वीक्रियेत, तर्हि तस्य विशिष्टावाचकत्वमङ्गीकर्त्तव्यम्। तत्र शब्दाश्रयत्वोपलक्षिते आकाशे अष्टद्रव्याति-रिक्तद्रव्यत्वादिना रूपेण शक्त्या बोधः स्वीकरणीयः। तेन च मुख्यत्वमुपपन्नम्। विशिष्टावाचकाकाशादिपदस्य प्रकारतया भासमानधर्मां-शेऽगत्या वाच्यत्वानवगाहिनः शक्तिज्ञानस्य हेतुत्वमङ्गीकार्यम्। तेन चाकाशपदाल्लक्षणया एव बोधः।

न चाभ्रान्तपुरुषस्य विशिष्टवाचकपदे विशिष्टावाचकत्वज्ञानमिति।

**अत्रायं सारः—**

१. नव्यानां मते आकाशः शब्दाश्रय इत्यत्र सहप्रयोगस्य न मुख्यत्वम्।

२. तत्र मुख्यत्वाङ्गीकारे शब्दाश्रयत्वादीनामुपलक्षणत्वम्।

३. उपलक्षणस्य शाब्दबोधे प्रकारत्वाभावेऽपि 'आकाश: शब्दाश्रय:' इत्यादावगत्या तत्प्रकारत्वं स्वीकार्यम्, तत्र कस्यचिद् धर्मस्य विशेषणत्वाभावान्निष्प्रकारकशाब्दबोधासम्भवाच्च।

४. जातेरखण्डोपाधेश्च स्वरूपतो भानम्, तत्राप्यनुल्लिख्यमानजाते:, न तूल्लिख्यमानजाते:। यथा घट इत्यत्र घटत्वेन घटपदार्थस्योपस्थिति:; किन्तु घटत्वस्योपस्थिति: स्वरूपत एव। अत्र जातिर्नोल्लिखिता; किन्तु 'घटत्ववान् घट:' इत्यत्रोल्लिखितघटत्वजातेर्घटत्वत्वधर्मेणोपस्थिति:। प्रकारताया अवच्छेदक-धर्मोऽवश्यमेवेति नैव नियम:। यथा घट इति ज्ञाने घटत्वनिष्ठप्रकारता किञ्चिद्धर्मानवच्छिन्नेति।

५. प्रवृत्तिनिमित्तलक्षणे 'वाच्यत्वे सतीति' विशेषणं द्रव्यादिपदानां घटत्वादे: प्रवृत्तिनिमित्तत्ववारणाय, न तु शब्दाश्रयत्वस्य आकाशपदवाच्यत्ववारणायेति नव्यानामाशय:।

६. शब्दाश्रयत्वधर्मे आकाशपदस्य वाच्यत्वावगाहनम्। तेन चाकाशपदस्य शब्दाश्रयत्वे शक्ति:, अष्टद्रव्यातिरिक्तद्रव्यत्वे च लक्षणेति भाव:।

मन्मते तु आकाश: शब्दाश्रय इत्यत्र सहप्रयोगस्य मुख्यत्वं **प्राचीनै:** स्वीक्रियते। **नवीनैर्यद्यपि** स्वसिद्धान्ततो नाङ्गीक्रियते, तथापि तत् सम्भाव्यते। अत एव आकाशपदशक्तिविचारे "यदि च 'आकाश: शब्दाश्रय:' इत्यादिवाक्यस्थमाकाशपदं मुख्यमेव" इत्यभाणि। तेन च मुख्यत्वोपपादनप्रकारोऽपि पक्षान्तरेण प्रतिपादित:।

अतो यदि 'आकाश: शब्दाश्रय:' इत्यत्र सहप्रयोगस्य मुख्यत्वम्, तर्हि **प्राचीनमतं साधु**। यदि न मुख्यत्वम्, तर्हि **नवीनमतं साध्विति**।



# कापिलदर्शनमाश्रित्य सृष्टिप्रक्रिया तदालोचनञ्च

**डॉ. (श्रीमती) बीना-श्रीवास्तव**
उपाचार्या
संस्कृतविद्याविभागस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणस्याम्



नूनमेव आश्चर्यमिदं जगत्। सृष्टिजिज्ञासामवलोक्य भारतीयदर्शनानां सृष्टिप्रक्रियां प्रति अभिरुचिर्जाता। वस्तुतः 'सृष्टिसमस्या' महत्त्वपूर्णा वर्तते। 'सृष्टिं' प्रति प्रश्नोऽयं स्वाभाविकः समुत्तिष्ठति यत् सृष्टिरियं कुतः, कथं, किमर्थञ्च जाता? स्वसिद्धान्तमनुसृत्य दार्शनिकैः 'सृष्टिप्रक्रिया' प्रतिपादिता। अत्र 'Encyclopaedia Britannica'[१] इति ग्रन्थोऽपि द्रष्टव्योऽस्ति।

'सृज्'-धातोः क्तिन्-प्रत्यये कृते 'सृष्टि'शब्दो निष्पद्यते, यस्यार्थः 'सर्जनं' भवति। शब्दोऽयमाङ्ग्लभाषायां 'Creation Evolution, Manifestation' इत्यादिशब्दैरभिधीयते। कापिलदर्शनस्य (निरीश्वरसांख्यस्य) 'सृष्टिप्रक्रिया' का? तथा किं सन्तोषजनिकेयं वर्तते अथवा न? इत्ययं विषयोऽत्र विविच्यते।

## १. कापिलदर्शनस्य (निरीश्वरसांख्यस्य) 'सृष्टिप्रक्रिया'

विदितमस्ति यत् सांख्यदर्शनस्य प्रवर्त्तकः आदिविद्वान् भगवत्स्वरूपो महर्षिः कपिलोऽस्ति। कापिलसांख्यदर्शनं 'निरीश्वरं' वर्तते[२]। सांख्यसूत्रेषु प्रमाणाभावाद् ईश्वरसिद्धेरुल्लेखो नास्ति[३]। सांख्यप्रवचनभाष्यकारेण चापि

---

१. "The development of a more complete view of the universe unfolded by the observations requires are excursion into theory"
"Encyclopaedia Britannica", 1768, published by William Benton.

२. 'सांख्यमते ईश्वरो नास्ति, अतो निरीश्वरं सांख्यदर्शनमिति'—आचार्यकेदारनाथत्रिपाठी, 'सांख्ययोगकोशः', पृ. १०।

३. (क) 'ईश्वरसिद्धेः'—'सांख्यसूत्रम्'—१.९२।
(ख) 'प्रमाणाभावान्न तत्सिद्धिः'—'सां.सू.' ५.१०।

नित्येश्वरस्यास्तित्वं नाङ्गीकृतम्[१]। ईश्वरकृष्णेनापि ईश्वरतत्त्वस्य प्रतिपादनं न कृतम्। सांख्यतत्त्वकौमुद्यां श्रीवाचस्पतिमिश्रेण स्पष्टीकृतं यत्[२] परमेश्वरस्य किमपि स्थानं नास्ति। प्रकृतेरधिष्ठाता परमेश्वरोऽत्र नाङ्गीकृत:[२]।

'सांख्यदर्शनं' सत्कार्यवादं स्वीकरोति। अतस्तन्मते उत्पत्ते: पूर्वं कार्यं स्वोपादानकारणे अनभिव्यक्तरूपेण तिष्ठति। अत: 'सृष्टे:' तात्पर्यं 'नवोत्पत्ति:' नास्ति, यथा नैयायिका: स्वीकुर्वन्ति; परन्तु अव्यक्तरूपेण पूर्वस्थितसृष्टेराविर्भावो भवति। कार्यरूपं जगदिदं जडात्मकमस्ति। अत एव मूलकारणमस्य 'जडा' प्रकृतिरेवास्ति।

सांख्यदर्शनं मुख्यतस्तत्त्वद्वयं—प्रकृतिं पुरुषं चाङ्गीकरोति। सांख्ये मुख्यगौणरूपेण महदहङ्कारैकादशेन्द्रियाणि पञ्च तन्मात्राणि पञ्च महाभूतानि पुरुषश्चेति पञ्चविंशतितत्त्वानि सन्ति। त्रिगुणात्मिका 'प्रकृति:' कर्त्री (जगदुपादानकारणं) वर्तते। पुरुषस्य भोगाय कैवल्याय च 'प्रकृति:' सृष्टिं प्रलयञ्च करोति। पुरुषोऽविवेकाद् प्रकृते: सुखदु:खादीन् धर्मान् स्वस्मिन् आरोप्य सुख-दु:खादियुक्तो भवति। स्पष्टमिदमस्ति 'अविवेक:' प्रकृतिपुरुषसंयोगस्य कारणमस्ति। रूधरेयनमहोदयस्यापि[३] ईदृशमेव मतमस्ति। इदमप्यवधेयं यद् विवेकख्यात्या प्रकृते: स्वासङ्गतत्वं ज्ञात्वा बन्धनरहित: सन् पुरुष: कैवल्यं प्राप्नोति। प्रकृतिपुरुषयो: पारस्परिकसंयोगाद् गुणसाम्यावस्थारूपायां प्रकृतौ गुणवैषम्यरूप: संक्षोभो भवति। तदनन्तरं सृष्टिर्जायते तथा प्रकृतिपुरुषयो-र्वियोगादेव प्रलयो (सृष्टितिरोभाव:) भवति। अत्र सूर्यनारायणशास्त्रिणो मतं द्रष्टव्यमस्ति[४]।

---

१. (क) 'आरभ्यते इति आरम्भ:, सर्ग:, महदादिभूतान्त:प्रकृत्येव कृतो नेश्वरेण। न ब्रह्मोपादान:'। ('सांख्यतत्त्वकौमुदी'—'सांख्यकारिका' ५६)

(ख) 'सां.त.कौ.'—'सां.का.' ५७।

(ग) Kapila not only rejected Brahman the all Soul but emphatically denied the existence of God—James Hastings—"Encyclopaedia of Religion and Ethics", Vol XI, p.190.

२. अत: परिणामार्थमधिष्ठातुरन्यस्य कल्पनमसमीचीनमिति'—प्रो. आद्याप्रसादमिश्र:, 'तत्त्वप्रभा', सां.का. ५७।

३. According to Sāṅkhya, the failure to discriminate between Puruṣa and Prakṛti is the cause of Sansara (rebirth),—Ruth Reyana—"An Introduction to Indian Philosophy", P.150.

४. The Functions assigned to God creation, sustentations etc. are discharged by Prakṛti and the presence of Puruṣa.
—Suryanarayan Shastri—"The Sāṅkhyakārikā of Īśvarakṛṣṇa", P.XVI.

इत्थं स्पष्टमस्ति यत् पुरुषस्य सन्निधिमात्रेण प्रकृते: साम्यावस्थायां भङ्गो भवति। तत्फलस्वरूपं महदादितत्त्वानां सृष्टिर्भवति। अत: प्रकृतिपुरुषयो: संयोगस्यैव जगदुत्पादकत्वं स्वीक्रियते। श्रीनारायणतीर्थेनापि[१] कथितं यन्महदादिलक्षण: सर्ग: संयोगजन्य एवेत्यर्थ:।

'सांख्ये' प्रकृतिपुरुषौ परस्परं विरोधिनौ स्वतन्त्रौ च स्वीकृतौ स्त:। 'प्रकृति:' जडा 'त्रिगुणात्मिका' चास्ति तथा 'पुरुष:' चेतनो निर्गुणश्च वर्तते। प्रकृतिरेकास्ति, पुरुषास्त्वनेके। प्रकृति: सक्रियरूपा वर्तते; परन्तु पुरुषो निष्क्रियोऽस्ति। पुरुषो भोक्ता एवं प्रकृति: 'भोग्या' स्त:। अतोऽत्र स्वाभाविकोऽयं प्रश्नो जायते यत् तयो: प्रकृतिपुरुषयो: परस्परं भिन्नत्वेऽपि प्रकृत्या सह पुरुषस्य 'संयोग:' कथं सञ्जायते? अस्य समाधानार्थमेव सांख्यदर्शनेनोक्त-संयोगो विभिन्नैर्दृष्टान्तै: स्पष्टीकृत:। यथा पङ्ग्वन्धयोरुभयो: परस्परं संयोगो भवति, तथैव पुरुषस्य भोगाय कैवल्याय च प्रकृतिपुरुषयो: परस्परं संयोगो भवति[२]। एवं तत: प्रकृतौ गुणवैषम्यरूपसंक्षोभात् सर्गस्योत्पत्तिर्भवति। अचेतनत्वाद् अन्धत्वेऽपि 'प्रकृति:' पुरुषसान्निध्यात् प्रकाशं प्राप्नोति तथा निष्क्रियत्वेऽपि पुरुष: प्रकृते: सान्निध्याद् गतिमान् भवति। इत्थं स्पष्टमिदं वर्तते यद् यथा पङ्गुव्यक्ति: कस्यचिदन्धपुरुषस्य स्कन्धोपरि आरुह्यान्धस्य मार्गनिर्देशनं करोति, तथैव पुरुषोऽपि प्रकृतेर्मार्गनिर्देशनं करोति।

अत्रान्येऽपि दृष्टान्ता अवधेया: सन्ति। यथा 'अयस्कान्तमणि:[३]' स्वस्मिन् गत्यभावेऽपि स्वसान्निध्याल्लौहखण्डमाकर्षति, तथैव निष्क्रियत्वेऽपि पुरुष:

---

१. 'सांख्यचन्द्रिका'—'सां.का. ५७।

२. (क) 'पुरुषस्य दर्शनार्थं तथा प्रधानस्य।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृत: सर्ग:'॥

(ख) C.D. Sharma—"A critical survey of Indian Philosophy" p 158-159.

(ग) Just as a lame man and blind man travelling alongwith so, too, creation is effected by nature and the soul which are like mutually dependent—Madhawa Acharya—Tr. by E.B. Cowell and A.E. Cought "Sarva-Darshan-Sangraha", p. 228.

३. (क) तत्सन्निधानादधिष्ठातृत्वं मणिवत्—'साख्यसूत्रम्' १.९६।

(ख) The Sankhya argues that intelligent and inactive Puruṣa moves intelligent but active Prakṛti to action even as a magnet attracts iron without itself moving.

—J.N. Sinha—"A History of Indian Philosophy" Vol. II. p 94.

स्वसान्निध्यात् प्रकृतिं प्रवर्तयति। यथा अचेतनं जलं[१] संसारस्योपकारार्थं प्रवर्तते, तथैव पुरुषविमोक्षार्थमचेतना प्रकृतिरपि प्रवर्तते। यथा 'अचेतना[२] वृष्टिः प्राणिनां कल्याणार्थं प्र्वर्तते, तथैव 'प्रकृतिः' पुरुषस्य कृते कार्यं करोति। यथा गोवत्सस्य पोषणायाचेतनदुग्धस्य[३] प्रवृत्तिः स्वतो भवति, तथैव पुरुषस्य मोक्षाय (कैवल्याय) प्रकृतेः प्रवृत्तिः स्वतो जायते। गौडपादाचार्य उक्तदृष्टान्तस्य द्विविधमर्थं गृह्णाति। गौडपादानुसारेण[४] सांख्यकारिकायां (५७) स्पष्टीकृतं यन्न केवलं क्षीरप्रकृत्योः प्रवृत्तेरेव विधानमस्ति, अपि तु तयोर्निवृत्तिरूपोऽप्यर्थोऽत्र ध्वनितो भवति। यथा वत्सविवृद्धिनिमित्तं क्षीरस्य प्रवृत्तिः स्वतो भवति, तथा वत्सस्य पोषणानन्तरं दुग्धस्य निवृत्तिरपि स्वयमेव भवति। एवमेव प्रकृतिरपि पुरुषस्य भोगसम्पादनाय मोक्षाय च स्वयमेव प्रवृत्ता निवृत्ता च भवति।

अत्रेदमवधेयं यच्छ्रीवाचस्पतिमिश्र[५] उक्तदृष्टान्तस्य केवलं प्रवृत्तिपरकमर्थमेव स्वीकरोति। यथा गवा भक्षितं तृणोदकं क्षीरभावेन परिणम्य वत्सविवृद्धिं करोति, एवमेव पुरुषविमोक्षनिमित्तम् अज्ञमपि प्रधानं सृष्टिकार्ये प्रवर्तते[६]।

---

१. यथा च जलमचेतनं लोकोपकाराय प्रवर्तते तथा च प्रकृतिरचेतनाऽपि पुरुषविमोक्षणाय प्रवर्त्स्यति। ('श्रीमाधवाचार्यः, सर्वदर्शनसंग्रहः' पृ. १२३)

२. Just as the unintelligent rain acts for the welfare of living creatures and so unintelligent nature will act for the liberation of the soul.—Madhawa Acharya—Tr. by E.B. Cowell and A.E. Cought "Sarva Darasan Sangraha" p. 228.

३. (क) वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य।। (सां.का. ५७)

(ख) धेनुवद्वत्साय—सां.सू. २.३७।

(ग) '............यथा वत्सविवृद्ध्यमर्थमचेतनं क्षीरं प्रवर्तते'। (श्रीमाधवाचार्यः, 'सर्वदर्शनसंग्रहः', पृ. १२३)

४. किन्त्वचेतनानामपि प्रवृत्तिर्दृष्टा, विवृत्तिश्च यथा तृणोदकं गवा भक्षितं क्षीरभावेन परिणम्य वत्सविवृद्धिं करोति, पुष्टे च वत्से निवर्तते, एवं पुरुषविमोक्षनिमित्तं प्रधानस्येति अज्ञस्य प्रवृत्तिरिति। (गौडपादभाष्यम्, सां.का. ५७)

५. दृष्टमचेतनमपि प्रयोजनं प्रवर्तमानं, यथा वत्सवृद्ध्यर्थं क्षीरमचेतनं प्रवर्तते, एवं प्रकृतिरचेतनापि पुरुषविमोक्षणाय प्रवर्तिष्यते। (सां.त.कौ., सां.का. ५७)

६. तत्त्वप्रभा, 'सां.का.' ५७।

यथा अचेतनं दुग्धं दधिरूपेण स्वयमेव परिणमते, तथैव प्रकृतिरपि महदादिरूपेण स्वतः प्रवर्तते। विचारोऽयं श्रीविज्ञानभिक्षुणा सांख्यप्रवचनभाष्यकारेणापि[1] स्पष्टीकृतः।

युक्तिदीपिकायां[2] प्रकृतिपुरुषयोर्मध्ये संयोगस्य स्पष्टीकरणमित्थमस्ति—वार्षगणानां तु यथा स्त्रीपुरुषशरीराणामचेतनानामुद्दिश्येतरेतरं प्रवृत्तिस्तथा प्रधानस्येत्ययं दृष्टान्तः।

सांख्यकारिकायाः (२१) गौडपादभाष्ये कथितं यत्—'यथा स्त्रीपुरुषसंयोगात् सुतोत्पत्तिस्तथा प्रधानपुरुषसंयोगात् सर्गस्योत्पत्तिर्भवति'।

उक्तदृष्टान्तैः स्पष्टमिदमस्ति यत् प्रकृतिपुरुषसंयोगादेव सृष्टिर्भवति। सांख्यसूत्रे[3] उक्तमस्ति यत् 'कर्मवैचित्र्याद् सृष्टिवैचित्र्यम्'।

पुनः प्रश्नोऽयमुत्तिष्ठति यत् प्रकृतेः 'निवृत्तिः' कथं भवति? एतत्समाधानं नर्तकीदृष्टान्तेनात्र क्रियते[4]। यथा नर्तकी दर्शकान् रङ्गं दर्शयित्वा नृत्याद् उपरमते, तथैव 'प्रकृतिः' पुरुषस्य 'भोगं' सम्पाद्य सृष्टेरुपरमते। नारायणतीर्थमहोदयस्यापि[5] अयमेव विचारोऽस्ति।

अत्र पी.टी.राजूमहोदयस्य[6] विचारः सुस्पष्टो वर्तते। श्रीमाधवाचार्येणाप्युक्तं यत् 'ननु पुरुषार्थनिबन्धना भवतु प्रकृतेः प्रवृत्तिः,

---

१. सांख्यप्रवचनभाष्यम्, सां.सू. ३.५९।

२. युक्तिदीपिका, सां.का. ५७।

३. सां.सू. ६.४१।

४. (क) रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात्।
पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः॥ (सां.का. ५९)

(ख) नर्तकीवत् प्रवृत्तस्यापि निवृत्तिश्चरितार्थत्वात्। ('सां.सू.' ३.६९)

५. यथा नर्तकी सुप्रीता हावभावलीलाविलासवती विविधालङ्कारशोभिता नृत्यगीतादिभिरात्मानं रङ्गस्थस्य सभ्यादेर्दर्शयित्वा दृष्टमनेनेति कृतप्रयोजना धनप्राप्त्या निवर्तते। एवं प्रकृतिर्बुद्ध्यादिसुखदुःखान्तर्भावेनात्मानं पुरुषस्य प्रकाश्य त्वमन्योऽहमन्येति विवेकतो निवर्तते असंयुक्ता भवति, तथा निवृत्तिकः पुरुषो मोक्षमधिगच्छति'। (सांख्यचन्द्रिका, सां.का. ५९)

६. Prakṛti is like a dancing girl who shows her postures and forms to those who are interested and retires from those who are not. and she shows herself in the same way to all.

—P.T. Raju, The Philosophical Traditions of India—p. 159.

निवृत्तिस्तु कथमुपपद्यत इति चेदुच्यते—यथा भर्त्रा दृष्टदोषा स्वैरिणी भर्तारं पुनर्नोपैति यथा वा कृतप्रयोजना नर्तकी निवर्तते तथा प्रकृतिरपि[१]।

'सदवत् पाके' इति सांख्यसूत्रमपि[२] प्रवृत्तायाः प्रकृतेर्निवृत्तिमपि प्रतिपादयति।

निष्कर्षोऽयमस्ति यद् अविवेकिनं पुरुषं प्रति 'प्रकृतिः' सृष्ट्यर्थं प्रवर्तते। विवेकिनं (उदासीनं) पुरुषं प्रति सैव प्रकृतिः सृष्टिकार्यात् निवर्तते। एतादृशो विचारो पीटीराजूमहोदयस्यापि[३] वर्तते।

इत्थं स्पष्टमिदं भवति यत् कापिलदर्शने (निरीश्वरसांख्ये) जगतः सृष्टितिरोभावार्थं परमेश्वरस्यावश्यकता नास्ति। अत्र रूपरेयनमहोदयस्यापि[४] मतं द्रष्टव्यमस्ति। प्रकृतिपुरुषयोः संयोगादेव सृष्टिर्भवति। अत्राधिष्ठातृत्वेनापि परमेश्वरस्वीकारः नोचितोऽस्ति। एतत्प्रसङ्गे श्रीवाचस्पतिमिश्रस्य[५] विचारो द्रष्टव्योऽस्ति। अणिमासेनस्यापि[६] अयमेवाभिप्रायोऽस्ति।

## २. आलोचनम् (कापिलदर्शनस्य सृष्टिप्रक्रिया किं सन्तोषजनिका?)

कापिलदर्शने सृष्टिप्रक्रियार्थमपि परमेश्वरस्वीकारस्यावश्यकता नास्ति। प्रकृतिपुरुषसंयोगादेव सृष्टिर्भवति तथा तयोः वियोगादेव 'प्रलयो' भवति। एतदर्थं सांख्यदर्शनेन दृष्टान्ता दत्ताः; परन्तु विचारानन्तरमत्र विविधापत्तयः सन्ति। वस्तुतः कापिलदर्शने परमेश्वरनिरपेक्षः सृष्टिविचारः सन्तोषप्रदो नास्ति।

---

१. श्रीमाधवाचार्यः—'सर्वदर्शनसंग्रहः', पृ. १२४।

२. सां.सू. ३.६३।

३. It acts in the same way for every atman and not evolues the world when the atman so desires and it withdraws the world when the atman is no longer interested in her.
—P.T. Raju—The Philosophical traditions of India, p. 159.

४. We have learned that Sankhya philosophers hold the world is not the result of any act of a creator God.
—Ruth Reyana "An Introduction to Indian Philosophy"

५. नेश्वराधिष्ठितप्रकृतिकृतो निर्व्यापारस्याधिष्ठातृत्वासम्भवात्। (सां.त.कौ., सां.का. ५६)

६. This activity of Prakṛti resulting in the sense that it does not receive any kind of active guidance from the spiritual priniciple.
—Anima Sen Gupta "The Evolution of the Sankhya schime of thought".—p. 32.

सांख्यदर्शने इदमुक्तमस्ति यत् परस्परं भिन्नयोः प्रकृतिपुरुषयोः पङ्ग्वन्धवत् 'संयोगो' भवति। प्रथमो दोषोऽत्रायमस्ति यद् दृष्टान्ते पङ्ग्वन्धौ उभौ चेतनौ स्तः। 'दार्ष्टान्ते प्रकृतिः' अचेतनास्ति; परन्तु 'पुरुषस्तु' चेतनो निष्क्रियश्चास्ति। अत एवात्र वैषम्यमुपलभ्यते। पूर्वोक्तपङ्ग्वन्धदृष्टान्ते तयोश्चेतनत्वात् तत्र पङ्गुपुरुषस्य शब्दाद् अन्धपुरुषस्य प्रवृत्तिर्भवति। अतस्तयोः 'संयोगो' भवितुमर्हति। दार्ष्टान्ते तु प्रकृतेश्चेतनत्वात्, पुरुषस्य च निष्क्रियनिर्गुणत्वान्न प्रवृत्तिर्भवितुमर्हति। अतः प्रश्नोऽयमस्ति यत् तयोः (प्रकृतिपुरुषयोः) संयोगः कथं सम्भवति? सर्वपल्लिराधाकृष्णन्महोदयः पङ्ग्वन्धदृष्टान्त एव सन्तोषजनको न भवतीति कथितवानस्ति—'पङ्ग्वन्धयोर्विषयस्तुसङ्गतः, द्वयोश्चेतनत्वात्, परस्परं परामर्शकर्तृत्वाच्च; परन्तु 'दाष्टान्ते प्रकृतिः' चेतनरूपा नास्ति'[1]।

द्वितीयदोषः सांख्यदर्शने अयं वर्तते यत् 'प्रकृतिः' जडास्ति। वस्तुतो जडवस्तुनः किमपि प्रयोजनं न भवति। प्रयोजनवान् तु चेतनो भवति। अतः प्रकृतेर्जडत्वात्, पुरुषस्य चोदासीनत्वान्निष्क्रियत्वान्निर्गुणत्वाच्च तयोः 'संयोगो' भवितुं नार्हति।

तृतीयदोषोऽयमस्ति यद् 'दृष्टान्ते' पङ्ग्वन्धयोर्द्वयोः प्रयोजनं स्वगन्तव्यस्थानस्य प्राप्तिरस्ति, तन्नात्र सम्भवति। यतो हि 'दार्ष्टान्ते' पुरुषस्योद्देश्यं मोक्षप्राप्तिस्तथा प्रकृतेः प्रयोजनं भोगप्राप्तिरस्ति। तयोः प्रतिकूलत्वाद् द्वयोः संयोगः परस्परं न सम्भवति।

'अयस्कान्तमणेरपि' दृष्टान्तत्वं न सम्भवति। यदि पुरुषसन्निधानादेव 'प्रकृतिः' प्रवर्तते, तदा पुरुषस्य प्रकृत्या सह सर्वदा सन्निधानात् प्रकृतेर्निरन्तरं गतिशीलत्वात् सृष्टेरनाद्यनन्तत्वं सिद्धं स्यात्। प्रकृतेः सदा परिणामात् पुरुषस्य मोक्षोऽपि (कैवल्यमपि) न स्यात्।

सृष्टेः कारणस्य 'प्रकृतिपुरुषसंयोगस्य' स्पष्टीकरणार्थमेव 'अयस्कान्तमणेः'[2] दृष्टान्तत्वेनोपन्यासो वर्तते; किन्त्विदमपि सुसङ्गतं नास्ति। अयस्कान्तमणेर्लौहकणान् स्वाभिमुखीकर्तुम् आकर्षणशक्तिरस्ति; किन्तु पुरुषे आकर्षणाय शक्तिविशेषो नास्ति।

---

१. डॉ. राधाकृष्णन्, भारतीयदर्शनम्, द्वितीयो भागः, पृ. ३१४।

२. तत्सन्निधानादधिष्ठातृत्वं मणिवत्—'सां.सू.' १.९६।

(ख) J.N. Sinha—"A History of Indian Philosophy" Vol. II, p. 24.

सांख्ये उक्तमस्ति यद् यथा अचेतनं जलमथवा अचेतनवर्षा जगद्रक्षणार्थं कार्यं करोति, तथैव प्रकृतिरपि पुरुषस्य कैवल्याय स्वकार्यं करोति—इदमपि समीचीनं नास्ति। ईश्वरेच्छाधिष्ठितत्वेन[१] 'अचेतनं जलम्' अथवा 'अचेतनवर्षा' प्राणिनामुपकारार्थं कार्यं करोति; परन्तु प्रकृतिः पुरुषस्य कैवल्यार्थं यत्कार्यं करोति, तत्र प्रकृतेः परमेश्वराधिष्ठितत्वं निरीश्वरसांख्ये वर्णितं नास्ति।

सांख्यस्य कथनमिदं यद्यथा दुग्धदृष्टान्तस्य स्वाभाविकत्वं वर्तते, तथैव पुरुषस्य कृते प्रकृतेः सृष्टिकर्तृत्वं स्वाभाविकमस्ति; परन्तु कथनमिदमपि समीचीनं नास्ति[२]। दृष्टान्ते गोवत्सस्य चेतनत्वमस्ति। गोवत्सस्य जीवनादृष्टत्वाद् गवि वात्सल्यगुणस्य प्रादुर्भावाद् दुग्धं प्रवर्तते। 'दार्ष्टान्ते' तु प्रकृतिरचेतनास्ति, अत एव तस्याः प्रवृत्तिः कथं सम्भवति?

'तृणोदकस्य' दृष्टान्तोऽप्युचितो नास्ति[३]। स्थानविशेषे स्थितं तृणोदकमथवा बलीवर्देन भक्षितस्तृणविशेषो (घासः) दुग्धोत्पत्तिं न करोति, अपि तु सवत्सा चेतना गौरेव दुग्धं प्रददाति।

अचेतनं दुग्धं स्वयमेव दधिरूपेण परिणमते—कथनमिदमपि युक्तं नास्ति। यतो हि चेतनप्रयत्नसापेक्षान्यनिमित्तादेव दुग्धं दधिरूपेण परिणामं प्राप्नोति[४]।

---

१. (क) शास्त्रं च योऽप्सु तिष्ठन्, योऽन्तरो यमयति......। (बृहदारण्यकोपनिषद् ३.७.४)
(ख) शाङ्करभाष्यम्, ब्रह्मसूत्रम्, २.२.३।

२. (क) The flow of milk in the cow for the nourishment of calf, a process which goes on only so long as there is a need for it in the calf, is hardly a sufficient analogy since it is matter for proof that the cow is a non-intelligent being.
—S.S. Suryanarayan Shastri, "The Sankhya Karika of Ishwarkrishna" p. XII.
(ख) अचेतनत्वेऽपि क्षीरवच्चेष्टितं प्रधानस्य—सां.सू. ३.५९।
(ग) यथा क्षीरं पुरुषप्रयत्ननैरपेक्ष्येण स्वयमेव दधिरूपेण परिणमते एवमचेतनत्वेऽपि परप्रयत्नं विनाऽपि महदादिरूपपरिणामः प्रधानस्य। (सांख्यप्रवचनभाष्यम्, पृ. ४८०)

३. .........For the transformation does not take place in the body of a dead cow or where grass is eaten by a bull.
—S.S. Suryanarayan Shastri—"The Sankhya Karika of Ishwarkrishna".

४. सां.प्र.भा.—सां.सू.।

'सांख्ये' स्त्रीपुंशरीराणामचेतनानां दृष्टान्तो दीयते—तदप्ययुक्तमस्ति। यतो हि स्त्रीपुंशरीराणामचेतनानां प्रवृत्तिश्चेतनाधिष्ठितत्वेनैव भवति। यथा स्त्रीपुरुषसंयोगात् सुतोत्पत्तिस्तथैव प्रधानपुरुषसंयोगात् सर्गस्योत्पत्तिर्भवतीति कथनमुचितं नास्ति। स्पष्टमस्ति यद् दृष्टान्ते तु स्त्रीपुरुषौ चेतनौ स्तः।

सांख्ये—'यथा 'नर्तकी' स्वनृत्यं दर्शकान् दर्शयित्वा पश्चात् स्वनृत्यात् स्वतो विनिवृत्ता भवति'[१] इत्यपि युक्तिसङ्गतं न प्रतीयते। दृष्टान्ते 'नर्तकी' चेतनास्ति। सा दर्शकानां प्रयोजनं जानाति। 'दार्ष्टान्ते' प्रकृतिरचेतना वर्तते, अतः 'प्रकृतिः' पुरुषस्य प्रयोजनं ज्ञातुमसमर्थास्ति।

सर्वपल्लिराधाकृष्णन्महोदयोऽपि सांख्यप्रदत्तदृष्टान्तदोषान् विचार्य सन्तोषं नानुभूयैव स्वमतं स्पष्टीकृतवान् यत् 'सांख्यदर्शनस्य सर्वतोऽधिकः क्लिष्टः अथवा भ्रामको विषयः प्रकृतिपुरुषयोः सम्बन्धसमस्या वर्तते[२]'।

'सांख्यशास्त्रे' उक्तमस्ति यत् प्रकृतिपुरुषयोः 'संयोगो' यथार्थो न विद्यते; किन्तु संयोगाभासोऽस्ति। अनेनैव संयोगाभासेन सृष्टिर्भवति। श्रीवाचस्पतिमिश्रानुसारेण पुरुषस्य प्रतिबिम्बो बुद्धौ जायते। अतः 'प्रकृतिः' चैतन्ययुक्ता इव भवति। एवं पुरुषो भ्रमवशाद् बुद्धिगतगुणान् स्वस्मिन् आरोप्य स्वस्वरूपमपि तद्वज्जानाति। यथा जपाकुसुमस्य सन्निधानात् निर्मलस्फटिके 'रक्तस्फटिक' इत्याकारकोऽनुभवो जायते।

अतः सांख्यशास्त्रे प्रकृतिसंयोगो यथार्थपुरुषेण सह नास्ति; अपि तु बुद्धौ प्रतिबिम्बितपुरुषेण सह वर्तते। अत्रेयमाशङ्का जायते यद् बुद्धिः स्वोत्पत्तेः पूर्वं (आविर्भावपूर्वं) केन प्रकारेण पुरुषस्य प्रतिबिम्बं गृह्णाति? अस्याः शङ्कायाः परिहारार्थं सांख्ये कथितमस्ति यत् पुरुषः स्वतः प्रतिबिम्बितो भवति।

यदि प्रकृत्या सह पुरुषस्य संयोगः प्रतिबिम्बश्च स्वाभाविकस्तदा सर्वदा प्रकृत्या सह पुरुषसंयोगस्य प्रतिबिम्बस्य सत्त्वात् कदापि प्रकृतितः पुरुषस्य वियोगो न स्यादिति। तदातस्यामवस्थायां पुरुषस्य कदापि मोक्षो (कैवल्यं) न भवितुमर्हति।

सांख्यविचारोऽयं यत् प्रकृतिरेव पुरुषार्थेनाधिष्ठिता सती जगतः सर्जने प्रवृत्तिशीला भवति—उचितो नास्ति। यतो हि पुरुषार्थोऽप्यचेतनोऽस्ति।

---

१. सां.का. ५९।

२. डॉ. राधाकृष्णन्—'भारतीयदर्शनम्', द्वितीयो भागः, पृ. ३८४।

जीवोऽपि प्रकृतेरधिष्ठाता भवितुं नार्हति, अल्पज्ञत्वादल्पशक्तिमत्वाच्च जीवात्मा (बद्धजीवः) प्रकृतिमधिष्ठातुं नार्हति। श्रीवाचस्पतिमिश्रस्य[१] कथनमपि समीचीनमस्ति—'न च क्षेत्रज्ञाश्चेतना अपि प्रकृतिमधिष्ठातुमर्हन्ति, तेषां प्रकृतिस्वरूपानभिज्ञत्वात्'।

सत्यमिदमप्यस्ति यन्न हि कश्चिन्मुक्त आत्मा अधिष्ठाता भवितुमर्हति, बद्धापेक्षया तस्य शक्तिप्राबल्ये सत्यपि जगदुत्पत्त्यादौ सामर्थ्यासम्भवात्, तस्य मुक्तावस्थायाः प्रागपि च जगतो विद्यमानत्वात्। अनेकेषु मुक्तात्मसु कस्यचिदेकस्यानेकेषां वा केषाञ्चिदधिष्ठातृत्वं स्यादिति नियामकासम्भवात्।

प्रकृतिलीनानामनेकत्वात् सादित्वाच्च (प्रकृतिलीनानामपि) जन्येश्वराणामधिष्ठातृत्वं युक्तं नास्ति। प्रश्नोऽयं पुनरुत्तिष्ठति यद् अनेकेषु कस्यैकस्यानेकेषां वा केषाञ्चिदधिष्ठातृत्वं स्यादिति, नियामकासम्भवात्।

अत एव 'अधिष्ठाता' तु नित्यमुक्तः सर्वज्ञसर्वशक्तिमान् अनादिरेकः सदैवेश्वरश्च भवेत्। अवधेयमस्ति यत् कापिलदर्शने (निरीश्वरसांख्ये) प्रकृतेरधिष्ठातृत्वेनाप्यनादिनित्यमुक्तपरमेश्वरस्य स्थानं नास्ति।

श्रीकृष्णमणित्रिपाठिनः[२] कथनमिदमस्ति—'तन्मत्ते पुष्करपलाशवन्निर्लेपस्य निरीहस्य पुरुषस्य अचेतनायाश्च प्रकृतेः स्वयं संयोगो न सम्भवति, अतस्तयोरुपरि परमेश्वरसत्तास्वीकार आवश्यकः'।

सृष्टिप्रक्रियायां मन्येऽहं निरीश्वरसांख्यस्यानेका आपत्तयः सन्ति। एतासामापत्तीनां प्रधानं कारणमिदमस्ति यत् निरीश्वरसांख्ये अधिष्ठातारं परमेश्वरं विना प्रकृतिपुरुषयोः संयोगः स्वीक्रियते।

अत एव पण्डितबलदेवोपाध्यायोऽपि[३] सांख्यस्येश्वरनिरपेक्षसृष्टिप्रक्रिया-मालोचितवान् 'पुरुषस्य प्रकृत्या सह प्रथमः संयोगः कथं भवति'?—अस्य प्रश्नस्यापि सांख्यसम्मतमुत्तरं सन्तोषप्रदं नास्ति।

---

१. श्रीवाचस्पतिमिश्रः 'सां.त.कौ.' अवतरणिका—सां.का. ५७।

२. श्रीकृष्णमणित्रिपाठी—पुराणेतिहासयोः सांख्ययोगदर्शनविमर्शः।

३. बलदेवोपाध्यायः—'भारतीयदर्शनम्', पृ. २८४।

अत्र सूर्यनारायणशास्त्रिणो[१] विचारोऽपि द्रष्टव्योऽस्ति—The possibility & the orderly evolution of the non-intelligent is sought to be established on the ground of various analogies, not one of which is satisfactory.

निरीश्वरसांख्यस्य 'सृष्टिप्रक्रिया' सन्तोषजनिकेति न प्रतीयते। सी.डी. शर्ममहोदयस्याप्यत्र[२] मतं द्रष्टव्यमस्ति। निरीश्वरसांख्यस्य सृष्टिप्रक्रिया असन्तुष्टो भूत्वैव सुरेन्द्रदासगुप्तमहोदयेनापि[३] सृष्टिप्रक्रियाव्यवस्थायै स्वमतं स्पष्टीकृतं यत्—Yoga here asks, how the blind tendency of the non-intelligent prakṛti can bring forth this order and harmany of the universe, how can it determine what course of evolution will be of the best service to the puruṣas, how can it remove its own barriers and lend itself to be Cualutionary process from the state of Prakṛti equlibrium? How, to can this blind tendency so regulate the evolutionary order that men must suffer according to their bad karmas and happin according to their good ones? There must be some intelligent bein who should help the course of evolution in such a way that this system of order and harmony may be attained. This Being Ishwar.

---

१. Edited and Translated by Suryanarayana Shastri "Sankhya Karika of Ishwarkrishna". p. XII.

२. If Prakṛti and Puruṣa are absolute and independent, they can never come into contact and hence there can be no evolution at all, as shankara has pointed out, Prakṛti being unintelligent and Puruṣa being indifferent and there being no third principle, no teritium quid, there can be no connection of the two. Neither real contact (sanyoga) nor semplarice of contact (sanyogabhasa) no more presence of puruṣa (Sannidhyamatra), as we have noticed above, can explain evolution Sankhya realities the mistake but in order to defrent the initial blunder, it commits blunders after blunders.

—C.D. Sharma—"A critical survey of Indian philosophy. p. 165-166.

३. Surendranath Dasgupta—"A History of Indian Philosophy, p. 258-259.

**निष्कर्षः**

निष्कर्षोऽयमस्ति यत् प्रकृतिपुरुषयोः संयोगवियोगकर्त्तारं परमेश्वरं विना निरीश्वरसांख्यस्य सृष्टिप्रक्रियायामनेका आपत्तयः सन्ति। कापिलदर्शनस्य नित्येश्वरानधिष्ठितसृष्टिप्रक्रिया वस्तुतः सन्तोषप्रदा मे न प्रतिभाति। निरीश्वरसांख्यस्येमां न्यूनतामवलोक्यैव समानतन्त्रयोगदर्शनेनापि पञ्चविंशतितत्त्वेभ्योऽतिरिक्ता परमेश्वरस्य सत्ता स्वीकृतास्ति। मन्येऽहं कापिलदर्शने नित्येश्वरस्याधिष्ठातृत्वाभावात् 'सृष्टिप्रक्रिया' न केवलं तर्कबुद्ध्या; अपि तु आस्थादृष्ट्यापि सफलीभूता नास्ति। स्वीकरोम्यहं यत् परमेश्वरस्य (नित्येश्वरस्य) अनङ्गीकारेणैव सृष्टिप्रक्रियायां जनितसमस्यां दृष्ट्वैव कापिलदर्शनं (निरीश्वरसांख्यं) विद्वद्भिरालोच्यत इति।



# आन्वीक्षिक्या अनितरसाधारणं विद्याप्रस्थानत्वम्

**डॉ. रामचन्द्रशर्मा**
दर्शनविभागाध्यक्षः
श्रीसंन्यासिसंस्कृतमहाविद्यालयः
ढुण्ढिराजगणेशः, वाराणसी



प्राच्यदर्शनेषु न्यायशास्त्रस्यान्वीक्षिकीदर्शनस्य वा विद्यतेऽतीव महत्त्वपूर्णं स्थानम्। विनाऽनेन शास्त्रेण न तावत्प्राच्यदर्शनेभ्यस्तत्त्वविवेचनी दृष्टिः, पदार्थतत्त्वावधारिणी प्रज्ञा, प्रमाणतर्कप्रदर्शकप्रतिभापाटवम्, श्रुतिप्रामाण्य-प्रस्थापनसामर्थ्यम्, निःश्रेयससाधनमननरहस्यञ्चाधिगन्तुं शक्यते।

अनादिकालात् सततं संसर्यमाणेऽस्मिन् संसारे सर्वे प्राणिनो जन्मप्रभृति लयं यावत् स्व-स्वचेष्टाभिः सुखमेवाप्तुमभिलषन्ति। कीटपतङ्गतो मानवपर्यन्तेषु जीवेषु सुखार्थिन्येव प्रवृत्तिर्दरीदृश्यते। दुःखनिवृत्तिः सुखप्राप्तिश्च सर्वेषां प्राणिनां परमं लक्ष्यम्—

> दुःखत्रयाभिघाताज्जिज्ञासा तदपघातके हेतौ।
> दृष्टे साऽपार्था चेन्नैकान्तात्यन्ततोऽभावात्[१]।।

इति सांख्यवचनानुसारं जीवेषु सर्वाधिकबुद्धिवैभवसम्पन्नो मानवो निजविवेकबलेन अधिकांशतो दुःखात्मकेऽस्मिन् संसारे दुःखापघातकसाधनान्वेषणाय यथार्थसुखस्वरूपनिर्धारणाय च प्रयतमानो विद्यार्जनं करोति। उक्तमपि—

> विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह।
> अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते[२]।।

अमृतत्वम्—आत्यन्तिकदुःखनिवृत्तिर्मोक्षोऽपवर्गो निःश्रेयसमिति पर्यायाः। विद्ययैव मनुष्योऽमृतत्वमवाप्नोति। 'द्वे विद्ये वेदितव्ये', 'ऋते ज्ञानान्न मुक्तिः', 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इत्यादिवाक्येभ्यो

---

१. सांख्यकारिका, का. १;  २. ईशावास्योपनिषद्, म. ११।

विद्याया महत्त्वं स्फुटीभवति। उपनिषत्सु परापरभेदेन विज्ञापिता विद्या पश्चाद्वर्त्तिभिराचार्यैः प्रतिपाद्यपदार्थतत्त्वभेदाधारेण विभिन्नरूपैर्व्याख्याता। तद्यथा—

**आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च शाश्वती।**
**विद्याश्चतस्र एवैताः परमैकान्तिहेतवः।।**

राजशेखरेण काव्यमीमांसायामुपर्युक्तेषु विद्यास्थानेष्वान्वीक्षिकीविद्यायाः सर्वातिशायित्वं विज्ञापितम्। तद्यथा—

'आन्वीक्षिक्या विवेचिता त्रयी, वार्त्तादण्डनीत्योः प्रभवति'[१]।

आचार्यकौटिल्येनापि स्पष्टरूपेणान्वीक्षिक्याः सर्वोत्कृष्टत्वमुद्घोषितम्—

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
आश्रयः सर्वधर्माणां सेयमान्वीक्षिकी मता।।[२]

आन्वीक्षिकीविद्याविषये कौटिल्यस्येदं कथनं सर्वथा युक्तिसङ्गतम्। सर्वविद्याप्रदीपत्वं, सर्वकर्मोपायत्वं,सर्वधर्माश्रयत्वञ्चास्या विद्यायाः कुतः सिद्ध्यतीति जिज्ञासायां किञ्चिदूह्यते।

## १. प्रदीपः सर्वविद्यानाम्

सर्वविद्यानां प्रकाशकः प्रदीपस्तावदान्वीक्षिक्येव, यतः समस्ता विद्या वाग्व्यवहारेणैवाधिक्रियन्ते, यावद्भाषाऽवधारकः पदपदार्थसम्बन्धविषयको बोधो नावधार्यते तावत्समुचितं विद्यार्जनन्नैव कर्तुं शक्यते। शब्दार्थसम्बन्धे ज्ञाते सत्येव पदार्थतत्त्वाधिगमनं जायते। शब्दार्थसम्बन्धः शक्तिः। शक्तिग्रहश्च निम्नलिखितोपायैर्जायते—

शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद् व्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः[३]।।

उपर्युक्तेषूपायेषु प्रयोज्यप्रयोजकवृद्धव्यवहारस्यैव सर्वप्राथम्यं विद्यते। यथोक्तं जगदीशतर्कालङ्कारेण शब्दशक्तिप्रकाशिकायाम्—

सङ्केतस्य ग्रहः पूर्वं वृद्धस्य व्यवहारतः।
पश्चादेवोपमानाद्यैः शक्तिधीपूर्वकैरसौ।।[४]

---

१. काव्यमीमांसा, पृ. १०; २. अर्थशास्त्रम्, १।२।
३. द्र. न्यायसिद्धान्तमुक्तावली, शब्दखण्डे, शक्तिग्रहोपायप्रकरणे।
४. शब्दशक्तिप्रकाशिका, २०।

तथा हि—व्युत्पित्सुर्बालो 'गामानयेति' प्रयोजकवृद्धवाक्यश्रवणानन्तरं प्रयोज्यवृद्धस्य प्रवृत्तिमुपलभमानो गवानयनञ्च दृष्ट्वा अन्वयव्यतिरेकाभ्यामन्वीक्षां विधाय प्रयोज्यवृद्धप्रवृत्तिजनकज्ञानस्य वाक्यजन्यत्वं निश्चित्य 'गां बधान, अश्वमानय'इत्यावापोद्वापाभ्यां 'गो'पदस्य 'गोत्वविशिष्टे' शक्तिः, 'अश्व'पदस्य च 'अश्वत्वविशिष्टे शक्ति'रित्यवधारयति। इत्थं बालो वृद्धव्यवहारं दृष्ट्वा अन्वीक्षया शब्दार्थसम्बन्धं विज्ञाय पदार्थतत्त्वमवधारयति। इत्थमिदमायाति यदान्वीक्षिक्येव 'सर्वविद्यानां प्रदीपः', तदभावे न कथञ्चिदपि विद्याव्यवहारो भवितुमर्हति।

## २. उपायः सर्वकर्मणाम्

आन्वीक्षिक्याः सर्वकर्मोपायत्वमपि साधु घटते। 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति वचनानुसारं मनुष्यो यत्किञ्चित्प्रयोजनमुद्दिश्यैव कर्म कर्त्तुं प्रवर्तते। यथा—बुभुक्षितो भोजनार्थं, पिपासितो जलार्थं, रुग्णश्चिकित्सार्थं, कृषकः कृष्यर्थं, वणिक् च व्यापारार्थं यत्प्रयत्नं करोति तन्मनसीदं विश्वासमवधार्यैव यदनेन प्रयत्नेन मम फलावाप्तिर्भविष्यत्येव, यतस्तत्तत्साधनैर्फलावाप्तिस्तेन पूर्वमनुभूताऽस्ति। अतः सोऽन्वीक्षते यदनेन प्रयत्नेन यत्फलं पूर्वमवाप्तं तेन पुनरपि तत्प्राप्तुं शक्यत इति। इत्थमिदमायाति यदन्वीक्षयैव सर्वोऽपि लौकिकव्यवहारः प्रचलति। तथा चान्वीक्षिक्येव सर्वकर्मणामुपाय इति सिद्ध्यति।

## ३. आश्रयः सर्वधर्माणाम्

सर्वेषां धर्माणामाश्रयोऽप्यान्वीक्षिक्येव। धर्मपदेन यदि पदार्थनिष्ठो द्रव्यत्वादिरूपो धर्मो गृह्यते, तदा व्यवहारेऽप्रसिद्धानां तत्तत्सामान्यस्वरूपाणां धर्माणां सिद्धिरवधारणञ्चान्वीक्षयैव जायते। तद्यथा मुक्तावल्यां द्रव्यनिष्ठ–'द्रव्यत्व'-स्वरूपस्य धर्मस्य सिद्धिं कुर्वन्नाह विश्वनाथपञ्चाननः—

'ननु द्रव्यत्वजातौ किं मानम्? नहि तत्र प्रत्यक्षं प्रमाणम्, घृतजतुप्रभृतिषु द्रव्यत्वाग्रहादिति चेत्, न' कार्यसमवायिकारणतावच्छेदकतया संयोगस्य, विभागस्य वा समवायिकारणतावच्छेदकतया तत्सिद्धेः'[१]।

अत्रानुमानस्वरूपमित्थं ज्ञेयम्—

'समवायेन कार्यं प्रति तादात्म्येन द्रव्यं कारणम्' इत्येष नियमः। तथा च—

१. समवायसम्बन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्ना द्रव्यनिष्ठा कारणता किञ्चिद्धर्मावच्छिन्ना, कारणतात्वात्, या या

---

१. न्यायसिद्धान्तमुक्तावली, प्रत्यक्षखण्डे, द्रव्यनिरूपणे।

कारणता सा सा किञ्चिद्धर्मावच्छिन्ना समवायसमबन्धावच्छिन्नघटत्वावच्छिन्नघटनिष्ठ-कार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकपालत्वावच्छिन्नकपालनिष्ठकारणतावत्।

अनेनानुमानेन यथा कपालनिष्ठकारणताया अवच्छेदकं 'कपालत्वं' तथैव समवायेन कार्यतानिरूपितकारणतावच्छेदकं 'द्रव्यत्वं' सिद्ध्यति। अत्र स्वस्य स्वानवच्छेदकत्वनियमेन यदि कार्यत्वं न कार्यतावच्छेदकमित्याशङ्क्य पक्षासिद्धिरुद्भाव्यते तदा संयोगनिष्ठकार्यतामुपादायानुमातव्यम्। तद्यथा—

२. समवायसम्बन्धावच्छिन्नसंयोगत्वावच्छिन्नसंयोगनिष्ठकार्यतानिरूपित-तादात्म्यसम्बन्धावच्छिन्ना कारणता किञ्चिद्धर्मावच्छिन्ना, कारणतात्वात् तादृशकारणतावत्। अत्र च—'समवायेन संयोगं प्रति तादात्म्येन द्रव्यं कारणम्' इत्येष नियमोऽवधारणीयः।

यदि चात्रापि 'विभुद्वयसंयोगस्य' नित्यत्वमुत्क्षिप्य पक्षासिद्धिरुद्भाव्यते, तदा 'समवायेन 'विभागं' प्रति तादात्म्येन द्रव्यं कारणमि'ति नियममभि-प्रेत्यानुमानं कार्यम्।

३. समवायसम्बन्धावच्छिन्नविभागत्वावच्छिन्नविभागनिष्ठकार्यतानिरूपित-तादात्म्यसम्बन्धावच्छिन्नकारणता किञ्चिद्धर्मावच्छिन्ना, कारणतात्वात्, तादृशकारणतावदिति। स च धर्मो विभागस्य द्रव्यमात्रकार्यत्वेन द्रव्यत्वरूपः पर्यवस्यति। एवमेव पृथिवीनिष्ठगन्धसमवायिकारणतावच्छेदकतया पृथिवीत्वम्, जलनिष्ठस्नेहसमवायिकारणतावच्छेदकतया जलत्वम्, तेजोनिष्ठोष्णस्पर्शसमवायि-कारणतावच्छेदकतया तेजस्त्वम्, आत्मनिष्ठसुखादिसमवायिकारणतावच्छेदकतया आत्मत्वम्—इत्यादयो धर्मा आन्वीक्षिक्यैव सिद्ध्यन्ति।

यदि च धर्मपदेनादृष्टं गृह्यते, तदापि तत्सिद्धिरान्वीक्षिक्यैव सम्भवति। यथा—'यजेत् स्वर्गकामः' इत्यादिविधिवाक्यैर्यज्ञः स्वर्गकारणत्वेनोपन्यस्तः, किन्तु यज्ञानुष्ठाने जातेऽपि न सद्यः स्वर्गोपलब्धिरपि तु कालान्तरेणैवेत्यतो यज्ञस्य धर्मरूपोऽवान्तरव्यापारोऽनुमीयते। यथोक्तम्—

धर्माधर्मावदृष्टं स्याद्धर्मः स्वर्गादिसाधनम्।
गङ्गास्नानादियागादिव्यापारः स तु कीर्त्तितः[१]॥

स्वर्गादिसकलसुखानां स्वर्गसाधनीभूतशरीरादीनाञ्च साधनं धर्म इत्यर्थः। तत्र प्रमाणं दर्शयितुमाह ग्रन्थकारः—यागादीति। यागादिव्यापारतया धर्मः

---

१. कारिकावली, का. १६१।

कल्प्यते, अन्यथा यागादीनां चिरविनष्टतया निर्व्यापारतया च कालान्तर्भाविस्वर्गजनकत्वं न स्यात्। उदयनाचार्यैरप्युक्तं न्यायकुसुमाञ्जलौ—

'चिरध्वस्तं फलायालं न कर्मातिशयं विना'[१]। इति।

स्वर्गादिसाधनीभूतोऽसौ धर्मोऽनुमानं विना न सिद्ध्यति, तस्यानुमानातिरिक्तप्रत्यक्षादिप्रमाणासाध्यत्वात्। तस्य साधनं यथानुमानेन जायते तथा प्रतिपादितं न्यायकुसुमाञ्जलौ। तत्र हरिदासो निगदति—

धर्माधर्मात्मकालौकिकसाधने, विप्रतिपन्नं प्रति तत्साधनं, सिद्धे तदधिष्ठातृतया चेश्वरसिद्धिः, अचेतनस्य कारणस्य सचेतनाधिष्ठानेनैव कार्यजनकत्वात्। तत्साधनायाह—

सापेक्षत्वादनादित्वाद् वैचित्र्याद् विश्ववृत्तितः।
प्रत्यात्मनियमाद्भुक्तेरस्ति हेतुरलौकिकः[२]॥

अस्याः कारिकाया व्याख्यानं कुर्वता हरिदासेन विभिन्नैरनुमानैरदृष्टसिद्धिः कृता। तद्यथा—

१. परलोको, हेतुमान्, सापेक्षत्वाद्, घटवत्।

२. परलोको, विचित्रहेतुकः, कार्यत्वे सति विचित्रत्वात्, सम्मतवत्। कार्यत्वे सति यद् यदपेक्षया विचित्रं, तत्तत्कारणविचित्रहेतुकमिति सामान्यमुखी व्याप्तिः।

३. यागादिः, सफलः, शिष्टाचारविषयत्वात्, पाकादिवदित्यनुमानेन तस्य सफलत्वसिद्धौ, साक्षात्सफलत्वासिद्धत्वेन तद्व्यापारः कश्चित् फलानुगुणो वाच्यस्तत्र चैन्द्रियकत्वबाधादतीन्द्रियत्वं सिद्ध्यति।

४. यागः, कालान्तरभाविफलानुकूलस्वसमानाधिकरणव्यापारक आत्मसमवेतत्वे सति कालान्तरभाविफलानुगुणत्वात्, स्मृत्यनुकूलानुभववत्।

५. भोगः, स्वसमानाधिकरणव्यापारजन्यः, स्वात्मसमवेतत्वे सति विनष्टकारणजन्यत्वात्, स्मृतिवत्।

इत्थमुपर्युक्तैरनुमानैरदृष्टशब्दवाच्यस्य धर्मस्य सिद्धिर्जायते, संसिद्ध्यति चान्वीक्षिक्याः सर्वधर्माणामाश्रयत्वम्।

---

१. न्या.कु., स्त. १; २. न्यायकुसुमाञ्जलिः, स्तबकः-१, का. ४।

किञ्चान्वीक्षिक्यैवेश्वरसिद्धिरपि जायते, यथा—

कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः।
वाक्यात्संख्याविशेषाच्च साध्यो विश्वविदव्ययः[१]॥

अत्र तावदिमान्यनुमानानि—

१. क्षित्यादिकं, सकर्त्तृकं, कार्यत्वाद्, घटवत्। सकर्तृकत्वञ्चोपादान-गोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वम्।

२. आयोजनं कर्मः एवञ्च—'सर्गाद्यकालीनद्व्यणुकारम्भकं कर्म, चेतनप्रयत्नपूर्वकं, कर्मत्वात्, अस्मदादिक्रियावत्।

३. ब्रह्माण्डादि, पतनप्रतिबन्धकीभूतप्रयत्नवदधिष्ठितं, धृतिमत्त्वात्, वियति विहङ्गमधृतकाष्ठवत्। धृतिश्च गुरुत्ववतां पतनाभावः।

४. ब्रह्माण्डादि, प्रयत्नवद्विनाश्यं, विनाशित्वात्, पाट्यमानपटवत्।

५. पदात्—पद्यतेऽनेनेति व्युत्पत्त्या पदं व्यवहारः। तथा च—पटादिसम्प्रदायव्यवहारः, स्वतन्त्रपुरुषप्रयोज्यः, व्यवहारत्वात्, आधुनिकलिप्यादि-व्यवहारवत्।

६. प्रत्ययतः प्रामाण्यात्। वेंदजन्यज्ञानं, कारणगुणजन्यं, प्रमात्वात्, प्रत्यक्षादिप्रमावत्।

७. श्रुतेर्वेदात्—वेदः, पौरुषेयः, वेदत्वात्, आयुर्वेदवत्।

८. वाक्याद् वेदः, पौरुषेयः, वाक्यत्वात्, भारतादिवत्।

९. संख्याविशेषात्—द्व्यणुकपरिमाणं, संख्याजन्यं, परिमाणप्रचयाजन्यत्वे सति जन्यपरिमाणत्वात्। तुल्यपरिमाणककपालद्वयारब्धघटपरिमाणात् प्रकृष्ट-तादृशकपालत्रयारब्धघटपरिमाणवत्।

इत्येवमुपर्युक्तैरनुमानैः क्षित्यादिकर्त्तृत्वेन, सर्गाद्यकालीनद्व्यणुकारम्भक-परमाणुकर्माधिष्ठातृत्वेन, ब्रह्माण्डादिपतनप्रतिबन्धकीभूतप्रयत्नाधिष्ठातृत्वेन, वेदकर्त्तृत्वेन, द्व्यणुकपरिमाणजनकद्वित्त्वसंख्याजनकापेक्षाबुद्धिधारकत्वेन चेश्वरसिद्धिर्ज्ञेया।

इत्थमिदमवधारणीयं यदतीन्द्रियाणां पदार्थानां सिद्धिस्तत्त्वज्ञानञ्च विनाऽऽन्वीक्षिकीं नैव भवितुमर्हति। एषा आन्वीक्षिकी प्रमाणतर्काभ्यां सर्वासां

१. न्यायकुसुमाञ्जलिः, ५।१।

विद्यानां प्रकाशनं करोति। पदार्थतत्त्वावधारणकारिणीं धिषणां समुद्घाटयन्ती लौकिकामुष्मिकसर्वविधकल्याणसाधनभूता विद्यते। अत एवोक्तं न्यायदर्शनभाष्यकारेण—

सेयमान्वीक्षिकी प्रमाणादिभिः पदार्थैर्विभजमाना—

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।

आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्त्तिता[1]।।

**आन्वीक्षिकी-पदार्थविचारः**

सर्वश्रेयस्कारिण्या आन्वीक्षिकीविद्यायाः किं स्वरूपम्? कस्मादस्याः प्रवर्तनम्? आन्वीक्षिकीपदाभिलाप्योऽर्थः कः? इत्येतासां जिज्ञासानां समाधानं भाष्यकारेण विहितम्।

प्रत्यक्षागमाश्रितमनुमानं साऽन्वीक्षा, प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणमन्वीक्षा तया प्रवर्तत इत्यान्वीक्षिकी न्यायविद्या न्यायशास्त्रम्, यत्पुनरनुमानं प्रत्यक्षागमविरुद्धं न्यायाभासः स इति[2]।

तात्पर्यमिदं यत्—प्रत्यक्षप्रमाणेन दृष्टानामागमप्रमाणेन च श्रुतानां विषयाणां तात्त्विकस्वरूपस्यावबोधकमनुमानमेवान्वीक्षापदवाच्यम्, तया अन्वीक्षया दृष्टश्रुतपदार्थतत्त्वपरीक्षणाय या विद्या प्रवर्तते सा 'आन्वीक्षिकी' इति पदाभिलाप्या। तस्या एव न्यायविद्या-न्यायशास्त्रम् इत्यादीन्यन्यानि नामानि ज्ञेयानि। यत्पुनरनुमानं प्रत्यक्षागमविरुद्धं तत्तु न्यायाभास एव। न्यायमञ्जर्यां जयन्तभट्टेनापि निगदितम्—

'इयमान्वीक्षिकी चतसृणां विद्यानां न्यायविद्या गण्यते'। 'आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च शाश्वती' इति। प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणमन्वीक्षा अनुमानम्। तद् व्युत्पादकं शास्त्रमान्वीक्षिकम्।

न्यायविस्तरस्तु मूलस्तम्भभूतः सर्वविद्यानां, वेदप्रामाण्यहेतुत्वात्। वेदेषु हि तार्किकरचितकुतर्कविप्लावितप्रामाण्येषु शिथिलास्थाः कथमिव बहुवित्त-व्ययायाससाध्यं वेदार्थानुष्ठानमाद्रियेरन् साधवः? किं वा तदानीं स्वामिनि परिम्लायमाने तदनुयायिना मीमांसादिविद्यास्थानपरिजनेन कृत्यमिति? तस्मादशेषदुष्टतार्किकोपमर्दद्वारकदृढतरवेदप्रामाण्यप्रत्ययाधायिन्यायोपदेशक्षममक्ष-

---

१. न्यायदर्शनभाष्यम्, पृ. ३८।

२. तदेव, पृ. २३-२४।

पादोपदिष्टमिदं न्यायविस्तराख्यं शास्त्रं प्रतिष्ठाननिबन्धनमिति परं विद्यास्थानम्[१]।

एवमुपर्युक्तोद्घोषणेन न्यायदर्शनस्य सर्वातिशायित्वं व्यज्यते। एषा विद्यैव 'तर्कविद्ये'ति प्रसिद्धा। यथाह आचार्यो जयन्तः—

'पूर्वत्र तर्कशब्देनोपात्तमुत्तरत्र च न्यायविस्तरशब्देन तदेव शास्त्रमुच्यते। न्यायस्तर्कोऽनुमानं सोऽस्मिन्नेव व्युत्पाद्यते'[२]।

**न्यायपदार्थविचारः**

नीयन्ते प्रमितिविषयतां प्राप्यन्ते पदार्था अनेनेति न्यायः। प्रमाणैरर्थपरीक्षणं न्याय इति भाष्यकारः। तात्पर्यमिदं यत् सर्वैः सिद्धैः प्रमाणैः पदार्थतत्त्वावधारणाय परीक्षणमेव न्यायपदवाच्यम्। परार्थानुमानस्थले प्रयुज्यमानानां पञ्चावयववाक्यानां परमन्यायत्वेन व्यवस्थितिः। तद्यथा—

'साधनीयार्थस्य यावति शब्दसमूहे सिद्धिः परिसमाप्यते, तस्य पञ्चावयवाः प्रतिज्ञादयः समूहमपेक्ष्यावयवा उच्यन्ते, तेषु प्रमाणसमवायः, आगमः, प्रतिज्ञा, हेतुरनुमानम्, उदाहरणं प्रत्यक्षम्, उपनयमुपमानम्, सर्वेषामेकार्थे सामर्थ्यप्रदर्शनं निगमनमिति, सोऽयं परमो न्याय इति, एतेन वाद-जल्प-वितण्डाः प्रवर्तन्ते, नातोऽन्यथेति, तदाश्रया च तत्त्वव्यवस्था[३]।

इत्थं 'प्रमाणैरर्थपरीक्षणं न्यायः' इत्युक्त्वा भाष्यकारेण न्यायसामान्यस्वरूपं प्रदर्शितं यत्र स्वार्थानुमानपरार्थानुमानयोः समावेशो विज्ञेयः। पञ्चावयवसमूहे च न्यायत्वं तस्य परमत्वं विज्ञापयता तेनेदं प्रदर्शितं यदनेन विप्रतिपन्नं प्रति, स्वाभाविकमननसामर्थ्यविहीनं प्रति च पदार्थयाथार्थ्यविस्फोरणं कर्त्तुं शक्यम्। यतो ह्यत्र प्रत्यक्षादीनां सर्वेषां प्रमाणानामेकत्रैव समन्वयो भवति। तेन च स्फुटतया पदार्थतत्त्वमवधार्यते, विचिकित्सा च नश्यति।

न्यायपदार्थस्य विवेचनं कुर्वद्भिरन्यैराचार्यैर्यदुक्तं तद्भाष्यकारस्योक्तिमेवानुगच्छति। तद्यथा—

१. 'समस्तप्रमाणव्यापारादर्थाधिगतिर्न्यायः'[४]।

२. प्रत्यक्षादिप्रमाणमूलाः प्रतिज्ञादयः पञ्चावयवाः प्रमाणानि, तैरर्थस्य लिङ्गस्य परीक्षणं परीक्षा। पञ्चरूपश्चतूरूपो वा हेतुर्न्यायः। नीयते विवक्षितार्थसिद्धिरनेनेति[५]।

---

१. न्यायमञ्जरी, ८।२३;
२. तदेव-९।१०।
३. न्यायदर्शनभाष्यम्, पृ. ३०;
४. न्यायवार्तिकम्, पृ. ३०।
५. न्या.वा., ता.टी., पृ. ३०।

बहुप्रथितमिदं शास्त्रं भारतीयवाङ्मये बहुत्र बहुभिराख्याभिराख्यातम्। यथा—'आन्वीक्षिकी, न्यायविस्तरः, न्यायशास्त्रम्, न्यायविद्या, तर्कशास्त्रम्, हेतुशास्त्रम्, प्रमाणशास्त्रम्, वाकोवाक्यम्'इत्यादीनि नामानि निगदितानि विद्यन्ते। तदेतद्विषये कतिचिच्छास्त्रीयाण्युदाहरणानि प्रस्तूयन्ते—

१. त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिञ्च शाश्वतीम्।
आन्वीक्षिकीमात्मविद्यां वार्त्तारम्भाँश्च लोकतः॥ (मनुस्मृतिः, ७।४३)

२. आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥ (मनु., १२।१०६)

३. योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद्द्विजः। (मनु., १२।१०७)

४. 'वाकोवाक्यम्, इतिहासः, पुराणम्, वैद्यकमित्येतावान् शब्दस्य प्रयोगविषयः'। (महाभाष्यम्, पस्पशाह्निकम्)

५. 'पद-वाक्य-प्रमाणज्ञेनाचार्येण'। (शाङ्करभाष्यम्)

प्रमाणशास्त्रमिदं पदार्थशास्त्रमित्यपि व्यवह्रियते। बाह्यभौतिकपदार्थानां सूक्ष्मातिसूक्ष्मदार्शनिकदृष्ट्या यादृशं सुस्फीतं विशदविवेचनमत्र न तादृशं कुत्राप्यन्यत्रेति विदुषामवधारणा। शास्त्रमिदं मूलाधार आधुनिकविज्ञानान्वेषितनूतनपदार्थधर्मस्वरूपनिर्धारणस्य। पीलुपाकपिठरपाकसिद्धान्तावेवाग्रे विविधरूपेण विस्तृतौ। अतः प्रथमपदार्थशास्त्रमपि न्यायशास्त्रमेव।

इत्थमध्येतुरद्वितीयां पदार्थविवेचनीं प्रज्ञामुत्पादयदिदं शास्त्रमनादिकालादेव भारतीयदार्शनिकपरम्परायां नक्षत्रपरम्परायां सुधांशुरिव विराजते, यच्चोपासितं सत् संसारमरुसरणिदुःखानलतापनिर्विण्णमानसानां मानवानाञ्चेतसि स्वीयसंसरणरहस्योद्घाटनपटु-प्रज्ञा-मधुबिन्दुप्रसारिकाभिर्व्युत्पत्तिरश्मिभिरात्मतत्त्वावबोधपूर्वकैकविंशतिदुःखध्वंसात्मकमोक्षशान्तिशैत्यमाधातुं प्रभवतीत्यत्र नास्ति कश्चन शङ्काकलङ्कपङ्कावकाशः। न्यायशास्त्रस्याध्ययनं विना कस्यापि विद्या सर्वाङ्गीणा न भवितुमर्हति, सत्स्वपि पदार्थतत्त्वविवेचकेष्वन्येषु शास्त्रेषु पदार्थतत्त्वविवेचनपूर्वकं तत्त्वविषयकप्रमावधारणसमर्थां लोकसम्मतां यथार्थदृष्टिं न्यायशास्त्रमेव तनोति। अन्यशास्त्रेषु ब्रह्मतत्त्वविवेचनावसरे विश्वासस्य प्रज्ञारहितान्धपरम्परायाश्चानुगमनं विधाय दार्शनिकाः पदार्थतत्त्वयाथार्थ्यात् प्रच्यविता भवन्ति; किन्तु न्यायशास्त्रं तावद्रागद्वेषरहितन्यायाधीश इव युक्तिप्रमाणरहितं न किमप्याभाणकमङ्गीकरोति। अत एव न्यायशास्त्रपरम्परायामुत्तरदार्शनिकैः स्वपरम्परावर्त्तिनां मूर्धन्यानामाचार्याणामपि

युक्तिप्रमाणरहितं मतं खण्ड्यते। यथोक्तं **रघुनाथशिरोमणिना**—'निर्युक्तिस्तु प्रवादो न श्रद्धेयः'[१]। इदं पक्षपातराहित्यमन्धश्रद्धाभक्तिभावराहित्यमेवास्य शास्त्रस्य वैशिष्ट्यम्।

प्रमाणशास्त्रमिदं प्रमाणानां यथार्थस्वरूपं निर्धार्य तेषां विधिवन्निरूपणं विधत्ते। तेषां याथातथ्यं प्रकाश्य तैरात्मादिप्रमेयाणां याथार्थ्यमुद्योतयति। मानाधीना मेयसिद्धिरिति न्यायेन पूर्वं मानमीमांसां विधायानन्तरं मेयमीमांसा विहिता। तत्र द्रव्य-गुण-कर्मादिक्रमेण भौतिकप्रमेयपदार्थानां सूक्ष्मातिसूक्ष्मं विवेचनमत्र विद्यते। ऐहलौकिकसकलपदार्थतत्त्वज्ञानपूर्वकमेवात्मतत्त्वज्ञानं निःश्रेयसहेतुरिति समुद्घोषयदिदं दर्शनमात्मवैशिष्ट्यं विद्योतयति। सर्वदुःखहानात्मकोऽपवर्गस्त्वस्य परमं लक्ष्यमस्त्येव। यथास्यान्वीक्षिकीशास्त्रस्य माहात्म्यं वर्णयन्नाह चिन्तामणिकार **आचार्यगङ्गेशः**—

अथ जगदेव दुःखपङ्कनिमग्नमुद्दिधीर्षुरष्टादशविद्यास्थानेष्वभ्यर्हिततमामान्वीक्षिकीं परमकारुणिको मुनिः प्रणिनाय। तत्रादौ सूत्रयामास—'प्रमाणादीनां तत्त्वज्ञानान्निःश्रेयसाधिगमः' इति। तत्र प्रमाणाधीना सर्वेषां व्यवस्थितिरिति प्रमाणतत्त्वमत्र विविच्यते।

इत्थमिदमवधेयं यन्महर्षिगौतमप्रणीतन्यायदर्शनम्, महर्षिकणादप्रणीतं वैशेषिकदर्शनञ्च समानतन्त्ररूपेण 'न्यायवैशेषिक'दर्शनपदवाच्यं सत् मानवानां सर्वविधकल्याणकरम्, वेदप्रतिपाद्यसृष्टितत्त्वविवेचकत्वादैहलौकिकसकलपदार्थविवेचकत्वेन यथार्थव्यवहारप्रयोजकत्वाच्च। 'आन्वीक्षिक्या विवेचिता त्रयी वार्त्तादण्डनीत्योः प्रभवतीति' वदता राजशेखरेण लौकिकमहत्त्वं सुस्पष्टरूपेण समुद्घोषितम्। आन्वीक्षिकीविद्यां विना निखिलं त्रय्यात्मकं वाङ्मयं न सम्यगवधारयितुं शक्यम्, तेन विना न सम्यग्वार्त्ता, न वा लोकसम्पोषणसमर्थसामाजिकव्यवस्थासंस्थापनसमर्था दण्डनीतिरित्यतो लोककल्याणाय न्यायदर्शनदृष्टिरपरिहार्या। न्यायशास्त्रविस्तारिततर्कप्रतिभां समवाप्यैव सर्वासां विद्यानां यथार्थरूपेणाधिगमः, तेन च 'अभ्युदय-निःश्रेयससिद्धि'रिति न्यायदर्शनस्य महत्त्वातिशयः सर्वैरङ्गीकरणीय एवेति।

●

---

१. *तत्त्वचिन्तामणिदीधितौ*, प्रामाण्यवादः, पृ. ५।

# न स्थैर्यं प्रत्यभिज्ञया

**डॉ. वृजकिशोरत्रिपाठी**
प्राध्यापकः, संस्कृतविभागे
राजकीयस्नातकोत्तरमहाविद्यालयस्य
फतेहपुरम्, आलापुरम् (अम्बेडकरनगरम्)
फैजाबादः



येनोपदिष्टं जगदुद्दिधीर्षुणा शोकाब्धिमग्नं सकलं महात्मना।
दुःखञ्च शून्यं क्षणिकं स्वलक्षणं तस्मै नमः कारुणिकाय तायिने।।
भावानां साध्यते कैश्चित् स्थिरत्वं प्रत्यभिज्ञया।
न कथं ज्ञायते तैस्तु भ्रान्त्यैवेदं प्रतीयते।।
भ्रान्तिदोषपरीतात्मा न पश्यति जगत्क्षयम्।
तस्मादनुमितिस्सेव्या यत्सत् तत्क्षणिकं बुधैः।।

इह जगदेव दुःखपङ्कनिमग्नमवलोक्य तत्समुद्दिधीर्षुर्भगवाँल्लोकनाथो महाकारुणिकः समुपदिदेश चत्वारि आर्यसत्यानि, सर्वं दुःखं दुःखं, सर्वं क्षणिकं क्षणिकं, सर्वं स्वलक्षणं स्वलक्षणं, सर्वं शून्यं शून्यञ्चेति।

तत्राचार्यो ज्ञानश्रीमित्रः सर्वं क्षणिकमिति बौद्धानां मौलिभूतं मतमुपस्थापयितुमनुमानाय तत्प्रदर्शकं पद्यमवतारयति—

यत्सत्तत्क्षणिकं यथा जलधरः सन्तस्तु भावा इमे
सत्ता शक्तिरिहार्थकर्मणि मितेः सिद्धेषु सिद्धा नु सा।
नाप्येकैव विधान्यदापि परकृन्नैव क्रिया वा भवेद्
द्वेधाऽपि क्षणभङ्गसङ्गतिरतः साध्ये च विश्राम्यति[1]।।

अयमर्थः, 'यत् सत् तत् क्षणिकं' यथा जलधरः। सत्तावान् विस्तृतप्रस्तर-खण्डोपमो जलधरः पश्यत एव दृष्टौ विनश्यति। तथा च 'समेऽपि भावाः

१. ज्ञानश्रीमित्रनिबन्धावली, पृ. १।

क्षणिकाः, सत्त्वात्, यथा जलधरः' इत्यनुमानाकारः प्रतिफलति। ननु किन्नाम सत्त्वमिहाभिप्रेतमिति चेदुक्तम्, अर्थक्रियायां शक्तिरेवेति। सा शक्तिः सिद्धेषु भावेषु, प्रमाणेन सिद्ध्यति। एकप्रकारिकैवार्थक्रिया शक्तिर्भावानामन्यसमये किञ्चित्सम-यान्तराले नावतिष्ठते। सा च शक्तिर्भावेषु भावान्तरेभ्यो नोपयाति, किन्तु तेषामेवास्ति। 'अन्यदा (समयान्तरे) भावानामेकैव शक्तिर्न वर्तते, भावान्तरेभ्यश्च नोपयातीत्यात्मकाभ्यामुभाभ्यां कारणाभ्यां भावानां क्षणिकत्वं सिद्ध्यतीति।

निरस्तसमस्तविभ्रमाशङ्केनाभ्यासविशेषासादितपटिम्ना प्रत्यक्षेण भावानामर्थ-क्रियाकारित्वात्मकं सत्त्वं सिद्ध्यति। तथा हि, 'इदमतो जायते' इत्यादिना जन्माधिकरणमङ्कुरादिकं वस्तूल्लिखता अध्यक्षेणार्थक्रियासामर्थ्यमेवोल्लिख्यते। 'बीजादङ्कुरमाजायते' इत्यत्र हि, अङ्कुरकार्याध्यक्षेण तदुत्पत्तिक्रियासामर्थ्यं बीजस्य, प्रत्यक्षविषयत्वादङ्कुरस्य च, ज्ञानोत्पत्तिक्रियासामर्थ्यं तस्य प्रत्यक्षतो दृष्टमेव, एकस्यैवाङ्कुरदर्शनात्। अत एव, यतो ह्यर्थो ज्ञानविषयो भवति, तस्मादप्यर्थक्रियासामर्थ्यावगतिस्तस्य भवति। ननु ज्ञानादर्थक्रियासामर्थ्येऽर्थस्य गम्यमानेऽपि, ज्ञानस्य कथं तदवगम्यत इति चेत्, न, ज्ञानस्य स्वसंवेदनत्वात्। ज्ञानस्य स्वरूपसंवेदनं सत्त्वाव्यभिचारीत्यर्थः।

तेनेदमागतं यद्भावानां पटुतरप्रत्यक्षेणार्थक्रियाकारित्वानवगमेऽपि स्थूलदृशां, तेषां ज्ञानविषयत्वात्तु ज्ञानरूपार्थक्रियाजननात् तद्दुरपह्नवम्। आलम्बनप्रत्ययेभ्यो विषयेभ्यो ज्ञानोत्पत्तेः। 'विशिन्वन्ति आत्मरूपेण निरूपणीयं कुर्वन्तीति' विषयशब्दव्युत्पत्तेः। क्षणिकत्वसाधकानुमानेऽस्मिन् हेत्वाभासादि-शङ्कानिरासः प्रकृतविषयानतिदूरापन्नोऽपि विषयविस्तरभिया, स्वातन्त्र्येण निरूपणार्हणीयत्वाच्च तस्येति, तमुपेक्ष्य केवलं प्रत्यभिज्ञाख्याध्यक्षेण अनुमानबाधनं निरस्य न सङ्कोचमनुभवामि।

ननूक्तानुमाने, सपक्षे जलभृति कथं क्षणभङ्गसिद्धिः? न ह्यस्य प्रत्यक्षत-स्तत्सिद्धिः, तथात्वेनानिश्चयात्। प्रत्यक्षतो हि 'स एवायं तोयदः' इति प्रत्यभिज्ञानमस्य च कालान्तरस्थायित्वमेवोपस्थापयति। अनुमानेन क्षणिकत्वसाधने, प्रत्यक्षेण तद्बाधनाय [१]शङ्करेणाप्युक्तम्—'प्रत्यक्षेणैव स्थितिविपर्ययाभावस्य सिद्धत्वादिति। न चायमेकताग्रहः पूर्वापरकालयोरप्रमाणम्, संवादित्वात्'। न्यायभूषणकारश्च भासर्वज्ञोऽपि प्रोक्तवान्[२]—'यथा चेदमसत्कार्यमित्यस्याः

१. शङ्करस्य ग्रन्थः कोऽपि नाद्यत्वे विद्यते। ग्रन्थसन्दर्भास्तु बहुत्र दृश्यन्तेऽर्वाचीनग्रन्थेषु। सोऽयमत्र ज्ञानश्रीमित्रनिबन्धावल्यां क्षणभङ्गसिद्धावन्वयाधिकारे समुद्धृतः।

२. न्यायभूषणसारः, पृ. ५१९-५२०।

प्रतीतेर्विसंवादाभावादेव प्रामाण्यम्, तथाऽनेनैतानि क्रमेण कृतानि न युगपदिति प्रतीतेः, 'स एवाहं', 'स एवायं स्फटिकः' इत्येवमादिप्रत्यभिज्ञायाश्च विसंवादाभावादेव प्रामाण्यमेष्टव्यम्, तुल्ययोगक्षेमत्वादिति। एवमुभाभ्यामप्याचार्याभ्यामक्षणिके प्रत्यभिज्ञायाः प्रामाण्यमुपस्थापितम्, तस्या अविसंवादित्वादिति।

**प्रत्यभिज्ञाया अप्रामाण्यम्**

इह यत्सकलपदार्थस्थैर्यसाधनाय 'स एवायं घटः, स एवायं स्फटिकादिरि'ति प्रत्यभिज्ञाख्यं प्रमाणमुपन्यस्तम्, तत्र तत्तेदन्तोल्लिखदिदमेकमेव प्रमाणं प्रत्यक्षाख्यं किञ्चिदिन्द्रियप्रत्यक्षविलक्षणम्। अत्र तत्तेदन्ताविषयप्रत्यक्षे समर्थं संस्कारसहितमिन्द्रियम्। यद्यपीन्द्रियं केवलमसमर्थं, यद्यपि संस्कारमात्रमपि न समर्थं, संस्कारसध्रीचीनन्तु इन्द्रियं भावयिष्यति प्रत्यभिज्ञानम्, तद्भावाभावानुविधायित्वात् प्रत्यभिज्ञाभावाभावयोः। न हि नाजीजनद् बीजमात्रमङ्कुरमिति मृदादिसहितमपि न जनयतीति, तदेतदसङ्गतम्। यदेतदविसंवादात्प्रत्यभिज्ञायाः प्रामाण्यमुपन्यस्तं तत्रोच्यते—अलिङ्गस्यास्य तत्तेदन्तोल्लिखतो विकल्पस्याविसंवादो नाम, प्रमाणान्तरसङ्गतिरर्थक्रियाप्राप्तिर्वा? तत्र न तावदाद्यः पक्षः, पश्चादपि 'स एवायमि'ति स्वतन्त्रैकाध्यवसायमात्रादपरस्य प्रमाणगन्धस्याप्यभावात्। तत्तेदन्तोल्लिखदन्यदेकमपि प्रमाणं नास्ति येनानुगम्येत प्रत्यभिज्ञेति, प्रमाणान्तरसङ्गत्यभावान्न प्रत्यभिज्ञा प्रमाणमिति भावः।

नापि द्वितीयः पक्षः सङ्गच्छते। तत्र हि सदृशार्थक्रियाप्राप्त्या प्रत्यभिज्ञायाः प्रामाण्यं, विसदृशार्थक्रियाप्राप्त्या वा? नाद्यः पक्षः, न हि पूर्वापरकालयोरेकवस्तुप्रतिबद्धा सिद्धा काचिदर्थक्रिया, भिन्नेनापि तत्समानशक्तिना वस्तुना तादृशार्थक्रियायाः करणाविरोधात्। तथा हि यथैको घटो वारि धारयति इति, तत्कालभाविनोऽप्यन्यस्य देशान्तरवर्तिनो न किं वारिधारणम्? तथा द्वितीयादिक्षणोऽप्यन्यो यदि वारि धारयति, तदा कीदृशो दोषः? नापि द्वितीयः पक्षः, विसदृशक्रियायां सुतरामर्थभेदोपपत्तेश्चिन्ताभावात्।

तस्माद्यथा पावकादेः पाकादिक्रिया प्रतिबद्धा सिद्धानुभूयमाना दहनज्ञानस्य संवादमावेदयति, न तथा प्रथमचरमकालयोरेकीभावप्रतिबद्धा काचिदर्थक्रिया उपलब्धा ययैकभावग्रहोऽपि संवादी स्यात्।

**न कतिपयानां प्रमाणसङ्गत्या प्रत्यभिज्ञा प्रमाणम्**

अत्र पुनरुच्यते यत्प्रथमविकल्पे प्रोक्तं प्रमाणान्तरसङ्गत्यभावान्न प्रत्यभिज्ञा प्रमाणमिति तन्न, सर्वेषां सर्वदैकाध्यवसायसाम्यात्, अर्थात् प्रत्यभिज्ञेये सर्वेषामपि जनानां स एवायं, स एवायमिति प्रत्यभिज्ञानं समानं जायते।

तत्कस्यचिदेकस्यापराध्यवसायसाम्यात् (अनुगम्यमानत्वात्) प्रत्यभिज्ञाप्रमाणं स्यादिति, तत्रोच्यते—अत्राध्यवसायेन किं गृह्यते, प्रत्यक्षमनुमानं वा? अर्थात्प्रत्यभिज्ञायाः प्रामाण्यमनुगम्यमानप्रत्यक्षापेक्षया साध्यतेऽनुमानापेक्षया वा? न प्रत्यक्षापेक्षयेति पक्षः, 'सर्वेषां तथा प्रत्यभिज्ञानमि'त्यत्र सर्वपदवाच्याः सर्वज्ञा अतीन्द्रियदर्शिनो योगिनः, इन्द्रियगम्यमात्रवेदिनोऽस्मादृशा वा? सर्वज्ञानामतीन्द्रियदर्शिनां योगिनामनुगम्यमानप्रत्यक्षापेक्षया प्रत्यभिज्ञा प्रमाणम्, इन्द्रियगम्यमात्रवेदिनामस्मादृशामपेक्षया वेति प्रश्नार्थः।

नातीन्द्रियदर्शिनां योगिनामपेक्षयेति पक्षः, अतीन्द्रियदर्शियोगिषु कस्यचिदेकस्य क्षणभङ्गज्ञानवतः सम्भवात्, 'सर्वेषां तथाध्यवसायादि'ति सर्वपदार्थभङ्गापत्तेः। तेन च न योगिनामनुगम्यमानप्रत्यक्षापेक्षया प्रत्यभिज्ञायाः प्रामाण्यसिद्धिः। नेन्द्रियगम्यमात्रवेदिनामिति पक्षोऽपि युक्तः, सर्वेषां तथाध्यवसायशीलानामेकस्याप्यतथाध्यवसायशीलस्य सम्भवात्पूर्ववत्सर्वपदार्थ-भङ्गापत्त्या नास्मदनुगम्यमानप्रत्यक्षापेक्षया प्रत्यभिज्ञा प्रमाणम्। नन्वतथाध्यवसायशीलस्यानुपलब्धेर्न सद्भावसम्भवस्तस्येति चेत्, न, अनुपलब्धेरभावाभावात्। तथा हीयमनुपलब्धिर्योग्यस्यायोग्यस्य वा? नाद्यः, देशादिविप्रकर्षात् सत्यपि वस्तुन्यनुपलब्धेः। अयोग्यस्य त्वनुपलब्धेरपि सत्त्वं सर्वाभिप्रेतमेव। अत एव न कस्यचित्क्षणभङ्गदर्शिनोऽदर्शनात् सर्वेषामिन्द्रिय-वेदिनामनुगम्यमानप्रत्यक्षप्रमाणसङ्गत्या प्रत्यभिज्ञायाः प्रामाण्यं स्वीकर्त्तुं युज्यते। अनुपलब्धेः कस्यचित्सर्वमध्यवर्तिनः सत्त्वाभावसाधनाभावात्। सति च तस्मिन् सर्वेषामेकाध्यवसायसाम्यादिति कथनमयुक्तम्। यदि च स्वभाव एवायं क्षणभङ्गनामा नेदानीमपि सिद्ध इति तद्दर्शनेऽपि कस्यचिन्न प्रत्यभिज्ञाप्रामाण्ये निरोध इति, तदपि न, तस्य निरूपणीयत्वात्। तद्यावन्न क्षणभङ्गसिद्धिस्तावन्न सर्वेषां क्षणध्वंसनिषेधः। न च कस्यचिदेकस्य योगिनः क्षणभङ्गसिद्धिज्ञानवतोऽपि सर्वेषां नाध्यवसायनिरोधः, कतिपयानां सम्प्रतिपत्त्या अध्यवसायस्यापि सिद्धेरिति वाच्यम्, तैमिरिककलितकेशादिष्वपि कतिपयानां सम्प्रतिपत्तिसम्भवात् तस्यापि प्रामाण्यापत्तेः।

अनुमानापेक्षया प्रत्यभिज्ञा प्रमाणमिति न द्वितीयोऽपि पक्षः, अनुमानेनैकेनानुगम्यमानेन प्रमाणान्तरसङ्गतिसम्पादकेन प्रत्यभिज्ञायाः प्रामाण्यापादनेऽपि, अनुमानान्तरेण क्षणभङ्गसिद्धेः साधितत्वात् सत्प्रतिपक्षापत्तेः। तेन न प्रत्यक्षेण नानुमानेन वैकत्वाध्यवसायात्प्रत्यभिज्ञायाः प्रामाण्यम्। किञ्च, व्यभिचारिण्यपि प्रत्यभिज्ञा एकत्वाध्यवसाये, लूनपुनर्जातकेशकुशकदलीकाण्डादिषु 'स एवायमि'ति ज्ञानसद्भावाद्भिन्नेषु।

यत्पुन: केनचिद्विशेषवचनाभिमानिनोक्तम्—कार्यकारणभावप्रतीतिर्यथाऽनेककारणेषु सत्सु क्वचिद् व्यभिचारिणी तथा प्रत्यभिज्ञापि स्याद् व्यभिचारिणी किं तेन? या व्यभिचारिणी सा कार्यकारणभावप्रतीतिरेव नास्तीति यद्युच्येत, तदा मयोच्यते, या व्यभिचारिणी सा प्रत्यभिज्ञैव न भवतीति। अत्राभिधास्याम:, अस्माकं कार्यकारणभावप्रतीतितदाभासयो: स्पष्टो लक्षणभेद:। तथा ह्यन्वयव्यतिरेकग्रहणप्रवणप्रत्यक्षानुपलम्भादुत्पन्नो निश्चय: कार्यकारणभावप्रतीतेर्लक्षणम्। यत्र न तथा निश्चय: स तदाभासप्रतीतेर्लक्षणमिति स्पष्टो लक्षणभेद:। यदि स्पष्टं कार्यकारणभावप्रतीतावपि वस्तुमात्राद् धूमोत्पत्तिमनुगृह्णीयात्, तदा गर्दभादपि तदुत्पत्तिं जानीयात्। गर्दभाभावे च धूमाभावं गृहीत्वाग्निं धूमाकारणं विज्ञाय तत्र हस्तं निक्षिपेत्, स्याच्च दग्ध इति। यथा पुनरन्वयव्यतिरेकग्रहणप्रवणप्रत्यक्षानुपलम्भसम्भव: कार्यकारणभाव: पुरस्क्रियते तथा निरूपितं कार्यकारणभावसिद्धौ (त्रिकपञ्चकचिन्तायाम्) ज्ञानश्रीनिबन्धावल्याम्—

> न स्थितं नान्यस्माज्जातं नायातमन्यत:।
> यस्य भावे भवेत्कार्यं न चेत्तस्य न कस्यचित्[१]॥

तदेष नियमप्रतिबद्धत्वान्न कार्यकारणभावप्रतीतिव्यभिचार:।

एवमेव यदि प्रत्यभिज्ञातदाभासयो: स्पष्टो लक्षणभेदो दर्शित: स्यात्, दर्शयितुं वा शक्येत व्यभिचाराव्यभिचारोपयोगी, तदा भवतु प्रत्यभिज्ञातदाभासयोर्विवेक:। नाप्नुयाच्च व्यभिचारी प्रत्यभिज्ञाभास: प्रत्यभिज्ञापदवीम्। तदैव च तवोक्ति: स्याद् युक्ता 'विसंवादिनी या सा प्रत्यभिज्ञैव न भवती'ति। न त्वेवमस्ति, सर्वत्रात्यन्तसदृशवस्तुनि पृथग्जनप्रत्यभिज्ञाया एकरसत्वात्।

**सदृशवस्तुनो: प्रत्यभिज्ञाभ्रमनिरास:**

न चात्यन्तसदृशवस्तुनो: प्रत्यभिज्ञा भ्रान्त्येति वाच्यम्, भ्रान्तिभ्रंशाभावात्तथाभ्युपगन्तुमशक्यत्वात्। तथा हि, किं भिन्नयोर्वस्तुनोरसमानकालयो: सादृश्यात्प्रत्यभिज्ञाभ्रम:, समानकालयोर्वा? नाद्य:, यदि चावश्यमेतावता कालेन भ्रान्तिभ्रंशो भवतीति कालनियम: स्यात्तदा भ्रान्त्यभ्युपगमोऽपि युज्यते। यावता च छिन्नोद्भिन्नकेशपाशादौ पुरुषायुषक्षयेणापि नैकताभ्रमभ्रंशोऽवश्यं यत्नवतो जनस्य भवतीति कथमस्य प्रत्यभिज्ञाभ्रम:? न च यावत्कालमुपपत्त्या न भ्रान्तिभ्रंशस्तावत्कालं 'नैकमिदमि'त्याद्याप्तवचनं प्रमाणं भ्रान्त्या भिन्नयो:

---

१. ज्ञानश्रीमित्रनिबन्धावली, कार्यकारणभावसिद्धि:, का. ४।

प्रत्यभिज्ञयैकत्वाध्यवसाये, सति चोपपत्त्या प्रत्यभिज्ञाभ्रान्तिभ्रंशे न भिन्नयोः प्रत्यभिज्ञयैकत्वाध्यवसायावसर इति कथं प्रत्यभिज्ञाभ्रान्तिभ्रंशाभावस्य निरवधित्वात् तद्भ्रमस्य प्रत्यभिज्ञाकुक्षिप्रवेश इति वाच्यम्, प्रयतमानस्यापि तत्र प्रत्यभिज्ञाभ्रान्त्यप्रतीतेर्नाप्तवचनप्रामाण्याद् भ्रान्त्यभ्युपगमः, मानाभावात्, वचनेनैव तत्त्वनिश्चये च प्रयत्नानर्थक्यात्। ननूपपत्त्या भ्रान्तिभ्रंशे, सति च भेदावसाये सः प्रत्यभिज्ञया सिद्धस्यैकत्वस्य बाधक इति चेत्, अत्रोच्यते, उपपत्त्यैव (अनुमानाख्योपपत्त्यैव) वयं भेदं साधयामः, तद्धानये तवैकत्वप्रयासः प्रत्यभिज्ञया। तथा चोपपत्तिस्वीकारोऽविशेषादयमपि तव स्यात्, तेन च क्षणिकत्वसिद्धिरभ्युपेता स्यात्तवापि। यदि च ममैवोपपत्तिरभ्युपेया न तवेति तदा केवलं भेदसाधकमतीतमनुमानं वराकमसमर्थमिदानीं केशादौ तवाभेदसाधकं वचनमपि समर्थमिति महती स्वमतपक्षपातिनी परामर्शशक्तिः।

अयमस्य सारः—प्रत्यभिज्ञया पूर्वापरकालवस्तुन एकत्वाध्यवसायो न सफलः, तस्या भिन्नयोरपि सदृशवस्तुनोरेकत्वाध्यवसायात्। न च भिन्नयोर्वस्तुनोः प्रत्यभिज्ञाभ्रम इति वाच्यम्, अत्रोच्यते—यावद् भ्रमस्य भ्रंशो न भवति तावत्कथं वयं विद्मो यदयं भ्रमः प्रमा वेति। न चायं भ्रमभ्रंशः केशादौ पुरुषायुषक्षयेणापि भवति, तदयमध्यवसायः प्रमैवोरीकरणीयः। तद्भिन्नयोरप्येकत्वापादिकया व्यभिचारिण्या प्रत्यभिज्ञया नैकत्वग्रहः सुग्रह इति।

ननु च्छिन्नोद्भिन्नकेशपाशादौ भिन्ने क्वचित्प्रत्यभिज्ञाज्ञाने सत्यपि न सर्वत्र भिन्ने सादृश्यात्प्रत्यभिज्ञानमिति चेत्, न, स्तम्भमेकमपनीय निवेशिते स्तम्भान्तरे, अन्यत्रापि च बहुत्र भिन्ने प्रत्यभिज्ञादर्शनात्। एवं सत्त्वानां क्षणिकत्वात्, भिन्नेषु घटस्फटिकादिष्वेकत्वाध्वसायः सादृश्यात्।

न द्वितीयः, समानकालयोस्तु भावयोर्भिन्नयोः प्रत्यभिज्ञयैकत्वाध्यवसाये 'स एवायमि'त्यात्मके सत्यपि, भेदग्रहस्त्वतिस्पष्टो न व्याख्यानार्हः।

तस्मात्कालभेदेनैकाभिमतेऽपि स्तम्भादौ भिन्न एव किमयमेकत्वाध्यवसायः स्तम्भान्तरेणेव, अथाभिन्नः? संशयोऽयं प्रत्यभिज्ञायाः प्रामाण्यप्रतिषेधी कथं निषेध्यः?

ननु 'विरुद्धनानाकोट्युत्थापकं ज्ञानं संशयः' अत्र तु क्षणभेदेन भेदस्यादृष्टपूर्वत्वात्, क्षणभेदेनाप्यभेदस्यैव दृष्टत्वात्, तत्क्षणान्तरवर्तिस्तम्भादौ विरुद्धकोटिद्वयभेदाभेदस्याभावात् कथं संशय इति चेत्, न, अदर्शनादेव भेदाभावस्य वक्तुमशक्यत्वात्। सतोऽपि तस्य सूक्ष्मतयानुपलक्षणात्।

तत्क्षणोदयव्ययदेहोपचयापचयवत्। ततोऽनुपलक्षणेऽपि भेदस्य तत्सत्तोल्लेखशेखरो दुर्निवारः संशयः। किञ्च, क्षणभेदेनापि भेदः प्रमाणपरिदृष्टत्वाद् दृष्ट एव। यथा जलधारायां कियत्यपि नभोभागेऽपरापरपयःपातेऽपि तदेवेदमुदकमित्यवधारणस्य विपर्ययस्थितेश्च सम्भवात्।

न च धारादौ तदेवेदमुदकमित्यवधारणं भेदेऽपि अनभ्यासदशायामेव। स्तम्भादौ त्वेकताग्रहोऽभ्यासदशायामेव। तेनानभ्यासदशायां भ्रमोऽभ्यासदशायां तु निश्चय इति वाच्यम्, क्षणभेदभाविनि विशेषे सर्वत्रैवास्माकमनभ्यास एवेति विज्ञेयम्। तेन सर्वत्रैवैकताग्रहो भ्रमः।

किञ्च, अम्भःस्तम्भादौ तत्क्रियासार्थसामान्यालम्बनः सर्वत्राभ्यासः स्थूलविषयः। तत्स्थूलविषयसामन्यात्मनाऽभेदग्रहेऽपि स्वलक्षणविषयेण वास्तविकेन भेद एव। तस्मान्न क्षणद्वये अभेदसाधनव्यापारः स्वीकर्तुं शक्यः। एकावसायमात्रं तु सदपि व्यभिचारादसमर्थम्।

**पुनरपि प्रत्यभिज्ञाया अविसंवादित्वखण्डनम्**

यदलिङ्गस्य प्रत्यभिज्ञाप्रमाणस्य प्रमाणत्वापनयनायोपस्थापितं विकल्पद्वयं प्रत्यभिज्ञाया अविसंवादो नाम प्रमाणान्तरसङ्गतिरर्थक्रियाप्राप्तिर्वेति। तत्र प्रथमपक्षो निराकृतोऽपि पुनरुपस्थाप्य दूष्यते सिंहावलोकनन्यायेन। ननु सर्वत्र नीलादौ प्रत्यभिज्ञाज्ञानस्य पृष्ठभाविना विकल्पेना(मनोविज्ञानात्मकेना)नुगम्यमानत्वात् प्रमाणान्तरसङ्गत्या प्रामाण्यं स्यादिति चेत्, न, सर्वत्रेन्द्रियज्ञानस्य प्रत्यक्षस्य पृष्ठभाविना विकल्पज्ञानेनानुगम्यमानत्वेऽपि प्रमाणत्वाभावो, यथा मरीचिविषयस्य जलस्य प्रत्यक्षस्य। तथा विकल्पेनानुगम्यमानत्वेऽपि न प्रत्यभिज्ञायाः प्रामाण्यम्। ननु तथा सति 'विकल्पापेक्षं तु प्रामाण्यमि'त्यस्य कोऽर्थ इति चेदत्रोच्यते, विकल्पानुदये अप्रमाण्यं तदुदये तु संवादापेक्षमेव प्रामाण्यमिति तदर्थः।

ननु यत्र संवादबाधोऽर्थाद् विसंवादोऽर्थाधिगतेस्तत्रानुगम्यमानेऽपि विकल्पे प्रत्यक्षस्य प्रत्यभिज्ञाया वा प्रामाण्यम्, किन्तु यत्राविसंवादोऽर्थाधिगतेरर्थादबाधस्तत्र का हानिः प्रामाण्याभ्युपगम इति चेत्, न, अनिष्टापत्तेः। तथा हि अवनतगगनप्रतीतिरपि देशकालान्तरव्यापिनी विकल्पेनानुगम्यते, किं साऽपि प्रमाणम्, नेति वक्तुं शक्यते, यतः सा निरूप्यमाणा नावतिष्ठते। तथैव एकत्वाध्यवसायमुपस्थापयन्ती प्रत्यभिज्ञापि न प्रमाणम्, तया निरूपणाद् भिन्नेऽपि सादृश्याद् एकत्वोपस्थितेः।

किञ्च, यदर्थाधिगतेरबाधात्प्रामाण्यं प्रत्यक्षस्य प्रत्यभिज्ञायाश्च तत्र किमयमबाधो नाम? बाधाभावो वा, बाधानुपलब्धिर्वा? तथा च 'प्रत्यभिज्ञा

प्रमाणम्, अर्थक्रियाधिगतेर्बाधाभावात्' अथवा 'प्रत्यभिज्ञा प्रमाणम्, अर्थक्रियाधिगतेर्बाधानुपलब्धेरि'त्यनुमानद्वयं फलति। तत्र नाद्यम्, असिद्धेः। तथा ह्यत्रार्थक्रियाकारित्वमेव सत्त्वमभिप्रेतम्। तच्चार्थक्रियाकारित्वं क्रमाक्रमाभ्यां व्याप्तम्। क्रमाक्रमौ स्थिरान्निवर्तन्तौ स्वव्याप्यमर्थक्रियाकारित्वमपि निवर्तयतः। तदत्र कश्चन प्रसङ्ग आपतति[१]। 'तत्र कोऽयं प्रसङ्गो नाम? प्रमाणप्रसिद्धव्याप्तिकेन वाक्येन परस्यानिष्टत्वापादनाय प्रसञ्जनं प्रसङ्गः'। तथा चात्र 'यदि क्षणिकता न स्यात्, तदा सत्त्वमपि न स्यात्' प्रसङ्गोऽयमापतति। सर्वश्च प्रसङ्गो विपर्ययनिष्ठः। तेन च 'यत् सत् तत् क्षणिकमेवे'ति व्याप्तिः प्रतिफलति।

अयं सारोऽस्य—उक्तक्रमाक्रमनिवर्तनाख्यसाध्यविपर्ययबाधकप्रमाणेन 'यदक्षणिकं तदसत्' इति व्याप्तेः प्रसङ्गविपर्ययेण 'यत्सत् तत्क्षणिकमि'ति व्याप्त्याऽर्थक्रियाकारित्वं क्षणिकेष्वेव विश्राम्यति। प्रत्यभिज्ञासिद्धे चाक्षणिके क्रमाक्रमयोर्विरोधादर्थक्रियाकारित्वासिद्धेरसत्त्वादर्थाधिगतिरूपसंवादस्य बाधाद् बाधाभावरूपहेतोस्स्वरूपासिद्धिः। न द्वितीयमपि, यतो योग्यस्य देशकालविप्रकर्षिण एवानुपलब्ध्याऽभावसिद्धिरतथाभूतस्य त्वनुपलब्ध्यापि नाभावः। तेन नानुपलब्धिर्हेतुः, स्वसाध्याभाव(प्रकृते अनुपलब्धिहेतौ, अयोग्यस्य प्रतिषेध्यस्य सद्भावे) सामानाधिकरण्यात्। अथवा अक्षणिके संवादबाधकानुमानसद्भावात् सत्प्रतिपक्षत्वम्। अत एवोक्तम्[२]—'अनुपलब्धिमात्रेण निषेधासिद्धेः, बाधकस्य चानुमानस्याभिधास्यमानत्वात्' इति।

ननु प्रत्यक्षसमाख्यातनया प्रत्यभिज्ञया संवादस्याक्षणिके सिद्धिः प्रत्यक्षेण, तत्कथं तस्यानुमानेन बाधः? प्रत्यक्षमेवास्य बाधकमस्त्विवति चेदत्रोच्यते—यदि प्रत्यभिज्ञानं स्वार्थाविनाभावि प्रमाणं तदा प्रत्यक्षसहस्रेणापि नास्य बाध्यता। यथोक्तम्[३]—'संवादद्रढिम्नि प्रत्यक्षशतेनापि किमस्याः'? संवादशैथिल्ये तु अर्थात्, क्वचिदक्षणिकैकस्याभावे क्षणिकेऽपि सादृश्यात्प्रत्यभिज्ञायाम्, यथा प्रत्यक्षेण बाधा तथाऽनुमानेनापि किं तेन? प्रमाणस्यैव सिद्धिबाधयोरधिकारात्।

किञ्चैन्द्रजालिकः शिरसि निमज्जितं गोलकमास्येन निःसारयति, तत्र प्रत्यभिज्ञा शिरसि छिद्रप्रसङ्गसङ्गतेनानुमानेन बाध्यमाना प्रतीयत एव। यदि चानुमानेन न बाध्यमाना प्रत्यभिज्ञेति तदा प्रस्तुतेऽप्यनुमानेन बाध्यमानत्वान्न स्यात्प्रत्यभिज्ञा। यथावनताकाशप्रतिभासः सर्वसम्प्रतिपत्तावपि निरूपणाद् युक्त्या

१. तर्कभाषा, अनुमानप्रकरणम्, पृ. ७८।

२. ज्ञानश्रीमित्रनिबन्धावली, पृ. १४।

३. तदेव, पृ. १४।

बाध्यस्तथा सर्वसम्प्रतिपत्तावप्येकताग्रहः प्रत्यभिज्ञया बाध्योऽस्त्वनुमानेन। अतः प्रत्यक्षेण प्रमाणेनैव बाधनमस्या याचितमण्डनमात्रमत्राणम्।

ततश्च गम्भीरयुक्त्या तत्त्वानिर्धारणे प्रत्यभिज्ञायाः सत्त्वादनुमानेन च बाध्यमानत्वात्, प्रामाण्याप्रामाण्यानिश्चये तदुभयावलम्बी संशयः सिद्धः। कदलीकाण्डादौ व्यभिचारदर्शनाच्च न प्रत्यभिज्ञायाः प्रामाण्यम्।

किञ्च, य एवमाह[1] विसंवादिनी या सा प्रत्यभिज्ञैव न भवति तदाभासत्वादिति, तत्राप्युच्यते, किं तेन शब्दादौ प्रमेयत्वं हेतूकृत्य यदक्षणिकत्वं साध्यते, तत्रापि साध्यव्यभिचारि प्रमेयत्वम्, तथा च तदाभासत्वात् तद्धेतुरपि न स्यात्? तेन 'शब्दादिभावा[2] अक्षणिकाः प्रमेयत्वात्, 'यत्प्रमीयते तदक्षणिकम्' इत्यनुमानमपि हेत्वाभासदोषान्न स्यात्प्रमाणमिति। यथा, प्रमेयत्वं स्वसाध्याक्षणिकाभावे क्षणिके वर्तमानं सद्व्यभिचारि, तथा प्रत्यभिज्ञापि एकत्वाभावे भिन्ने वर्तमाना व्यभिचारिणी। तत्समानयोगक्षेमतयोभयत्र प्रामाण्याप्रामाण्ये समानरूपेणापततः। ननु क्वचित्प्रत्यभिज्ञाया भिन्ने विद्यमानत्वाद् व्यभिचारेऽपि; अव्यभिचारावस्थायामर्थादिकस्यैव प्रत्यभिज्ञानदशायां तस्याः प्रामाण्यमव्याहतमिति चेत्, न, हेत्वाभासग्रस्तहेतोरिव तस्याः प्रामाण्याभावात्। यथा हेत्वाभासग्रस्तो हेतुर्न हेतुस्तथा प्रत्यभिज्ञाभासदोषग्रस्ता प्रत्यभिज्ञापि न प्रमाणम्।

नन्वत्राभिधीयते—सद्धेतुघटितमनुमानमसद्धेतुघटितञ्चानुमानं समानाकारं परं सद्धेतौ साध्यसिध्याश्वासोऽन्यत्र चानाश्वासोऽसद्धेतौ, हेतुविशेषात्। तथा ह्यविचारेणोभयोः समानाकारत्वेऽपि त्रिरूपलिङ्गजनितानुमानस्यैव साध्यसिद्धिसामर्थ्यात् तत्रैवाश्वासः। नातथाभूतेऽसद्धेताविति। यथा याऽध्यक्षानुपलब्धिसाधना कार्यकारणभावप्रतीतिः सैव कार्यकारणभावपदवीमध्यारोहति। तेन त्रिरूपहेतुः सद्धेतुः। तज्जनितमनुमानं साध्यसिद्धिकृत्, तत्राश्वासः। यश्च न त्रिरूपयुक्तः स न सद्धेतुः। न तज्जनितमनुमानं साध्यसिद्धिकृदिति न तत्राश्वासः। एवमेव कार्यकारणभावप्रतीतितदाभासयोरपि लक्षणभेदो यथोक्तमुपरिष्टात्। तेन नात्रोभयोः स्थलयोराश्वासानाश्वाससङ्करप्रसङ्गः। किन्तु प्रत्यभिज्ञायां न तथा। न प्रत्यभिज्ञातदाभासयोर्लक्षणाद्विशेष इत्यर्थः। तथा हि, सा यथा अनुपहितेन्द्रियस्य एकस्मिन् वस्तुनि जायते, तथा भिन्नयोरपि सादृश्याद् भवति। तेन नैकत्राभीष्टस्थले स्वीकृत्यापरत्र तदाभासस्थले तस्याः परित्यागः सम्भाव्यते।

---

१. यथा रत्नकीर्तिनिबन्धावल्याम्, पृ. ११५ त्रिलोचनपक्षे।

२. अक्षणिकत्वसाधनायानुमानमिदमुपात्तं तत्रैव।

न चात्रापि भिन्नयोः प्रत्यभिज्ञा भ्रान्त्या। तेन सा प्रत्यभिज्ञाभासः, तथा सति तयोर्लक्षणभेद इति वाच्यम्, बहलव्यामोहाद् अदृष्टादिहेतुप्रभावाद् भ्रान्तेर्विषयसामग्रीपरिलम्बनाच्च, तस्या भ्रान्तेः सुचिरं स्थितत्वात्। भ्रंशाभावे भ्रमस्य तदाभासोपपत्तिनिरूपणाशक्यत्वात् प्रत्यभिज्ञानमेकमेव न तदाभासः (प्रत्यभिज्ञाभ्रमः)। एवञ्च द्वितीयकोटेः (भ्रान्तिक्रोटेः) अभावात् क्व लक्षणभेदवार्ता?

न चानुमानेऽपि यत्र व्यभिचारस्तल्लिङ्गमेव न भवतीत्यत्रापि कोट्यन्तराभावात् क्व लक्षणभेदवार्तेति समानमिति वाच्यम्, पक्षधर्मत्वादिकस्यानुमानाकारस्याभिधानाप्रसङ्गात्।

अथ व्यभिचारिणोऽपि हेतोर्व्यभिचारादर्शनात्, वक्तव्यं तल्लक्षणं हेतुरूपेण, येन प्रेक्षकस्तेन साध्यमनुमाय, हानोपादाने प्रवर्तेत, अथवा व्यभिचारादर्शनेऽपि भाविव्यभिचारदर्शनप्राप्तेरप्रामाण्यशङ्कायां निवर्तेतानुमितेः। तत्रोच्यते, इदमवधेयम्—यथाऽत्र न व्यभिचारादर्शनमात्रेणैकान्तेनैकस्मिन् प्रामाण्ये अप्रामाण्ये वाऽऽश्वासस्तथा प्रत्यभिज्ञायामपि यावन्न भ्रान्त्युपपत्तिस्तद्भ्रंशात् तावन्न प्रामाण्यमप्रामाण्यं वा एकान्तेन वक्तुं शक्यते।

तदियं प्रत्यभिज्ञा यावन्न व्यपनयति व्यभिचाराशङ्काम् तावत् तत् कलङ्कपङ्कलग्ना न कालान्तरस्थितिमर्थस्य स्थापयितुं प्रभवति। नापि च क्षणभङ्गप्रसाधकमनुमानमनवकाशयितुमर्हति। तत्कथं प्रत्यभिज्ञामपेक्ष्य कालान्तरसाधनादक्षणिकसाधनेन प्रत्यक्षबाध उच्यते क्षणिकत्वसाधकानुमानस्य, सपक्षे च जलधरे प्रत्यभिज्ञयाऽक्षणिकत्वादन्वयाभाव इति।



# द्वितीयहेत्वाभाससामान्यलक्षणे केचन विमर्शाः

**डॉ. गणपतिशुक्लः**

अनुसन्धानसहायकः

सर्वभारतीयकाशिराजन्यासस्य

रामनगरम्, वाराणसी



यद्विषयकत्वेन लिङ्गज्ञानस्यानुमितिविरोधित्वं तत्त्वमिति[1] हेत्वाभासद्वितीयलक्षणे लिङ्गांशनिवेशस्य निष्प्रयोजनतया अर्थादनतिप्रयोजनकतया तस्याविवक्षितत्वं कथितमस्ति[2]। लक्षणघटकविशेषणानामनतिप्रयोजनकत्वन्नामा-व्याप्त्यतिव्याप्त्यादिदोषनिवारणेच्छानधीनेच्छाविषयत्वम्। तथा चास्मिन् लक्षणे लिङ्गांशस्यानिवेशे अव्याप्त्यतिव्याप्त्यादिदोषो नास्तीत्यतः परिष्कृतानति-प्रयोजनकत्वस्य तत्र सत्त्वेन तस्याविवक्षितत्वमुचितमेव।

ननु लिङ्गांशस्य वैयर्थ्यसम्भवे निष्प्रयोजनकत्वं कथमुक्तम्। व्यावृत्ति-र्व्यवहारो वा लक्षणस्य प्रयोजनमिति रीत्या हेत्वाभासा इतरभिन्ना इत्यनुमितिः प्रकृतलक्षणस्य प्रयोजनम्। तादृशानुमितिसाधकस्य हेतोर्व्यर्थविशेषणघटितत्वेन[3] व्याप्यत्वासिद्धिरूपदोषग्रस्तत्वाल्लक्षणस्य प्रयोजनं न सिद्ध्यतीति गुरुभूतदोषसत्त्वेनानतिप्रयोजनकत्वरूपलघुदोषदानमसङ्गतम्।

ननु किं तावद् व्यर्थविशेषणघटितत्वम्? स्वसमानाधिकरणप्रकृतसाध्य-व्याप्यतावच्छेदकधर्मान्तरघटितत्वम्। यथा पर्वतो वह्निमान् नीलधूमादित्यत्र स्वं नीलधूमत्वं तत्समानाधिकरणम्, अथ च प्रकृतसाध्यव्याप्यतावच्छेदकधर्मान्तरं धूमत्वं तद्घटितत्वस्य नीलधूमत्वे सत्त्वेन नीलधूमरूपहेतुर्व्यर्थविशेषणघटितत्व-युक्त इति लक्षणसमन्वयः।

ननु विशिष्टं शुद्धान्नातिरिच्यत इति नियमानुसारेण शुद्धधूमत्वस्य नीलत्वविशिष्टधूमत्वानतिरिक्ततया धूमत्वे स्वसमानाधिकरणप्रकृतसाध्यव्याप्यता-वच्छेदकधर्मान्तरत्वाभावात् कथं तत्र व्यर्थविशेषणघटितत्वमिति चेत्, न।

---

१. तत्त्वचिन्तामणिः, पृ. ९१; २. सा.नि.दि., पृ. ९२।

३. स्वसमानाधिकरणप्रकृतसाध्यव्याप्यतावच्छेदकधर्मान्तरघटितत्वं तत्त्वम्।

अन्तरपदं न भिन्नार्थकं किन्तु स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकपरम्। तथा च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत् स्वसमानाधिकरणप्रकृतसाध्यव्याप्यतावच्छेदकं तद्घटितत्वमिति व्यर्थविशेषणघटितत्वस्य लक्षणं फलितम्। तथा च नीलधूमत्वावच्छिन्नाविषयकप्रतीतिर्धूम इत्याकारिका तद्विषयतावच्छेदकं धूमत्वं तादृशधूमत्वं स्वसमानाधिकरणप्रकृतसाध्यव्याप्यतावच्छेदकमप्यस्ति तद्घटितत्वस्य नीलधूमत्वे विद्यमानत्वेन लक्षणसमन्वयः।

नन्वस्मिंल्लक्षणे साध्यव्याप्यतावच्छेदकत्वपदं किमर्थम्? तदनिवेशेऽपि नीलधूमत्वे लक्षणसमन्वयो भवत्येवेति चेत्, न, तथा सति द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यत्र व्यर्थविशेषणघटितत्वलक्षणस्यातिव्याप्तिः स्यात्। तथा हि स्वं गुणकर्मान्यत्वविशिष्टसत्तात्वं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं सत्तात्वं तत् स्वसमानाधिकरणमप्यस्ति तद्घटितत्वस्य विशिष्टसत्तात्वे सत्त्वादतिव्याप्तिः। साध्यव्याप्यतावच्छेदकत्वनिवेशे सति सत्तात्वे द्रव्यत्वरूपप्रकृतसाध्यव्याप्यतावच्छेदकत्वविरहान्नातिव्याप्तिः।

ननु स्वसामानाधिकरण्यं किमर्थं देयम्? तदनिवेशेऽपि पूर्वोक्तदोषाणां वारणसम्भवादिति चेत्, न, तथा सति पर्वतो वह्निमान् धूमप्रागभावादित्यत्रालक्ष्यीभूतधूमप्रागभावत्वेऽतिव्याप्तिः। तत्र हि स्वपदेन धूमप्रागभावत्वम्, तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकमथ च प्रकृतसाध्यव्याप्यतावच्छेदकं धूमत्वं तद्घटितत्वस्य धूमप्रागभावत्वे सत्त्वेनातिव्याप्तिः। अतः स्वसमानाधिकरणपदोपादानम्। तथा च धूमत्वे स्वपदग्राह्यधूमप्रागभावत्वसमानाधिकरणत्वविरहान्नातिव्याप्तिः। अस्मिंल्लक्षणे तद्घटितत्वन्नाम तदवच्छिन्नाविषयकप्रतीतिविषयतानवच्छेदकत्वम्। एवञ्च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत् स्वसमानाधिकरणप्रकृतसाध्यव्याप्यतावच्छेदकं तदवच्छिन्नाविषयकप्रतीतिविषयतानवच्छेदकत्वं व्यर्थविशेषणघटितत्वस्य लक्षणं पर्यवसितम्। पर्याप्त्यादिनिवेशप्रकारश्च स्वयमूहनीय इत्यलमतिविस्तरेण।

प्रकृते च यद्विषयकत्वेन लिङ्गज्ञानस्यानुमितिविरोधित्वं तत्त्वम्, तत्समानाधिकरणं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकम्, अथ च प्रकृतसाध्यव्याप्यतावच्छेदकं यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तत्तत्त्वं तदवच्छिन्नाविषयकप्रतीतिविषयतानवच्छेदकत्वस्य स्वस्मिन् विद्यमानत्वेन लक्षणसमन्वयः। तथा च लिङ्गांशस्य वैयर्थ्यदानं कथं परित्यक्तमिति चेत्, न, यद्विषयकत्वेन लिङ्गज्ञानस्येत्यादिलक्षणघटकतृतीयाया अनतिरिक्तवृत्तित्वरूपा-

वच्छेदकत्वार्थकतया तद्घटितं लक्षणं लिङ्गविषयकयद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपवत्त्वमिति पर्यवस्यति। तथा च लिङ्गांशघटितहेतुघटकव्यापकत्वरूपाभावस्तथा लिङ्गांशाघटितलक्षणघटकव्यापकत्वरूपाभावः परस्परं भिन्नः। तथा च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदके अथ च प्रकृतसाध्यव्याप्यतावच्छेदकधर्मे स्वसामानाधिकरण्यविरहादेव व्यर्थविशेषणघटितत्वाभावात् लिङ्गांशनिवेशस्य वैयर्थ्यं न सम्भवतीति भावः[1]।

ननु लिङ्गाज्ज्ञानं लिङ्गज्ञानमिति समासाश्रयणे लिङ्गज्ञानजन्यत्वं यद्विषयकज्ञाने लभ्यते। तेनानुमितेर्लाभः सञ्जातः। तथा च यद्विषयकानुमितित्वव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपवत्त्वमिति लक्षणं पर्यवसितम्। एवञ्चाहार्यत्वसंशयत्वयोरसम्भवेनानाहार्यत्वानिश्चयत्वरूपविशेषणद्वयानिवेशप्रयुक्तलाघवरूपातिप्रयोजनसत्त्वेन लिङ्गांशनिवेशस्यानतिप्रयोजनकत्वं कथमुक्तम्[2]।

तथा सति 'जलमवृत्ति' इत्यत्र जलवद्रूपबाधे अव्याप्तिः। तत्र जलवत्त्वरूपयद्रूपावच्छिन्नविषयताशाल्यनुमितेरप्रसिद्धेः। अनुमितेः सधर्मितावच्छेदकत्वेन निर्धर्मितावच्छेदकानुमितेस्तत्राप्रसिद्धत्वात्। न च निर्धर्मितावच्छेदकानुमितिः स्वीक्रियते। तथा च तत्र जलवत्त्वावच्छिन्नविषयताशालिजलवानित्याकारकानुमितिमादाय लक्षणसमन्वयो भवत्येवेति कथमव्याप्तिरिति वाच्यम्। वह्निव्याप्यधूमवान् पर्वत इत्याकारकपरामर्शानन्तरं वह्निमद्भूतलमित्याकारकानुमितेरनुत्पादाद् अनुमितिपरामर्शयोः कार्यकारणभाव एवं कर्तव्यः—यद्धर्मावच्छिन्नोद्देश्यताकयद्धर्मावच्छिन्नविधेयताकानुमितिं प्रति तद्धर्मावच्छिन्नप्रकारताशालिपरामर्शः कारणम्। तथा च परामर्शजन्यतावच्छेदककोटौ धर्मितावच्छेदकतायाः प्रवेशस्यावश्यकतया निर्धर्मितावच्छेदकानुमितिर्नैव स्वीकर्तुं शक्यते। एवञ्च 'जलमवृत्ति' इत्यत्र जलवद्रूपबाधे अव्याप्तिरस्त्येवेति चेत्, न, जलवज्जलमित्याकारकानुमितिमादाय लक्षणसमन्वयः। जलवज्जलमित्याकारकानुमितित्वव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता अस्ति, तद्रूपवत्त्वस्य जलवति सत्त्वात्।

न च सिद्धान्ते ह्रदो वह्निमान् जलादित्यत्र वह्न्यभाववद्ह्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वस्य जातिमान् वह्न्यभाववानित्याकारकनिश्चयेऽपि सत्त्वेन तत्र प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविरहात्। तत्र

---

१. सा.नि. तत्त्वालोकः, पृ. २; २. तत्रैव, पृ. २।

वह्न्यभाववद् ह्रदरूपबाधादावसम्भववारणाय यद्रूपावच्छिन्नविषयताशालिनिश्चये यद्रूपावच्छिन्नविषयतासमानाधिकरणभेदप्रतियोगितावच्छेदकविषयताशून्यत्वरूपाव्यापकविषयताशून्यत्वस्यावश्यं निवेशनीयतया अस्माभिरपि यद्रूपावच्छिन्नविषयताशाल्यनुमितौ तादृशाव्यापकविषयताशून्यत्वस्य निवेशः क्रियते। तथा च यद्रूपावच्छिन्नविषयत्वाव्यापकविषयताशून्ययद्रूपावच्छिन्नविषयताशाल्यनुमितित्वव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपवत्त्वमिति लक्षणं पर्यवसितम्। एवञ्च पूर्वोक्तस्थले जलवद्रूपबाधे अव्याप्तिर्भवत्येव। तत्र जलवज्जलमित्याकारानुमितिर्नैव धर्तुं शक्यते। तादृशानुमितौ जलवत्त्वावच्छिन्नविषयताया अव्यापकीभूताया जलवज्जलत्वावच्छिन्नविषयतायाः सत्त्वात्।

न च जलत्वेन घटावगाहिजलवज्जलमित्याकारानुमितिमादाय लक्षणसमन्वयः क्रियते, तादृशानुमितौ जलवत्त्वावच्छिन्नविषयताया अव्यापिका विषयता न काप्यस्तीति वाच्यम्। तत्रापि जलवत्त्वावच्छिन्नविषयतानिरूपितजलत्वत्वावच्छिन्नविषयतायाः अव्यापिकायाः सत्त्वादव्याप्तिरस्त्येव।

ननु जलवत्त्वावच्छिन्नविशेष्यताकस्वरूपतो द्रव्यत्वप्रकारकजलवद्द्रव्यमित्याकारिकायां जलवत्त्वरूपयद्रूपावच्छिन्नविषयताशाल्यनुमितौ जलवत्त्वावच्छिन्नविषयत्वाव्यापकविषयताशून्यत्वस्य विद्यमानत्वात्तामादायैव लक्षणसमन्वयः। तत्र स्वरूपतो द्रव्यत्ववज्जलवत्त्वावच्छिन्नविषयताया अव्यापकीभूतविषयतायाः सत्त्वेन कथं लक्षणसमन्वयो यद्युच्यते, तदापि जलवत्त्वावच्छिन्नविशेष्यतानिरूपितस्वरूपतः संयोगेन द्रव्यत्वप्रकारकानुमितिमादाय लक्षणसमन्वयः। तत्र यद्रूपावच्छिन्नविषयताया अव्यापकीभूताविषयता न काऽप्यस्ति, किन्तु अन्यज्ञानीया घटत्वावच्छिन्नविषयता अव्यापिका भवितुमर्हति, तच्छून्यत्वस्य यद्रूपावच्छिन्नविषयताशालितादृशानुमितौ विद्यमानत्वाल्लक्षणसमन्वय इति चेत्, न, यादृशस्थलविशेषे बाधविषयकभ्रमात्मकज्ञानं कस्यापि न जातम्, तत्र जलादिपक्षकावृत्तित्वसाध्यकस्थलीयजलवद्रूपबाधे अव्याप्तिः, तत्र यद्रूपावच्छिन्नविषयताशाल्यनुमित्यप्रसिद्धेः। अतो लिङ्गाज्ज्ञानं लिङ्गज्ञानमिति समासाश्रयणं नोचितम्। अतो लिङ्गांशनिवेशस्य निष्प्रयोजनकत्वमुक्तम्[१]।

ननु लिङ्गांशस्य निवेशे ह्रदो वह्निमान् जलादित्यत्र बाधे अव्याप्तिः। लिङ्गविषयकयद्विषयकनिश्चयपदेन 'वह्न्यभाववान् ह्रदो जलञ्च' अयमेव निश्चयो धर्तव्यः; परन्तु स निश्चयो नैव धर्तुं शक्यते। तादृशनिश्चये वह्न्यभाववद्ह्रदत्वावच्छिन्नविषयत्वाव्यापिकाया जलत्वावच्छिन्नविषयतायाः सत्त्वेन

१. सा.नि. तत्त्वालोकः, पृ. ४३।

यद्रूपावच्छिन्नविषयत्वाव्यापकविषयताशून्यत्वरूपविशेषणविरहादव्याप्तिसम्भवे अनतिप्रयोजनकत्वं कथमुक्तम्।

न च अव्यापकीभूतविषयतायां लिङ्गतावच्छेदकावच्छिन्नविषयताभिन्नत्वं निवेश्यते। एवञ्च लिङ्गतावच्छेदकावच्छिन्नविषयताभिन्नयद्रूपावच्छिन्नविषयताधिकरणवृत्तिभेदप्रतियोगितावच्छेदकविषयताशून्ययद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपवत्त्वमिति लक्षणं पर्यवसितम्। तथा च तादृशलिङ्गविषयकदोषविषयकसमूहालम्बनात्मकनिश्चये अव्यापकविषयतापदेन जलत्वावच्छिन्नविषयता नैव धर्तुं शक्यते, तत्र लिङ्गतावच्छेदकविषयताभेदस्याविद्यमानत्वात्; किन्तु घटत्वावच्छिन्नविषयता ग्राह्या, तच्छून्यत्वस्य तादृशनिश्चये सत्त्वान्न दोष इति वाच्यम्।

तथापि 'ह्रदो वह्निमान् जातिमतः' इत्यत्र वह्न्यभाववद्ह्रदरूपबाधे अव्याप्तिः। तत्र लिङ्गविषयकयद्रूपावच्छिन्नविषयताशालिनिश्चयत्वस्य जातिमान् वह्न्यभाववानित्याकारकनिश्चये सत्त्वेन तत्र लिङ्गविषयताभिन्नयद्रूपावच्छिन्नविषयत्वाव्यापकविषयताशून्यत्वस्यापि सत्त्वेन प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशून्यत्वस्य तत्र सत्त्वात्[१]। यद्रूपावच्छिन्नविषयत्वाव्यापकविषयताशून्यत्वं यद्रूपावच्छिन्नविषयताशालिनिश्चये न निवेशनीयम्, किन्तु यद्रूपावच्छिन्नविषयतायामेव यद्रूपावच्छिन्नविषयत्वाव्यापकविषयताशून्यज्ञानीयत्वं निवेशनीयम्। तथा च समानाकारकज्ञानीयविषयत्वयोरभेदाद् वह्न्यभाववद्ह्रदत्वावच्छिन्नविषयत्वाव्यापकविषयताशून्यज्ञानं वह्न्यभाववान् ह्रद इत्याकारकसमूहालम्बनात्मकं ज्ञानं तदीया या वह्न्यभाववद्ह्रदत्वत्वावच्छिन्नविषयता सैव दोषविषयकलिङ्गविषयकसमूहालम्बनात्मकज्ञानेऽपि वर्तते। तथा च लिङ्गविषयकयद्रूपावच्छिन्नविषयत्वाव्यापकविषयताशून्यज्ञानीययद्रूपावच्छिन्नविषयताशालिनिश्चयत्वस्य दोषविषयकलिङ्गविषयकसमूहालम्बनात्मकज्ञाने सत्त्वेन तादृशनिश्चयत्वव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता जाता तद्रूपवत्त्वस्य वह्न्यभाववद् ह्रदे सत्त्वात् लक्षणसमन्वयो भवत्येवेति लिङ्गांशनिवेशस्यानतिप्रयोजनकत्वमेवोचितम्।

ननु यद्विषयकत्वेनेत्यादिलक्षणस्य पर्वतो वह्निमान् धूमादित्यत्र पर्वतवह्न्यभावाद्युदासीनेऽतिव्याप्तिः, तत्र वह्न्यभाववान् पर्वत इत्याकारकभ्रमात्मकज्ञानस्यापि वह्न्यभावादिविषयकत्वेन प्रकृतानुमितिविरोधितया यत्पदेन तस्यापि धर्तुं शक्यत्वेन तत्त्वस्य वह्न्यभावादौ सत्त्वादिति चेत्, न,

१. सा.नि., तत्त्वालोकः, पृ. ७।

यद्विषयकत्वपदस्य 'यादृशविशिष्टविषयकत्वमर्थः'[१]। तथा च यादृशविशिष्टविषयकनिश्चयत्वव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यता-निरूपितप्रतिबन्धकता तद्रूपवत्त्वम्। तथा च पर्वतो वह्निमान् धूमादित्यत्र यादृशविशिष्टपदेन वह्न्यभावत्वविशिष्टवह्न्यभाव इति गृह्यते, तद्विषयक-निश्चयत्वस्य वह्न्यभाव इत्याकारकनिश्चयेऽपि सत्त्वेन तत्र प्रकृतानुमितित्वव्यापक-प्रतिबध्यतानिरूपितप्रतिबन्धकताविरहान्नातिव्याप्तिः। वह्न्यभाववत्पर्वतत्वविशिष्ट-स्याप्रसिद्धत्वेन तादृशविशिष्टपदेन धर्तुमशक्यत्वात्।

न च ह्रदो वह्निमान् जलादित्यत्र वह्न्यभाववद्ह्रदरूपबाधेऽव्याप्तिः। तत्र यादृशविशिष्टपदेन वह्न्यभाववद्ह्रदत्वविशिष्टं ग्राह्यम्। विशिष्टं शुद्धान्नातिरिच्यत इति नियमानुसारेण तादृशविशिष्टविषयकत्वस्य शुद्धह्रदत्वविशिष्टविषयके ह्रद इत्याकारकज्ञानेऽपि विद्यमानत्वेन तत्र प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपित-प्रतिबन्धकत्वाभावादसम्भवः।

न च तादृशवह्न्यभावविशिष्टह्रदत्वावच्छिन्नविलक्षणविशिष्टविषयता वह्न्यभाववान् ह्रद इत्याकारकज्ञाने स्वीक्रियते, न तु ह्रद इत्याकारकज्ञाने। तथा च वह्न्यभावविशिष्टह्रदत्वविशिष्टविषयकनिश्चयत्वं वह्न्यभाववान् ह्रद इत्याकारकज्ञाने वर्तते। तत्र प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपित-प्रतिबन्धकतायाः सत्त्वादसम्भव इति वाच्यम्। तादृशविलक्षणविशिष्टविषयतायाः सत्त्वे प्रमाणाभावादिति चेत्, अत्रोच्यते—वह्न्यभाववान् ह्रद इत्याकारक-व्यवसायानन्तरं वह्न्यभाववद् ह्रदमहं जानामीत्याकारकानुव्यवसायो भवति। स एव प्रामाणिकानामनुव्यवसायः तादृशविलक्षणविशिष्टविषयतायाः सत्त्वे प्रमाणम्। तथा हि विशिष्टबुद्धौ विशेषणविशेषयोः सम्बन्धो नियमेन भासते। तथा च वह्न्यभाववद् ह्रदमहं जानामीत्यत्रात्मनि ज्ञानं विशेषणं ज्ञाने च वह्न्यभाववद्ह्रदः। तस्य ज्ञाने विशेषणत्वं ह्रदत्वावच्छिन्नविषयतासम्बन्धेन स्वीक्रियते। तदा ह्रद इत्याकारक-व्यवसायानंन्तरं वह्न्यभाववद् ह्रदमहं जानामीत्याकारकानुव्यवसायः प्रामाणिकानां स्यात्। विशिष्टं शुद्धान्नातिरिच्यत इति नियमानुसारेण तत्रापि ज्ञानांशे वह्न्यभाववद् ह्रदरूपशुद्धह्रदस्य ह्रदत्वावच्छिन्नविषयतानिरूपितविषयित्वसम्बन्धेन सत्त्वात्। यदि वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयत्वस्य सम्बन्धत्वं स्वीक्रियते तदा सैवापत्तिः, विशिष्टशुद्धयोरैक्यात्।

ननु वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिंन्नविशेष्यतासम्बन्धेन वह्न्यभाववद् ह्रदस्य ज्ञानांशे विशेषणत्वम्। एवञ्च ह्रद इत्याकारकज्ञानानन्तरं

---

१. सा.नि., दीधितिः, ९१।

वह्न्यभाववद् ह्रदमहं जानामीत्याकारकानुव्यवसायो न भवति, तत्र वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यतायाः सम्बन्धतया अभावात्। तदपि न समीचीनम्। तथा सति वह्न्यभावत्वेन जलावगाहि-वह्न्यभाववान् ह्रद इत्याकारकज्ञानानन्तरं प्रामाणिकानां वह्न्यभाववद् ह्रदमहं जानामीत्याकारकानुव्यवसायापत्तिः। तद्वारणार्थं वह्न्यभावत्वावच्छिन्नवह्न्य-भावनिष्ठप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यतानिरूपितविशेषित्वसम्बन्धेन ज्ञानांशे वह्न्यभाववद् ह्रदस्य विशेषणत्वं यद्युच्यते, तदा नेयमापत्तिः, तत्र वह्न्यभावत्वावच्छिन्नप्रकारताया वह्न्यभावनिष्ठत्वाभावात्। तथापि पर्वतो वह्न्यभाववान् इत्याकारकज्ञानानन्तरं वह्न्यभाववत्पर्वतमहं जानामीत्याकारकानु-व्यवसायापत्तिः। यतो न हि प्रामाणिकानामेतादृशानुव्यवसायो भवतीत्यतो वह्न्यभाववद् ह्रदमहं जानामीत्याकारकानुव्यवसाये वह्न्यभावत्वावच्छिन्न-प्रकारतानिरूपितवह्न्यभाववद् ह्रदत्वावच्छिन्नविशेष्यतानिरूपितविशेष्यताया एव भानेन सैव विषयता विशिष्टविषयतापदेनोच्यते। तथा च वह्न्यभाववान् पर्वत एतादृशज्ञानानन्तरं वह्न्यभाववत्पर्वतमहं जानामीत्याकारकानुव्यवसायो न प्रामाणिकानाम्। तत्र वह्न्यभाववत्पर्वतस्याप्रसिद्धत्वेन वह्न्यभावत्वावच्छिन्न-प्रकारतानिरूपितवह्न्यभाववत्पर्वतत्वावच्छिन्नविशेष्यतानिरूपितविशेष्यत्वाभावादतो वह्न्यभाववान् पर्वत इति तादृशविलक्षणविशिष्टविषयताया अभावान्न पर्वतादावतिव्याप्तिः।

वस्तुतस्तु प्रामाणिकानामनुव्यवसायप्रयोजिका व्यवसायनिरूपित-प्रमीयविषयतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिविषयता विशिष्टविषयतापदेन ग्राह्या। वृत्तित्वञ्च स्वावच्छेदकताप्रतियोगिक-पर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन। तथा च ह्रदो वह्निमान् जलादित्यत्र वह्न्य-भाववान् ह्रद इत्याकारकज्ञानीयविषयतानिरूपकतावच्छेदकतात्वावच्छिन्न-प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं वह्नि-वह्नित्व-समवाय-समवायत्व-अभाव-अभावत्व-स्वरूप-स्वरूपत्व-समवाय-समवायत्व-ह्रदत्वगतसमुदायत्वं जातं स्वावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन तादृशसमुदायत्व-वृत्तिविषयता वह्न्यभाववान् ह्रद इत्याकारकनिश्चये वर्तते। तत्र तादृशप्रतिबन्धकताया विद्यमानत्वेन लक्षणसमन्वयः।

भ्रमे तादृशविषयताया अभावान्न पक्षादावतिव्याप्तिः। तथा च यादृशसमुदायत्ववृत्तिविषयताशालिनिश्चयत्वव्यापिका प्रकृतानुमितित्वव्यापक-प्रतिबध्यतानिरूपितप्रतिबन्धकता तादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्ति-प्रतियोग्यवच्छेदकता तन्निरूपकताकविषयताश्रयत्वं लक्षणं पर्यवसितम्,

तादृशसमुदायत्ववृत्तित्वञ्च विषयतायां स्वनिरूपितनिरूपकतावच्छेदकताप्रतियोगिक-पर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेति।

यदि यद्विषयकत्वेनेत्यत्र स्वरूपसम्बन्धरूपावच्छेदकत्वं तृतीयार्थः, तदा ह्रदो वह्निमान् जलादित्यत्र वह्न्यभाववद् ह्रदरूपबाधैकदेशे ह्रदादावतिव्याप्तिः[१], तत्र वह्न्यभाववान् ह्रद इत्याकारकज्ञानीया या ह्रदत्वावच्छिन्नविषयता तादृशविषयतायां प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानिरूपितस्वरूपसम्बन्ध-रूपावच्छेदकत्वस्य सत्त्वेन तद्रूपवत्त्वस्य ह्रदे सत्त्वादतिव्याप्तिः। अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वार्थकत्वे च ह्रदत्वावच्छिन्नविषयताशालि-निश्चयस्य ह्रद इत्याकारकनिश्चयेऽपि सत्त्वेन तत्र तादृशप्रतिबन्धकताया अभावान्न तत्रातिव्याप्तिः।

तन्न रमणीयम्। ह्रदो वह्निमान् जलादित्यत्र जातिमान् वह्न्यभाववानित्याकारकज्ञानमादाय वह्न्यभाववद् ह्रदरूपबाधादावसम्भव-वारणायानतिरिक्तवृत्तित्वरूपावच्छेदकत्वार्थकल्पे यद्रूपावच्छिन्नविषयताशालिनिश्चये यद्रूपावच्छिन्नविषयत्वाव्यापकविषयताशून्यत्वस्यावश्यं[२] निवेशनीयत्वेनास्माभिरपि यद्रूपावच्छिन्नविषयतायां यद्रूपावच्छिन्नविषयत्वाव्यापकविषयताशून्यज्ञानीयत्वस्य निवेशः क्रियते। तथा च यद्रूपावच्छिन्नविषयताव्यापकविषयताशून्यज्ञानीया यद्रूपावच्छिन्नविषयता तादृशप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावति तद्रूपवत्त्वमिति लक्षणं फलितम्। एवञ्च ह्रदत्वावच्छिन्नविषयत्वाव्यापक-विषयताशून्यज्ञानीयायां ह्रद इत्याकारकज्ञानीयविषयतायां तादृशप्रति-बन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वविरहान्नैकदेशेऽतिव्याप्तिरिति चेत्, न। तथा सति संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावः संयोगेन वह्निमान् इत्यत्र संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभाववत् संयोगसम्बन्धावच्छिन्न-प्रतियोगिताकवह्न्यभावरूपबाधैकदेशे संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्य-भाववत्यतिव्याप्तिः। तत्र संयोगेन वह्न्यभाववान् संयोगेन वह्न्यभाव इत्याकारकज्ञानीया या संयोगेन वह्न्यभाववत्त्वावच्छिन्नविषयता, तादृशविषयतायां संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभाववत्त्वावच्छिन्नविषयत्वाव्यापकविषयताशून्य-ज्ञानीयत्वस्य सत्त्वेन तादृशप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्व-स्यापि सत्त्वेन तद्रूपवत्त्वस्य तादृशबाधैकदेशे सत्त्वादतिव्याप्तिः।

न च संयोगेन वह्न्यभाववान् संयोगेन वह्न्यभाव इत्याकारकज्ञाने संयोगेन वह्न्यभाववत्त्वावच्छिन्नविषयत्वाव्यापकीभूता संयोगेन वह्न्यभाववत् संयोगेन

---

१. सा.नि.गा., पृ. १६४; २. तत्रैव, पृ. १६६।

वह्न्यभावत्वावच्छिन्नविषयतासत्त्वेनाव्यापकीभूतविषयताशून्यज्ञानीयत्वस्य विरहात् कथमतिव्याप्तिरिति वाच्यम्। विशेष्यांशे संयोगेन वह्न्यभावत्वेन घटावगाहिसंयोगेन वह्न्यभाववान् संयोगेन वह्न्यभाव इत्याकारकज्ञानीयविषयतामादाय बाधैकदेशेऽतिव्याप्तिरिति चेत्, न, यद्रूपावच्छिन्नविषयतानिरूपित-यद्रूपावच्छिन्नविषयता यद्रूपावच्छिन्नविषयतासमानाधिकरणभेदप्रतियोगितावच्छेदिका तद्रूपावच्छिन्नविषयतानिरूपिततद्रूपावच्छिन्नविषयताशून्यज्ञानीयत्वं यद्रूपावच्छिन्न-विषयतायां निरूप्यते। तथा च संयोगेन वह्न्यभाववान् संयोगेन वह्न्यभाव इत्याकारकज्ञाने संयोगेन वह्न्यभाववत्त्वावच्छिन्नविषयताया अव्यापिका संयोगेन वह्न्यभाववत्त्वावच्छिन्नविषयतानिरूपितसंयोगेन वह्न्यभावत्वावच्छिन्नविषयतासत्त्वेन तच्छून्यज्ञानीयत्वविरहान्न बाधैकदेशीयविषयतामादाय दोषः। तथापि जलवज्जलं जलवज्जलकालीनवह्निमद् इत्यत्र जलवज्जलकालीनवह्न्यभाववज्जलवज्जल-रूपबाधैकदेशे जलवज्जलकालीनवह्न्यभाववज्जलवत्यतिव्याप्तिः। तत्र बाधज्ञानीया या जलवज्जलकालीनवह्न्यभाववज्जलवत्त्वावच्छिन्नविषयता सा यद्रूपावच्छिन्न-विषयतानिरूपितयद्रूपावच्छिन्नविषयता जाता। अथ च तादृशप्रतिबन्धकतानिरूपित-स्वरूपसम्बन्धरूपावच्छेदकत्वमप्यस्तीत्यतिव्याप्तिः।

न च तद्वारणार्थं यद्रूपावच्छिन्नानियोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताक-विषयतानिरूपितयद्रूपावच्छिन्नानियोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयता यद्रूपावच्छिन्नविषयत्वाव्यापिका तादृशविषयताशून्यज्ञानीयत्वं यद्रूपावच्छिन्न-विषयतायां निवेश्यते। तथा च जलवज्जलं जलवज्जलकालीनवह्न्य-भाववदित्याकारकज्ञाने जलवज्जलकालीनवह्न्यभाववज्जलवत्त्वावच्छिन्नविषयताया अव्यापिका जलवज्जलकालीनवह्न्यभावत्वगतसमुदायत्वावच्छिन्नानुयोगिताक-पर्याप्तिप्रतियोग्यवच्छेदकताकविषयतानिरूपितजलत्वजलजलत्वगतसमुदायत्वा-वच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयता वर्तते। तच्छून्य-ज्ञानीयत्वविरहान्न तामादाय जलवज्जलकालीनवह्न्यभाववज्जलवति नातिव्याप्तिः। एतेन स्वरूपं स्वरूपवत् स्वरूपवद् भेदत्ववदित्यत्र स्वरूपवत् स्वरूपवद् भेदभेदवत् स्वरूपरूपबाधैकदेशे स्वरूपवत् स्वरूपवद् भेदभेदवत्यतिव्याप्ति-वारणार्थमनतिरिक्तवृत्तित्वरूपावच्छेदकत्वं निवेशनीयमिति कैश्चिदुक्तं तदपि निरस्तम्। तादृशबाधैकदेशविषयतायां परिष्कृताऽव्याप्यविषयताशून्य-ज्ञानीयत्वविरहादिति चेत्, न। तथा सति रूपं द्रव्यभिन्नमित्यत्र रूपेऽतिव्याप्तिः। तत्र रूपं द्रव्यमित्याकारकस्वरूपतो द्रव्यत्वप्रकारकरूपत्वावच्छिन्नविशेष्यता-शालिज्ञानीयरूपत्वावच्छिन्नविषयतायां निरुक्ताव्यापकविषयताशून्यज्ञानीयत्वस्य तादृशप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वस्य च सत्त्वेनातिव्याप्तिः।

अतस्तृतीयाया अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वार्थकत्वं स्वीकर्तव्यम्। तथा च केवलरूपमित्याकारकज्ञाने तादृशनिश्चयत्वस्य सत्त्वेन तत्र तादृशप्रतिबन्धकताया अभावान्नातिव्याप्तिः।

न च यथार्थज्ञानीयविषयतायां तादृशप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वस्य निवेशः क्रियते, तेन भ्रमात्मकज्ञानीयविषयतामादाय न रूपेऽतिव्याप्तिरिति वाच्यम्। तथा सति प्रथमलक्षणेन सह पौनरुक्तिप्रसङ्गान्नेदं वक्तुं शक्यते। किञ्च इदं रूपभिन्नमित्यत्र स्वरूपतो रूपत्ववद् इदं रूपमित्याकारकबाधैकदेशे इदमि अतिव्याप्तिः। इदं रूपमित्याकारकज्ञानीयेदन्त्वावच्छिन्नविषयतायां यथार्थज्ञानीयत्वं तादृशपरिष्कृताव्यापकविषयताशून्यज्ञानीयत्वं तादृशप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वं चास्तीति तद्दोषवारणार्थमनतिरिक्तवृत्तित्वरूपावच्छेदकत्वं निवेशनीयम्।

ननु यद्रूपावच्छिन्नविषयतासामान्यं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत् तद्रूपवत्त्वम्। हेत्वाभासत्वमिति लक्षणेनैव पूर्वोक्तदोषाणां नावकाशः। तत्र तत्तद्दोषैकविषयतासामान्ये तादृशप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वविरहादलं गुरुभूतानतिरिक्तवृत्तित्वघटितेनेति चेत्, न। तथा सति ह्रदो वह्निमान् जलादित्यत्र वह्न्यभाववज्जलवत्यतिव्याप्तिः। वह्न्यभाववज्जलत्वावच्छिन्नविषयतासामान्ये जलवान् वह्न्यभाववान् जलवाँश्च ह्रद इत्याकारकज्ञाननिष्ठज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वस्य सत्त्वात्, समानाकारकज्ञानीयविषयत्वयोरैक्यात्।

अतो अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वं निवेशनीयम्। एवञ्च वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयताशालिनिश्चयत्वस्य जलवान् ह्रद इत्याकारकज्ञानासमानकालीनजलवान् वह्न्यभाववान् इत्याकारकनिश्चयेऽपि सत्त्वेन तत्र प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताया असत्त्वात्। वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयतायां तादृशप्रतिबन्धकतानतिरिक्तवृत्तित्वरूपावच्छेदकत्वविरहान्नातिव्याप्तिः।

न च यद्रूपावच्छिन्नविषयतासामान्ये ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशे सति तद्दोषवारणं सम्भवति[1]। तथा हि वह्न्यभाववज्जलवत्त्वावच्छिन्नविषयतासामान्ये ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायाः सत्त्वेन तदनवच्छिन्नप्रतिबन्धकतावच्छेदकत्वविरहान्नातिव्याप्तिः। किमनतिरिक्त-

१. सा.नि.गा., पृ. १६६।

वृत्तित्वनिवेशनेनेति वाच्यम्। तथापि ह्रदो वह्निमान् जलादित्यत्र जलव्यापकवह्न्य-भावसमानाधिकरणजलवद् ह्रदरूपसत्प्रतिपक्षेऽव्याप्तिः। तादृशह्रदत्वा-वच्छिन्नविषयतासामान्ये जलव्यापको वह्न्यभावः, जलवाँश्च ह्रद इत्याकारकज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्व-सत्त्वेन तदनवच्छेदकत्वविरहात्। यद्रूपावच्छिन्नविषयतासामान्ये तद्विशेषणं नैव दातुं शक्यते। तथा सति वह्न्यभाववज्जलवत्यतिव्याप्तिरस्त्येव। तद्वारणार्थ-मनतिरिक्तवृत्तित्वं निवेशनीयम्।

न च तादृशसत्प्रतिपक्षाव्याप्तिवारणार्थं यद्रूपावच्छिन्नविषयतासामान्ये ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वसत्प्रतिपक्षविषयताभिन्नत्व एतदु-भयाभावो निवेश्यते। तथा च सत्प्रतिपक्षविषयतासामान्ये ज्ञानवैशिष्ट्यावच्छिन्न-प्रतिबन्धकतावच्छेदकत्वसत्त्वेऽपि सत्प्रतिपक्षविषयताभिन्नत्वाभावादुभयाभावसत्त्वेन तत्र लक्षणसमन्वयः। एवं वह्न्यभाववज्जलवत्यपि नातिव्याप्तिः। तद्विषयतासामान्ये ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्व एव सत्प्रतिपक्षविषयताभिन्नत्वं चोभयमेव वर्तते। तथापि पर्वतो धूमवान् वह्न्यभावादित्यत्र धूमव्यापकवह्नि-समानाधिकरणधूमवत्पर्वतरूपस्वरूपासिद्धावव्याप्तिः, तादृशपर्वतत्वावच्छिन्न-विषयतासामान्ये धूमव्यापको वह्निः, धूमवाँश्च पर्वत इत्याकारकज्ञाननिष्ठ-ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्व एव सत्प्रतिपक्षविषयताभिन्नत्वोभयोः सत्त्वात्।

यदि तादृशदोषवारणार्थं यद्रूपावच्छिन्नविषयतासामान्ये ज्ञानवैशिष्ट्या-वच्छिन्नप्रतिबन्धकतावच्छेदकत्वसत्प्रतिपक्षविषयताभिन्नत्वस्वरूपासिद्धिविषयताभिन्नत्वैतत् त्रितयाभावो निवेश्यते, तदा वह्न्यभाववत्पर्वतो वह्न्यभाववत्पर्वतकालीनधूमवान् वह्न्यभाववत्पर्वतकालीनजलादित्यत्र धूमव्यापकवह्निसमानाधिकरण-धूमवत्पर्वतरूपाश्रयाप्रसिद्धिसाध्याप्रसिद्धिहेत्वप्रसिद्धावव्याप्तिः। तद्रूपावच्छिन्न-विषयतासामान्ये ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वसत्प्रतिपक्ष-विषयताभिन्नत्व एव स्वरूपासिद्धिविषयताभिन्नत्वैतत् त्रितयस्यैव सत्त्वादिति चेत्, मैवम्। तादृशदोषाणां वारणार्थं यद्रूपावच्छिन्नविषयतासामान्ये ज्ञानवैशिष्ट्यावच्छिन्न-प्रतिबन्धकतावच्छेदकत्वप्रकृतसमूहालम्बनात्मकानुमितित्वव्यापकप्रतिबध्यतानिरूपित-प्रतिबन्धकतावच्छेदकविषयत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयताभिन्नत्वैतदु-भयाभावस्तद्रूपवत्त्वमिति लक्षणं क्रियते। तथा च तादृशपक्षाप्रसिद्ध्यादिविषयतायां ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वस्य सत्त्वेऽपि तादृशजनकता-वच्छेदकविषयताभिन्नत्वस्य विरहान्नाव्याप्तिः।

न चैवमपि ह्रदो वह्निमान् जलादित्यत्र घटेऽतिव्याप्तिः, तादृशविषयतासामान्ये ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वविरहादुभयाभावः समागत इति वाच्यम्, ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वस्थाने ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकत्वस्य निवेशः क्रियते। तथा च यद्रूपावच्छिन्नविषयतासामान्ये ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकत्वप्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयताभिन्नत्वैतदुभयाभावस्तद्रूपवत्त्वं लक्षणं पर्यवसितम्। एवञ्च घटत्वावच्छिन्नविषयतासामान्ये ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकत्वतादृशजनकतावच्छेदकविषयताभिन्नत्वैतदुभय एव सत्त्वान्नातिव्याप्तिः।

नन्वेवमपि गगनाभाववदभाववत्कालीनघटो गगनवान् इत्यत्र गगनाभाववत्तादृशघटरूपबाधेऽव्याप्तिः। तादृशघटत्वावच्छिन्नविषयतासामान्ये ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वस्यैव सत्त्वेन ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकत्वघटितोभयोः सत्त्वात्।

न च तादृशबाधज्ञाने ज्ञानवैशिष्ट्यानवच्छिन्नैव प्रतिबन्धकता स्वीक्रियतां तदा ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकत्वविरहान्नाव्याप्तिरिति वाच्यम्, अभाववान् गगनाभाववान् अभाववाँश्च तादृशघटः, जलवान् गगनाभाववान् जलवाँश्च तादृशघट इत्यादिनानाविधज्ञानानां पृथक्प्रतिबन्धकत्वकल्पनापेक्षया निश्चयविशिष्टनिश्चयत्वेनैवैकप्रतिबन्धकताकल्पने लाघवम्। तथा च तादृशघटो गगनवानित्याकारकबुद्धिं प्रति निश्चयविशिष्टनिश्चयः प्रतिबन्धकः, निश्चयवैशिष्ट्यञ्च निश्चये स्वसामानाधिकरण्यस्वीयगगनाभावत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकताविशिष्टप्रकारतानिरूपिततादृशघटत्वावच्छिन्नविशेष्यताकत्वैतदुभयसम्बन्धेन। तादृशावच्छेदकतावैशिष्ट्यञ्च प्रकारतायां स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वोभयसम्बन्धेन। तादृशवृत्तित्वञ्च प्रकारतायां स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन। तथा च गगनाभाववत्तादृशघटत्वावच्छिन्नविषयतायां ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकत्वविरहप्रयुक्तोभयाभावसत्त्वान्नाव्याप्तिः।

न चाभाववति 'गगनाभावोऽव्याप्यवृत्तिः' इत्याकारकाव्याप्यवृत्तित्वज्ञानदशायां तादृशबाधज्ञाने ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकता नास्ति; किन्तु प्रकृतानुमित्यनुत्पादान्यथानुपपत्त्या तत्र ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकता अवश्यं स्वीकरणीया। तथा च तत्र न दोष इति वाच्यम्। तादृशाव्याप्यवृत्तित्वज्ञानकाले यथा ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकता तादृशबाधज्ञाने नास्ति, तथैव

तदनवच्छिन्नप्रतिबन्धकताऽपि नास्त्येव। अभावावच्छेदेन गगनाभावे अव्याप्यवृत्तित्वज्ञाने सति तादृशघटस्याप्यभाववत्तया तत्रापि गगनाभावस्य अव्याप्यवृत्तित्वग्रहः सम्भवति। एवं तदानीं वैशिष्ट्यज्ञानत्वेनापि प्रतिबन्धकता नास्ति। तथा चाव्याप्तिरस्त्येव। यद्रूपावच्छिन्नविषयतासामान्ये प्रकृतानुमितित्व-व्यापकप्रतिबध्यतानिरूपितावच्छेदकविषयत्वावच्छिन्नजनकतानिरूपितजन्यतावच्छेदक-विषयताभिन्नत्वतादृशजनकतावच्छेदकविषयताभिन्नत्वैतदुभयाभावस्तद्रूपवत्त्वमिति। एवं सति गगनाभाववत्तादृशघटत्वावच्छिन्नविषयतायां तादृशजन्यता-वच्छेदकविषयताभिन्नत्वविरहेणोभयाभावसत्त्वाल्लक्षणसमन्वयः।

नन्वनतरिक्तवृत्तित्वनिवेशापेक्षयास्मिन् लक्षणे किं लाघवमिति चेत्, अत्रोच्यते—अनतिरिक्तवृत्तित्वकल्पे यद्रूपावच्छिन्नविषयताशालिनिश्चये अनाहार्यत्वस्याधिकस्य प्रवेशः। एवं ह्रदो वह्निमान् जलादित्यत्र वह्न्यभाववज्जलवद्वृत्तिजलवद् ह्रदेऽतिव्याप्तिवारणार्थं गुरुभूतस्य विशिष्टद्वयाघटिततत्वस्य सत्प्रतिपक्षघटकदलद्वयविषयताभिन्नत्वादिघटितस्य प्रवेश इति तत्पक्षे महद् गौरवम्। अत्र तु तदप्रवेशप्रयुक्तं लाघवमस्तीति चेत्, अत्र ब्रूमः—ह्रदो वह्निमान् जलादित्यादौ वह्न्यभाववज्जलवद्वृत्तिजलवद्ह्रदेऽतिव्याप्तिः। वह्न्यभाववज्जलवद्वृत्तिजलवद्ह्रदत्वावच्छिन्नविषयतासामान्ये वह्न्यभाववज्जल-वद्वृत्तिजलव्यापको वह्न्यभावस्तादृशजलवाँश्च ह्रद इत्याकारकज्ञाननिष्ठायाः प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयत्वावच्छिन्न-जनकता तादृशजनकतानिरूपिता या जन्यता तादृशजन्यतावच्छेदकत्वस्यैव तत्र सत्त्वेनोभयाभावसत्त्वाद् दोषः।

अत एवैतादृशलक्षणं नैव कर्तुं शक्यते, किन्तु तादृशदोषवारणार्थं यद्रूपावच्छिन्नविषयताशालिनिश्चये तादृशविशिष्टद्वयाघटितत्वं निवेशनीयमेव। एवं पर्वतो वह्निमान् धूमादित्यत्र पाषाणमयत्ववत् पर्वतेऽतिव्याप्तिवारणार्थ-मनतिरिक्तवृत्तिरूपावच्छेदकत्वमपि निवेशनीयम्। तथा च नातिव्याप्तिः। इत्यलमतिविस्तरेण।

ह्रदो वह्निमान् जलादित्यत्र जातिमान् वह्न्यभाववान् इत्याकारक-ज्ञानमादायासम्भववारणाय यद्रूपावच्छिन्नविषयताशालिनिश्चये यद्रूपावच्छिन्न-विषयत्वाव्यापकविषयताशून्यत्वस्य निवेश आवश्यकः[1]; परन्तु यद्रूपावच्छिन्नविषयताशालिनिश्चये स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकता-वच्छेदकयद्रूपावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतावच्छेदकयद्रूपावच्छिन्नविषयत्वा-

---

१. सा.नि.गा., पृ. १६६।

व्यापकविषयताशून्यत्वनिवेशेनासम्भवस्य वारणसम्भवे तादृशाव्यापकविषयताशून्यत्वस्य प्रवेशो ग्रन्थकारेण किमर्थं कृतः।

ननु ग्रन्थकारापेक्षया भवतां मते किं लाघवमिति चेत्, न, अस्माकं मते यद्रूपावच्छिन्नविषयताशालिनिश्चये विशिष्टद्वयाघटितत्वं[1]विशिष्टान्तराघटितत्वविशेषणयोर[2]निवेशप्रयुक्तलाघवमस्तीत्याशङ्का अव्यापकविषयताशून्यत्वनिवेशस्योपरि केनचित् कृता। सा न सङ्गच्छते। ह्रदो वह्निमान् जलादित्यत्र वह्निव्यापकीभूताभावप्रतियोगिरूपासाधारण्येऽव्याप्तिः। तत्र स्वपदेन वह्निव्यापकीभूताभावप्रतियोगित्वं ग्राह्यम्। तदवच्छिन्नविषयत्वावच्छिन्नप्रकृतानुमितिप्रतिबन्धकता नैव सम्भवति, केवलतादृशजलत्वांवच्छिन्नविषयताशालिनिश्चये प्रतिबन्धकताविरहात्।

न च स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकता इत्यस्य स्वावच्छिन्नविषयतानिष्ठस्वरूपसम्बन्धावच्छिन्नावच्छेदकताकप्रतिबन्धकता इत्यर्थः। तथा च वह्निव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्नविषयतानिष्ठस्वरूपसम्बन्धरूपावच्छेदकताकत्वं प्रतिबन्धकतायामस्तीति नाव्याप्तिरिति वाच्यम्। तथा सति गगनाभाववदभाववत्कालीनघटो गगनवान् इत्यत्र गगनाभाववत्तादृशघटरूपबाधेऽव्याप्तिः। तत्र स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकता अभाववान् गगनाभाववान् अभाववाँश्च तादृशघट इत्याकारकज्ञानवैशिष्ट्यावच्छिन्ना तादृशप्रतिबन्धकतावच्छेदकीभूताविषयता अभाववत्तादृशघटत्वावच्छिन्नविषयता तदव्यापिका विषयता गगनाभाववत्तादृशघटत्वावच्छिन्नविषयता तच्छून्यत्वस्य तादृशबाधनिश्चयेऽभावात्।

न च तद्दोषवारणार्थं स्वावच्छिन्नविषयकतावच्छिन्नप्रतिबन्धकतावच्छेदकविषयतायां यद्रूपावच्छिन्नत्वं निवेश्यते, तथा च अभाववत्तादृशघटत्वावच्छिन्नविषयतायां तादृशप्रतिबन्धकतावच्छेदकत्वस्य विद्यमानत्वेऽपि गगनाभाववत्तादृशघटत्वावच्छिन्नत्वस्य विरहात्। सा विषयता नैव धर्तुं शक्यते; अपि तु गगनाभाववत्तादृशघटत्वावच्छिन्नविषयता ग्राह्या। तदव्यापकीभूताविषयता पटत्वाद्यवच्छिन्नविषयता तच्छून्यत्वस्य तादृशबाधनिश्चये सत्त्वाल्लक्षणसमन्वय इति वाच्यम्, एवं सति विशिष्टद्वयाघटितत्वं विशिष्टान्तराघटितत्वं यद्रूपावच्छिन्नविषयताशालिनिश्चये निवेशनीयमेव। तथा हि मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयत्वावच्छिन्नप्रतिबन्धकतावच्छेदकविषयतापदेन शुद्धव्यभिचारत्वावच्छिन्नविषयता नैव धर्तुं शक्यते, तत्र विशिष्टव्यभिचारत्वावच्छिन्नस्याभावात्; किन्तु मेयत्वविशिष्टव्यभिचारत्वा-

---

१. सा.नि.गा., पृ. १६७; २. सा.नि.दी., पृ. ९२।

वच्छिन्नविषयता तदव्यापकविषयताशून्यत्वस्य मेयत्वविशिष्टव्यभिचारत्वावच्छिन्न-विषयताशालिनिश्चये सत्त्वादतिव्याप्तिः। अतो विशिष्टान्तराघटितत्वमवश्यं निवेशनीयमेव। एवं ह्रदो वह्निमान् जलादित्यत्र वह्न्यभाववज्जलवद्वृत्तिजलवद्ह्रदे दोषः। तत्र वह्न्यभाववज्जलवद्वृत्तिजलवद्ह्रदत्वावच्छिन्नविषयतात्वावच्छिन्न-प्रतिबन्धकतावच्छेदकविषयतापदेन वह्न्यभाववज्जलवत्कालीनजलवद्-ह्रदत्वावच्छिन्नविषयता नैव धर्तुं शक्यते, तत्र तादृशह्रदत्वावच्छिन्नत्वस्य विरहात्; किन्तु वह्न्यभाववज्जलवद्वृत्तिजलवद्ह्रदत्वावच्छिन्नविषयता ग्राह्या। तदव्यापकविषयताशून्यत्वस्य तादृशह्रदत्वावच्छिन्नविषयताशालिनिश्चये सत्त्वादतिव्याप्तिवारणार्थं विशिष्टद्वयाघटितत्वमपि निवेशनीयमेवेति भवन्मते महद् गौरवम्।

प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वाधिकरणवृत्तिभेदप्रति-योगितावच्छेदकप्रतिबन्धकताशून्ययद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापिका प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपवत्त्वमिति लघुलक्षणेनैव सामञ्जस्ये निरुक्तविशेषणत्रयमपि (विशिष्टद्वयाघटितत्वविशिष्टान्तराघटितत्वा-व्यापकविषयताशून्यत्वमिति विशेषणत्रयम्) व्यर्थम्[1]। तथा हि ह्रदो वह्निमानित्यत्र वह्न्यभाववज्जलवद्वृत्तिजलवद्ह्रदे नातिव्याप्तिः। प्रकृतानुमितिः 'ह्रदो वह्निमान्' इति, तद्व्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वाधिकरणनिश्चयो वह्न्यभाव-वज्जलवत्त्वकालीनजलवान् ह्रद इति निश्चयः, तस्यापि जलवान् वह्न्यभाववान् जलवाँश्च ह्रद इति निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकत्वात् तद्वृत्तिभेदः, वह्न्यभाववज्जलवद्वृत्तित्वाभाववज्जलमित्याकारकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपित-प्रतिबन्धकतावान्नेत्याकारकप्रतीतिसिद्धभेदः (वह्न्यभाववज्जलवत्कालीनजलवान् ह्रद इति बुद्धेर्वह्न्यभाववज्जलवद्वृत्तित्वाभाववज्जलमिति बुद्धेश्च परस्परमविरोधात्)। तादृशभेदप्रतियोगितावच्छेदकप्रतिबन्धकताशून्यत्वस्य वह्न्यभाववज्जल-वद्वृत्तिजलवान् ह्रद इति निश्चयेऽसत्त्वाद् दोषाभावेन विशिष्टद्वयाघटितत्वं नावश्यकम्।

एवं मेयत्वविशिष्टव्यभिचारेऽपि नातिव्याप्तिः। 'प्रकृतानुमितित्व-व्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वाधिकरणनिश्चयो व्यभिचारनिश्चय-स्तद्वृत्तिभेदो मेयत्वाभाववान् धूमाभावाधिकरणनिरूपितवृत्तित्ववान् वह्निः' इत्याकारकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावान् नेत्याकारक-प्रतीतिसिद्धभेदस्तत्प्रतियोगितावच्छेदकप्रतिबन्धकताशून्यत्वस्य मेयत्वविशिष्ट-

१. सा.नि. तत्त्वालोकः, पृ. ९३।

व्यभिचारनिश्चयेऽभावाद् विशिष्टान्तराघटितत्वं नावश्यकम्। तथैव अव्यापकविषयताशून्यत्वमपि न देयम्। 'तादृशप्रतिबन्धकत्वाधिकरणनिश्चयो वह्न्यभाववान् ह्रद इत्याकारकनिश्चयस्तद्वृत्तिभेदो जात्यभाववान् वह्न्यभाववान्' इत्याकारकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावान्नेति भेदः, तत्प्रतियोगितावच्छेदकप्रतिबन्धकताशून्यत्वस्य जातिमान् वह्न्यभाववानिति निश्चयेऽसत्त्वान्नासम्भवः। तथा च किमर्थं गुरुभूतलक्षणाङ्गीकारः।

तत्रेत्थं समाधानम्—एवं लक्षणे कृतेऽसम्भवः। वह्न्यभाववद्-ह्रदत्वावच्छिन्नविषयताशालिनिश्चये तादृशप्रतिबन्धकत्वाधिकरणवृत्तिभेद-प्रतियोगितावच्छेदकप्रतिबन्धकताशून्यत्वस्यासत्त्वात्। तथा हि प्रतिबन्धकत्वा-धिकरणनिश्चयो व्यभिचारनिश्चयः, तद्वृत्तिभेदो वह्निमान् ह्रद इत्याकारकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावान्नेति भेद-स्तत्प्रतियोगितावच्छेदकप्रतिबन्धकताशून्यत्वं बाधनिश्चये नास्ति। एवमेव चालनीन्यायेन पृथक् पृथक् प्रतिबन्धकतामादाय दोषोऽवसेयः। सिद्धान्ते तु न तथा विशिष्टद्वयाघटितत्वविशिष्टान्तराघटितत्वाव्यापकविषयताशून्यत्वानां त्रयाणामपि विशेषणानां तादृशनिश्चयेषु सत्त्वात्।

ननु तद्दोषवारणाय विशेष्यदलघटितप्रतिबन्धकताविशेषणदल-प्रतिबन्धकतयोरैक्यं क्रियते। तथा च प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपिता यत्प्रतिबन्धकता यद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापिका तत्प्रतिबन्धकताधि-करणवृत्तिभेदप्रतियोगितावच्छेदकप्रतिबन्धकताशून्यत्वं यद्रूपावच्छिन्नविषयता-शालिनिश्चये तद्रूपवत्त्वमिति लक्षणं सम्पद्यते। एवञ्च विशेष्यदलघटित-प्रतिबन्धकतापदेन गगनवान् घट इति बुद्धित्वावच्छिन्नप्रतिबध्यता-निरूपितप्रतिबन्धकता, तदधिकरणनिश्चयो न गगनाभाववान् पट इति निश्चयः, अपि तु गगनाभाववान् घट इति निश्चय एवेति नोक्तरीत्या दोषः।

यत्तदोरननुगतत्वादनुगमः क्रियते। तथा हि—प्रतिबन्धकताविशिष्ट-निश्चयनिष्ठावच्छेदकताविशिष्टरूपवत्त्वम्। प्रतिबन्धकतावैशिष्ट्यञ्च निश्चय-निष्ठावच्छेदकतायां स्ववृत्तिस्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकप्रतिबन्धकता-शून्ययद्रूपावच्छिन्नविषयताशालिनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावीयावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठावच्छेदकता-निरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठा-वच्छेदकतानिरूपितत्वस्वनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपित-वृत्तित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठत्व-निष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतिबन्धकत्वनिष्ठा-

वच्छेदकतानिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितत्वैतदुभयसम्बन्धेन। निश्चयनिष्ठावच्छेदकतावैशिष्ट्यञ्च स्वनिरूपितविषयतानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धानवच्छिन्नावच्छेदकतावत्त्वसम्बन्धेन।

ननु तथापि गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र गगनाभाववद् गगनाभाववदभाववत्कालीनघटरूपबाधेऽव्याप्तिः। प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वाधिकरणनिश्चयाभाववान् तादृशघट इति निश्चयः, तस्याप्यभाववान् गगनाभाववान् अभाववाँश्च तादृशघट इति ज्ञानविशिष्टज्ञानत्वेन प्रकृतानुमितिप्रतिबन्धकत्वात्, तद्वृत्तिभेदो गगनाभावस्तादृशघटावृत्तीति बुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावान् नेति भेदः, गगनाभावस्तादृशघटावृत्तीति बुद्धिं प्रत्यभाववान् तादृशघट इति बुद्धेरविरोधत्वात्, तथा च तादृशभेदप्रतियोगितावच्छेदकप्रतिबन्धकताशून्यत्वस्य गगनाभाववदभाववत्कालीनघटो गगनाभाववानिति निश्चयेऽसत्त्वात्।

ननु सिद्धान्तेऽप्ययं दोषोऽस्त्येव, गगनाभाववदभावत्वावच्छिन्नविषयताशालिनिश्चयविशिष्टाभाववत्तादृशघटत्वावच्छिन्नविषयताशालिनिश्चयत्वं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिरस्ति, तादृशविशिष्टद्वयविषयताशून्यत्वस्य गगनाभाववान् तादृशघट इति निश्चयेऽसत्त्वात्। सिद्धान्तिना निरुक्तदोषवारणाय विशिष्टद्वयविषयतायां प्रकृतानुमितित्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतानवच्छेदकत्वं निवेशनीयं भवति। तथा चोक्तविशिष्टद्वयविषयतायां प्रकृतानुमितित्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वमेव वर्तते। बाधबुद्धावनुमितिप्रतिबन्धकत्वस्यैवानुमितिप्रतिबध्यत्वस्यापि सत्त्वाद् विशिष्टद्वयविषयतापदेनोक्तविशिष्टद्वयविषयताया अधर्तव्यतया नोक्तदोषः। तथा सत्यस्मिन् कल्पेऽपि भेदप्रतियोगितावच्छेदकप्रतिबन्धकतायां प्रकृतानुमितित्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकविषयत्वानवच्छिन्नत्वं निवेष्यते। अथापि लाघवमेव।

न चैवमपि वह्न्यभाववज्जलवद्वृत्तिजलाभाववद्वह्निमत्कालीनह्रदो वह्निमान् इत्यत्र वह्न्यभाववज्जलवद्वृत्तिजलवत्तादृशह्रदेऽतिव्याप्तिः। तथा हि प्रतिबन्धकत्वाधिकरणनिश्चयो वह्न्यभाववज्जलवत्कालीनजलवान् तादृशह्रद इति निश्चयस्तद्वृत्तिभेदो वह्न्यभाववज्जलवद्वृत्तिजलाभाववद्ह्रदत्वावच्छिन्नविषयताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावान् नेति भेदः, तादृशभेदप्रतियोगितावच्छेदकप्रतिबन्धकतायां प्रकृतानुमितित्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकविषयत्वानवच्छिन्नत्वं नास्ति, वह्न्यभाववज्जलवद्वृत्तिजलवान् तादृशह्रद इत्याकारकबुद्धिं प्रति वह्निमान् वह्न्यभाववज्जलवद्वृत्तिजलाभाववान्

वह्निमाँश्च तादृशह्रद इति ज्ञानविशिष्टज्ञानत्वेन प्रकृतानुमितेरपि प्रतिबन्धकत्वात्। तथा च घटाभाववद् भूतलमित्यादिज्ञाननिष्ठां प्रतिबन्धकतामादाय तच्छून्यत्वस्य वह्न्यभाववज्जलवद्वृत्तिजलवान् तादृशह्रद इति निश्चये सत्त्वादतिव्याप्तिः। तद्वारणाय च विशिष्टद्वयाघटितत्वमावश्यकमिति सिद्धान्तसङ्गतिरिति वाच्यम्, प्रकृतानुमितित्वव्यापकप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य निवेषेण तद्वारणसम्भवात्। तादृशप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वाभावादिति।

ननु तथापि कपिसंयोगाभावाभाववत्कालीनत्वे सति कपिसंयोगाभाववदभाववत्कालीनगुणः कपिसंयोगवान् इत्यत्र कपिसंयोगाभाववत्तादृशगुणरूपबाधेऽव्याप्तिः। तथा हि प्रतिबन्धकत्वाधिकरणनिश्चयोऽभाववान् तादृशगुण इति निश्चयः, तद्वृत्तिभेदः कपिसंयोगाभावस्तादृशगुणवृत्तीति बुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावान्नेति भेदः, तादृशभेदप्रतियोगितावच्छेदकप्रतिबन्धकतायां यद्यपि प्रकृतानुमितित्वव्यापकप्रतिबन्धतानिरूपितप्रतिबध्यतावच्छेदकविषयत्वावच्छिन्नत्वमेवास्ति। तथापि तादृश(प्रकृतानुमितिनिष्ठ)-प्रतिबन्धकताया ज्ञानवैशिष्ट्यावच्छिन्नत्वात्। ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकविषयतानवच्छिन्नत्वमागतमिति तच्छून्यत्वस्य तादृशबाधनिश्चयेऽभावादव्याप्तिः। अतः प्रकृतानुमितित्वव्यापकप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वं नैव निवेशितुं शक्यम्, अनिवेशे तूक्तरीत्या वह्न्यभाववज्जलवद्वृत्तिजलवत्तादृशह्रदेऽतिव्याप्तिरिति।



# ध्वनिकारात्प्रागध्वनिध्वननम्


## प्रो० रमाशङ्करमिश्रः

आचार्योऽध्यक्षश्च, साहित्यविभागस्य
सङ्कायाध्यक्षश्च, साहित्य-संस्कृतिसङ्कायस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणस्याम्




**पूर्वालोकः**

ध्वनिकृताऽऽनन्दवर्धनेनैव सर्वप्रथमं ध्वनिसिद्धान्ते प्राणाः प्रतिष्ठापिता इति तु वर्णितचरं बुधैः। ततः पूर्वस्मिन् कालचक्रेऽपि रसालङ्काररीत्यादिकाव्यशास्त्रीयसिद्धान्ता अवतारिता विचक्षणैः। ध्वनेरस्फुटप्रकाशनस्यानुपस्थितेश्च चर्चा ध्वन्यालोकीयप्रथमध्वनिकारिकाया वृत्तिभागे कृता विद्यते। काव्यमर्मज्ञैर्हि काव्यात्मभूततत्त्वस्य 'ध्वनिरिति' समाख्या प्रख्यापिता, परम्परया च पौनःपुन्येन प्रकाशितं ध्वनितत्त्वं तत्र तत्र[१]। उपरिगततात्पर्यप्रकटनाय ध्वनिकृता भूतकालक्रिया एव प्रयुक्ता, इत्यनेन सूच्यते यद् ध्वनिकृत्पूर्वकालेऽपि काव्यशास्त्रिणां हृदयेषु काव्यार्थस्य चमत्कारसारविशेषो विद्योतमान आसीत्, यो हि ध्वनिकृता ध्वनिनाम्ना व्यपदेशं प्रापितः; किन्तु ध्वनिपूर्वजैः प्राचीनलक्षणकारैर्न ध्वनिः सिद्धान्ततत्त्वतया ज्ञातो ज्ञापितः ख्यापित उद्घाटितो वा क्वचिदित्यपि प्रस्फुटशब्दैर्ध्वन्यालोके सङ्केतितम्[२]; किन्त्वासन् रुद्रटोद्भटवामनभामहादयः केचन काव्यार्थविदो यैर्ध्वनिप्रख्यं काव्यतत्त्वं मनाग् विदितमासीत्, परत्र तैस्तद्व्याख्यां विधातुं सामर्थ्यमधारि[३]। अतो ध्वनिसङ्केतकानां विदुषां मतं पुरःप्रकाशयिष्यते।

---

१. (अ) बुधैः कांव्यतत्त्वविद्भिः काव्यस्यात्मा ध्वनिरिति संज्ञितः, परम्परया यः समाम्नातपूर्वः=सम्यग् आ समन्ताद् म्नातः प्रकटितः। (ध्व., पृ. ९, ज.)

(ब) सूरिभिः काव्यतत्त्वार्थदर्शिभि.......ध्वनिरित्युक्तः। (ध्व., पृ. १४१-४२)

२. ध्व., पृ. ३७, १०५, ४९२।

३. (अ) 'ध्वनिमार्गो मनाक् स्पृष्टोऽपि न लक्षित इति'। (ध्व., पृ. ३४)

(ब) ध्व. ३.४७।

## ध्वनिकारप्राक्तनध्वनिविवृतिः

### १. आचार्य-भरतः

काव्यसमीक्षाक्षेत्रे भरतमुनिरेव नाट्यशास्त्रे षष्ठसप्तमाध्याययो रसनिष्पत्तिं समुपदिशन् विवृण्वंश्च रसपद्धतेः प्रथमाचार्यत्वमापेदे[१]। यद्यपि आचार्य-नन्दिकेश्वरो रससिद्धान्तस्य प्रथमो व्याख्यातेति यायावरीयः प्राह[२], नन्दिकेश्वरकृतेऽभिनय-दर्पणेऽपि स्थूलरूपेण रसचित्रणं कृतम्[३], तथापि सुविशदं रसव्याख्यानं तु भरतेनैव कृतमिति न तिरोहितम्। नाट्यशास्त्रे तु महात्मनो द्रुहिणस्यैव सर्वप्रथम-रसाचार्यत्वमङ्गीकृतम्[४]। अयं द्रुहिणो ब्रह्मा[५], तदन्यो वा कश्चनेत्यत्र विप्रतिपत्तिः। उपलब्धग्रन्थेषु नाट्यशास्त्र एव रसविवरणवैशद्यं लभ्यते। यद्यपि नाट्य-प्रयोगमुपक्रम्यैव तत्र रसविवेचना कृता, न श्रव्यकाव्यमाधृत्य, तथापि रसतत्त्वं तु दृश्यश्रव्यकाव्ययोस्तुल्यगत्या प्रसरतितराम्। अत एव शृङ्गारतिलकादिकर्तृभी रुद्रभट्टादिभिरसंशयं काव्येऽपि नव रसाः प्रतिष्ठापिताः[६]। अभिनवगुप्तपादेनापि नाट्यशास्त्रव्याख्यायामभिनवभारत्यां काव्येऽपि रसानां महत्यावश्यकता प्रधानता च विवेचिते, स्वनिरुक्तिप्रामाण्ये तेन ध्वनिकारादीनां समुल्लेखोऽपि कृतः[७]। अग्रे च तत्रसङ्ग एव भगवान् भरत एकोनपञ्चाशद्भावान् रसाभिव्यञ्जनकारणीभूतान् निदर्श्य व्यङ्ग्यार्थोपयुक्तशब्दानां स्वयमेव ध्वननं कुरुते—

**'अत्राह, यदन्योन्यार्थसंश्रितैर्विभावानुभावव्यञ्जितैरेकोनपञ्चाशद्भावैः सामान्यगुणयोगेनाभिनिष्पद्यन्ते रसाः'[८]।**

एतत्पङ्क्तिस्थाभ्यां रेखाङ्कितपदाभ्यां ध्रुवमेव ध्वनेर्व्यञ्जनावृत्तिः सङ्केतितेव दृश्यते[९]। भरतस्य नाट्यशास्त्रे हि अनेकत्र स्थलेषु 'व्यञ्जक'-पदस्य प्रयोगः

---

१. 'भरत रससम्प्रदाय के प्रथम तथा सर्वश्रेष्ठ आचार्य हैं'।
(संस्कृत साहित्य का इतिहास : बलदेवोपाध्याय, पृ. ६६६)

२. 'रसाधिकरणिकं नन्दिकेश्वरः'। (काव्यमीमांसायाम् : राजशेखरः, पृ. २)

३. अभिनयदर्पणे, नन्दिकेश्वरस्य, पृ. ८३, १२५। (कलकत्ता, १९५७)

४. एते ह्यष्टौ रसाः प्रोक्ता द्रुहिणेन महात्मना'। (ना.शा. ६.१६)

५. 'द्रुहिणो विरञ्चिः कमलासन' इत्यमरः १.१७।

६. 'नव काव्ये रसाः स्मृताः'। (शृङ्गारतिलके, १.९)

७. काव्यस्यार्था रसाः....स्वशब्दानभिधेयत्वं हि रसानां ध्वनिकारादिभिर्दर्शितम्। (अभिनवभारत्याम्, ना.शा., पृ. ३४३, प्रथमभागः, बड़ौदासंस्करणे, १९५६)

८. ना.शा. ७.७, परवर्ती गद्यभागः।

९. Here we may note that underlined expressions anticipate the function of Dhwani Theory. (R.G. Bhandarkar, Comm. Volume-1.

परिलक्ष्यते; किन्तु नायं प्रयोगो व्यञ्जनावृत्तिपरकः। अतश्च यद्यपि नेदं निस्सन्देहं वक्तुं शक्यते यद् भरत आसीद् व्यञ्जनावृत्तिज्ञाता, किन्तु परवर्तिभिस्तत्प्रयुक्तैरेव 'व्यञ्जित-व्यञ्जक'प्रभृतिपदैर्व्यञ्जनावृत्तेर्नामकरणं कृतं स्यादिति तु सम्भाव्यत एव[१]। तथा हि, अङ्गाभिनयनेपथ्यादिभिरपि 'वाक्यार्थस्य व्यञ्जनां' स्वीकुर्वाणः स विविधभावाभिनयकौशलेन स्थायिभावानां 'व्यञ्जनां' प्रस्फुटपदैर्वर्णयन् पदे पदे दृश्यते तत्रभवान् भरतमुनिः[२]। ध्रुवमेवेदृशानि पदानि ध्वनिसाधनोपयोगीनि सम्मतानि ध्वनिवादिभिः। एवमेव **भरतेन** व्यञ्जितव्यञ्जनयोः स्थाने भावितभावनयोः प्रयोगोऽपि कृतो यत्र तत्र[३]।

## २. आचार्य- भामहः

अभिधावादिन आचार्यभामहस्य काव्यालङ्कारे न व्यञ्जनाविरोधो दृश्यते, प्रत्युत केचन ध्वनिसङ्केता विलोक्यन्ते। व्यञ्जनावृत्तिव्यङ्ग्यार्थप्रतिपादिकानां पदावलीनां तत्र दर्शनं सुतरां[४] भवति, यथा प्रतिवस्तूपमालक्षणे 'गुणसाम्य-प्रतीतितः', अर्थान्तरन्यासे 'अयमर्थान्तरन्यासः सुतरां व्यज्यते'[५], समासोक्तिलक्षणे 'यत्रोक्ते गम्यतेऽन्योऽर्थः'[६], वक्रोक्तौ च 'अन्योऽर्थो विभाव्यते'[७] इत्यादिविध-पदावलीभिर्नूनमेव वाच्येतरस्य व्यङ्ग्यार्थस्य सङ्केत इव नामशून्यो लक्ष्यत इति विवेचका निगदन्ति[८]। अभिनवगुप्तोऽपि 'विभाव्यत' इति भामहोक्तपदस्य 'रसमयीक्रियत' इति व्यङ्ग्यार्थपरं तात्पर्यमूरीकरोति[९]। भामहो हि वक्रैः शब्दैरर्थैश्च युक्तां वाक्यावलीमेव अलङ्कारप्रयोजिकां स्वीकरोति, न तु वक्रशब्दार्थप्रयोग-हीनाम्[१०]। समानवस्तुन्यासैर्यत्र यथेवादिशब्दप्रयोगमन्तरेणापि गुण-साम्यप्रतीतिर्जायते, तत्र स प्रतिवस्तूपमालङ्कारमूरीकुरुते[११]। एवमेव ध्वनिकारोऽपि

---

१. 'ध्वनिसिद्धान्त और व्यञ्जनावृत्ति विवेचन, पृ. ७। (डॉ. गयाप्रसाद उपाध्याय)

२. (अ) 'अङ्गनेपथ्यसत्त्वानि वाक्यार्थं व्यञ्जयन्ति हि'। (ना.शा., १४.२)
   (ब) नानाभावाभिनयव्यञ्जितानि वाङ्गसत्त्वोपेतान् स्थायिभावान्। (ना.शा., ६.३२-३३)

३. नानाभिनयसम्बद्धान् भावयन्ति रसानिमान्।
   यस्मात् तस्मादमी भावा विज्ञेया नाट्ययोक्तृभिः।। (ना.शा. ६.३४)

४. काव्यलङ्कारे-२.३४; ५. तत्रैव-२.७३।

६. तत्रैव–२.७९; ७. तत्रैव-२.८५।

८. ध्वनि-सम्प्रदाय और उसके सिद्धान्त, पृ. ३७२। (डॉ. भो.शं. व्यास)

९. लोचने, पृ. २६०।

१०. (अ) वक्राभिधेय-शब्दोक्तिरिष्टा वाचामलङ्कृतिः। (काव्यालं., १.३६)
   (ब) वाचां वक्रार्थशब्दोक्तिरलङ्काराय कल्पते। (तत्रैव–५.६६)

११. तत्रैव–२.३४।

शब्दैरनुक्तं शब्दशक्त्या चाक्षिप्तमलङ्कारं शब्दशक्त्युत्थं विवक्षितवाच्यध्वनिं स्वीकरोति[१]। भामह उपमालङ्कारे चासम्भवं तमर्थमनङ्गीकुर्वन्नपि सातिशयमर्थं मनुते[२]। अतिशयवाँश्चायमर्थो व्यङ्ग्यार्थेन तुल्य एव विभाति।

अतिशयोक्तौ हि लोकातिक्रान्तगोचराणां वचनानां निमित्तत्वं मन्यमानो भामह एतादृशीं शब्दावलीं तत्र प्रयोक्तुमीहते, यत्र लोकातिक्रान्तस्यार्थस्य (व्यङ्ग्यस्य) द्योतनं स्यात्[३]। इमामेव अतिशयोक्तिं भामहोक्तामधिकृत्य विवृति-परायणेन ध्वनिकृता सा सर्वालङ्कारविषयभूता सर्वालङ्काररूपा च साधु निगदिता[४]।

उत्प्रेक्षालङ्कारोऽपि भामहमते तत्र भवति यत्र वाच्यार्थस्य विवक्षा नाभीष्टा, उपमायाश्च मनाग् योगो दृश्यते, भिन्नगुण-क्रिया-योगाभ्यां सातिशयस्यार्थस्यान्वयनं च जायते[५]। अयञ्च सातिशयोऽर्थो व्यङ्ग्यार्थं सङ्केतयति। पर्यायोक्तं लक्षयता च तेन निरुक्तं यत् 'पर्यायोक्तं यदन्येन प्रकारेणाभिधीयत' इति[६]। अन्यथाऽभिधानं वाच्येतररीत्या=व्यङ्ग्यशैल्या कथनमेवेति मनीषिण उद्भटमम्मटादय ऊरीकृत्य तत्र व्यञ्जनां ध्रुवमेव स्वीकुर्वते। भामहो निदर्शनालङ्कारं तत्र मनुते यत्र इव-यथा-वदादि-पदप्रयोगाद् ऋतेऽपि क्रियामात्रेणैव अर्थविशेषः प्रतीयते[७]। नूनमेवायमर्थविशेष उपमाप्रतिभानमेव, उपमा चेयमाक्षिप्ता व्यङ्ग्या च। अत एव भामहमनुसृत्य निदर्शनां निदर्शयतो मम्मटस्य 'उपमापरिकल्पक' इति पदे कल्पनं व्यञ्जनमिति झलकीकरवामनो व्याचचक्षे[८]। किं बहुना, विरोधाद्यलङ्कारलक्षणेप्यन्यार्थो वाच्येतरार्थश्च पदे पदे तेनाभिमत एव।

## समीक्षणम्

उपर्युदितानां लक्षणस्थलानां चेत् सम्परीक्षणं क्रियते तर्हि सुस्पष्टं प्रतिवेद्यते यद् व्यङ्ग्यार्थनाम्नाऽपरिचितोऽपि भामहो मनसा तं स्वीकरोतीव। डॉ. भोलाशङ्करव्यासस्तु भामहं प्रतीयमानार्थस्वीकारकं मन्यत एव[९]। एतदेव च मतं

---

१. ध्व., २.२१;　　२. काव्या., २.४९-५०।

३. निमित्ततो वचो यत्तु लोकातिक्रान्तगोचरम्। (तत्रैव-२.८१)

४. (अ) 'अतिशयोक्तिस्तु सर्वालङ्कारविषयोऽपि'। (ध्व., पृ. ५०२)
(ब) सैव सर्वालङ्काररूपा (ध्व., पृ. ५००),　(स) काव्यालङ्कारे-२.८५।

५. काव्यालङ्कारे-२.९१;　　६. तत्रैव-३.८।

७. तत्रैव-३.३३।

८. काव्यप्रकाशे (बालबोधिन्याम्), पृ. ६१५।

९. ध्वनि-सम्प्रदाय तथा उसके सिद्धान्त (भाग १), पृ. ३७२।

लोचनकारस्यापि[१]। एवमेव रुय्यको[२] मम्मटः[३] पण्डितराजजगन्नाथश्च[४] भामहस्य काव्यालङ्कारे ध्वनिध्वननं मन्यन्ते। ध्वनिकारलोचनकारावपि भामहोक्तेषु दीपकापह्नुतिपर्यायोक्ताक्षेपसमासोक्तिविशेषोक्त्यादिष्वलङ्कारेषु सुस्पष्टं व्यङ्ग्यसत्तां मन्यमानौ दृश्येते[५]।

आधुनिककाव्यशास्त्रमर्मज्ञा अपि भामहं ध्वनिवादिनमङ्गीकुर्वन्ति। डॉ. सोवानीमहोदयः स्वीये 'ध्वनिपूर्ववर्तिनोऽलङ्कारसिद्धान्ताः' इति नाम्नि हिन्दीनिबन्धे भामहस्य वक्रोक्तेर्मम्मटोक्तेन प्रौढोक्तिमात्रनिष्पन्नशरीरेणार्थ-शक्त्युत्थध्वनिना साम्यमापादयन् भामहस्य ध्वनिवादितां स्वीकरोति[६]। डॉ. के.पी. त्रिवेदिमहोदयः 'शब्दश्छन्दोऽभिधानतः' इति काव्यालङ्कारभागं भामहविवरणे विवृण्वन्तमुद्भटं प्रति स्फुटमभिधत्ते यद् अभिधानपदेन न केवलमभिधागुणवृत्ती गृह्येते, प्रत्युत लक्षणा-व्यञ्जने अपि[७]।

निर्विचिकित्समिदं निर्णेतुं शक्यते यद् ध्वनि-सिद्धान्त-विकासे भामहाचार्यस्य विशिष्टं योगदानं न केनाप्यपलपनीयम्। तदीयोऽलङ्कारलक्षण-प्रपञ्चोऽखिल एव ध्वनिमहाप्रबन्धस्य प्राक्कथनकल्प एव विजृम्भते।

### ३. आचार्य-दण्डी

आचार्यदण्डिविरचिते काव्यादर्शे यद्यपि शब्दशक्तीनां स्पष्टतया विवेचना न क्वचनापि कृता, अत एव कैश्चन काव्यादर्शकृद् ध्वन्यालोकनिरूपितेऽभाववादि-दले विनिपातितः, किन्तु तदीयग्रन्थे सन्ति केचन स्फुटसङ्केता अभिधया सहैव लक्षणाया व्यञ्जनायाश्चापि। काव्यादर्शप्रणयनतः प्राक् काव्यालङ्कारः प्रणीत एवासीद्, यत्र काव्यशास्त्रसिद्धान्तावलम्बनाय स्वच्छा दिङ् निर्देशिताऽऽसीत्। व्याकरण-मीमांसा-वेदान्त-न्यायादिदर्शनेषु चाभिधा-लक्षणयोः प्रस्फुटं प्रतिपादनं सम्पादितचरमासीत्; परन्तु काव्यस्य कमनीयतमचमत्कारातिशयद्योतनं

---

१. ध्वन्यालोकलोचने, पृ. ११८; २. अलं.सर्व., पृ. ३।

३. आक्षेप-विभावना-भाविक-पर्यायोक्तादिलक्षणेषु भामहोऽनुसृतो न तु शब्दत उपात्तस्तेन।

४. (अ) रसगङ्गाधरे, पृ. ५५५।
(ब) ध्वनिसम्प्रदाय और उसके सिद्धान्त (डॉ. भो.शं. व्यास), पृ. ३७५।

५. ध्वन्यालोकलोचने, पृ. १०८-१२०।

६. 'However Bhamahas Vakrokti does appear in Kavyaprakash, under the name of प्रौढोक्तिमात्रनिष्पन्नशरीरोऽर्थशक्त्युत्थध्वनिः (Bhandarkar, Comm. Vol.1).

७. ध्वनिसिद्धान्त और व्यञ्जनावृत्ति (गयाप्रसाद उपाध्याय), पृ. १२।

व्यञ्जनायत्तमेव, अतश्च तस्या आलोकः काव्यशास्त्रिणां हृदयलोचनेषु आलोक्यमानो बभूव दण्डिकाले।

काव्यलक्षणनिरूपणे दण्डिना कथितं यत् 'शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली'[१] इति।

अत्र 'इष्टार्थ' एव अलङ्कारः प्रधानश्च, येन सङ्गता पदावली काव्याख्यां भजते। इष्टार्थश्चायं सर्वदैव न केवलं वाच्यः, प्रत्युत लक्ष्यो व्यङ्ग्यश्च, इष्टत्वञ्च सचमत्कारं वर्णनाभिलाष एवेति काव्यादर्शटीकाकृद् रङ्गाचार्यरेड्डीमहोदयः प्राह[२]। रेड्डीमहोदयो दण्डिमतमुपसंहरन् 'रमणीयार्थोपस्कृतं सुन्दरं वाक्यमेव काव्यमिति' व्याजहार[३]। अयं च रमणीयार्थो नूनमेव व्यङ्ग्यार्थपरामर्शकः प्रत्यवगमनीयः।

आचार्यदण्डी शब्देऽर्थे (वस्तुनि) च रसावस्थितिं सूचयति कामपि अभिधाभिन्नां वृत्तिमपि[४]। समग्रमप्यलङ्कारनिवहं रससेकपरं विवेचयन् स मन्येऽलङ्कारध्वनित्वम्, अलङ्काराणां व्यङ्ग्यत्वं वा स्वीकरोति[५]। आचार्यस्य स्पष्टमिदं मतं यद् अविदग्धजनकथनविधिसमुत्थोऽर्थविशेषो ग्राम्यत्वाद् वैरस्य-हेतुर्भवति, स एवार्थो विदग्धजनवक्रोक्तिशैलीमारूढः सन्नग्राम्यत्वाद् रसवहो जायत इति[६]। नूनमेवात्र प्रथमकोटिकोऽर्थोऽभिधया, द्वितीयकोटिकश्चार्थो लक्षणया व्यञ्जनया च निःस्यन्दनीयो भवति। एवमेव रसवदलङ्कारे सर्वरसोदाहरणानि निदर्श्य 'वाक्यस्याग्राम्यतायोनिर्माधुर्ये दर्शितो रस'[७] इत्युपसञ्जिहीर्षुराचार्योऽभिधागुण-वृत्त्यादिभिन्नां रसादिप्रतीतिव्यञ्जिकां व्यञ्जनावृत्तिमूरीकुर्वन्निव प्रतिभाति।

यस्मिन् वाक्ये प्रयुक्ते धर्मविशेषोत्कर्षस्य प्रतीतिः (व्यञ्जना) भवेत्, तत्रोदारनामकं गुणं विवृण्वन् दण्डी एतेनैव गुणेन समलङ्कृतां काव्यवीथीं समर्थयते। काव्यादर्शस्य आङ्ग्लभाषानुवादकेन डॉ. एस.के. वेलवलकरमहोदयेन उक्तसन्दर्भगतानां प्रतीयत इतिप्रभृतिपदानां व्यङ्ग्यमूलकोऽर्थ उपस्कृतः[८], तमेवानुसरति डॉ. भोलाशङ्करव्यासोऽपि[९]।

---

१. काव्यादर्शे–१.१०; २. काव्यादर्शे, रंगाचार्यटीकायां, पृ. ८-९।
३. तत्रैव, पृ. ९।
४. 'वाचि वस्तुन्यपि रसस्थितिः'। (काव्यादर्शे–१.५१)
५. 'कामं सर्वोऽप्यलङ्कारो रसमर्थे सिञ्चति'। (तत्रैव–१.६२)
६. तत्रैव–१.६३-६४; ७. तत्रैव–२.२९२।
८. काव्यादर्शस्य आङ्ग्लानुवादे, पृ. ९।
९. ध्वनि-सम्प्रदाय और उसके सिद्धान्त, पृ. २७३ (प्रथमभागे)।

दण्डिप्रोक्ते 'यथाकथञ्चित् सादृश्यं यत्रोद्भूतं प्रतीयत' इत्युपमालक्षणवाक्ये 'प्रतीयत' इति पदं व्याचष्टे रङ्गाचार्य इत्थम्—'अभिधा-लक्षणा-व्यञ्जनान्यतमवृत्त्या प्रतीतिविषयमेति' इति[१]। वस्तूपमायां तु साधारणधर्मस्यानुल्लेखाद्धेतोर्धर्मस्य प्रतीतिर्व्यञ्जनयैव भवति, अभिधापुच्छभूताया लक्षणाया अपि तत्रासम्भवात्। एवमेव प्रतिवस्तूपमायामपि साम्यवाचकानामिवादिपदानामभावे साम्यप्रतीतिर्व्यञ्जनयैव सम्भाव्या[२]। भाविकालङ्कारनिरूपणे च व्यक्तिपदमभिव्यक्तिव्यञ्जकमेव विभाव्यम्[३]। किं बहुना, काव्यादर्शोक्तेषु उपमासूचकपदेषु त्रिधा समुद्धृतेषु नूनमेव दण्डिमनसि उपमावाचकानि (इवादीनि), उपमालक्षकाणि (जयतीत्यादीनि), उपमाव्यञ्जकानि (सौभाग्यहारीत्यादीनि) च पदानि परिस्फुरन्ति स्मेति स वृत्तित्रयी-चमत्कारचञ्चच्चित्तवृत्तिरासीदिति व्यज्यते[४]। एवमेव व्यतिरेकालङ्कारोदाहरणेष्वपि त्रिवर्गीकरणं ग्रन्थकृतो वृत्तित्रयध्वननं (नामसूचनमन्तरेणापि) सूचयति[५]।

काव्यादर्शस्य समीक्षणेन स्फुटं प्रतिवेद्यते यद् आक्षेप[६]-समासोक्ति[७]-तुल्ययोगिता-पर्यायोक्तादिषु[८] अलङ्कारेषु निस्संशयं व्यञ्जनावृत्तिः प्राप्तप्रसरेति रङ्गाचार्येण पदे पदे प्रत्यपादि[९], उपसमहारि च 'व्यञ्जनाया वृत्तित्वं तु सर्वैरालङ्कारिकैस्सम्मतम्' इति[१०]। इत्थं वाचकशब्दाभावेऽलङ्कारेषु व्यञ्जना-चमत्कारसत्तां स्वीकरोत्येव दण्डीति समालोचकालोचनम्। अलङ्कारेषु तन्निरूपितेषु गुणीभूतव्यङ्ग्ये चारुत्वसत्त्वेऽपि तत्प्रत्यायिकाया व्यञ्जनावृत्तेरनुल्लेखनमकल्पनं वा तदानीन्तनशब्दशक्तिचिन्तनानुन्मेषमेव द्योतयति, तथापि प्रतीयमानार्थ-समावर्जितचेतसो दण्डिनः काव्यादर्शाख्या कृतिः परवर्तिनि व्यञ्जनाविकासोल्लासे प्रशस्यतरसोपानतामावहतितराम्।

---

१. रङ्गाचार्यकृतटीकायाम्, पृ. ११९।

२. सम्प्रतीतिः = इवादिशब्दप्रयोगाभावेऽपि व्यञ्जनया सादृश्यावबोधः।
(रङ्गाचार्यटीकायाम्, पृ. १४०)

३. तत्रैव, पृ. २९३;
४. तत्रैव, पृ. १५७।
५. काव्यादर्शे, पृ. १८०;
६. तत्रैव–२.१३५-१३६।
७. तत्रैव–२.२०६-२०७;
८. तत्रैव (रङ्गा.), पृ. २९३।
९. तत्रैव–२.२९५;
१०. रङ्गा., पृ. २९३।

**४. आचार्य-वामनः**

इदं हि निश्चप्रचं प्रथितं यद् वामनो जैमिनीयमतमालम्ब्य अभिधा-स्वीकर्ताऽऽसीत्[१]। मीमांसाशास्त्रेषु अभिधाया एव विशिष्टा चर्चा प्रथते, लक्षणाविवृतिरपि मुकुलभट्टादिभिर्विवृता; किन्तु तदन्तर्भावस्तु अभिधायामेव कृत इति दृश्यते। न्यायादिदर्शनजगति लक्षणाया अपि सादरं प्रवेशोऽभिमत आसीत्[२]। किन्तु वामनाचार्यस्य लक्षणापरिज्ञानमपि प्रमीयते, यथा 'सादृश्याल्लक्षणा वक्रोक्ति'रिति वक्रोक्तिलक्षणं[३] निरुच्य तदुदाहरणाय प्रस्तौति यत्—

'उन्मिमील कमलं सरसीनां कैरवञ्च निमिमील मुहूर्तात्'।

अत्र नेत्रधर्माभ्यामुन्मीलननिमीलनाभ्यां कमलकैरवयोः क्रमशो विकाससङ्कोचौ सादृश्यमूलिकया लक्षणया बोद्धयौ। वस्तुतस्तु लक्षणाविचक्षणा नात्र वक्रोक्त्या, प्रत्युत लक्षणयैव अर्थमवगच्छन्ति सुतराम्[४]। ईदृशानि चोदाहरणानि अविवक्षितवाच्यध्वनेरूहनीयानि, किन्तु वामनो लक्षणां यावद् धावति, न तु लक्षणाप्रयोजनद्योतिकां व्यञ्जनां यावत्। लक्षणाप्रयोजनानां व्यञ्जनानिर्गलितत्वन्तु ध्वनिकारोपज्ञमेव समुल्लसति[५]। किन्तु पुष्पमालाशब्देऽभिधालक्षणे अनङ्गीकृत्य पुष्पशब्दस्य उत्कृष्टताप्रतिपत्तिजनकत्वं (उत्कृष्टताद्योतकत्वं) प्रसाधितवता वामनेन व्यञ्जनार्थे प्रतिपत्तिशब्दः प्रयुक्त[६] इत्यावेदितं जायते।

एवमेव वामनोक्तेषु शब्दगुणेषु वर्णध्वनिः, अर्थगुणस्य ओजसोऽर्थ-प्रौढिरूपेषु च अर्थशक्त्युत्थध्वनिश्च प्रच्छन्नतया स्वीकृताविव। कान्तिगुणेऽपि असंलक्ष्यक्रमव्यङ्ग्यध्वनेः प्रत्यक्षं स्वीकृतिर्दृश्यते[७]। सर्वत्राप्यर्थगुणेषु सूक्ष्मदृष्ट्या विचारितेषु तु रसध्वनेः कोऽपि सौभाग्यपरिपाकः परिभाति। औदार्यसौकुमार्य-समाध्योजसामर्थ्यगुणानान्तु विविधरूपेषु लक्षणाया व्यञ्जनायाश्च चमत्कार-चारुत्वातिशयः सुतरामूहनीयः[८]।

---

१. काव्यालङ्कार-सूत्रवृत्तौ, पृ. १९८।

२. The secondary meaning became well-established in the time of Amar Singh. (The Journal of the University of Gauhati, V. X. 59.

३. का.सू.वृ., पृ. १६४।

४. लक्षणायां च झटित्यर्थप्रतिपत्तिक्षमत्वं रहस्यमाचक्षत इति। (तत्रैव, पृ. १६५)

५. का.सू.वृ., हिन्दीटीकाया डॉ. नगेन्द्रकृतभूमिकायाम्, पृ. २५।

६. काव्यालङ्कारसू.वृ. २.२.१३-१८।

७. तत्रैव, पृ. १८४;

८. तत्रैव, पृ. ४६।

आचार्यवामनेन तावद् अभिधेयार्थस्य भेदद्वयं कृतम्—व्यक्तः, सूक्ष्मश्च। व्यक्तः (स्थूलो वा) साधारणजनसंवेद्योऽर्थः; किन्तु सूक्ष्मोऽर्थस्तु सहृदयमात्रसंवेद्य एव रसावहः। सूक्ष्मोऽप्यर्थो द्विविधः—भाव्यः, वासनीयश्च[१]। भाव्याख्यः सूक्ष्मार्थो भावकानामवधानरूपभावनाया विषयभूतत्वाद् रसनिःष्यन्दनक्षमो जायते[२]। वासनीयोऽर्थस्तु सहृदयसद्व्यवहारसमुल्लसितसंस्कारनिर्वृतत्वाद् अवधान-प्रकर्षेणैव गमनीय[३] इति सोऽविवक्षितवाच्यव्यङ्ग्यसब्रह्मचारी। अत एव कामधेनु-टीकायां काव्यालङ्कारसूत्रवृत्तिगतोदाहरणपद्ये वस्तुध्वनिः प्रदर्शितः[४]।

इत्थं स्थालीपुलाकन्यायेनाचार्यवामनस्यापि प्रतीयमानार्थविज्ञता प्रतीयत एवेति स ध्वनेरध्वनि चिरन्तनाध्वनीनोऽनुमेयः।

## ५. आचार्य उद्भटः

आचार्य उद्भटः स्वीये 'काव्यालङ्कारसारसङ्ग्रहे' पूर्वालङ्कारिकवन्न शब्दशक्तिविचारणाप्रकरणमुपनिबद्धवान्; किन्तु विविधालङ्कारचित्रण-प्रयुक्तपदावलीभिस्तस्य लक्षणाव्यञ्जनाज्ञानं समालोक्यते। पर्यायोक्तालङ्कारप्रपञ्चने तेन 'अवगमन'शब्दप्रयोगो व्यञ्जनासमानार्थक एव बहुधा प्रयुक्तः, स च ध्वनिवादिभिर्व्यञ्जनार्थे समादृतः। भामहविरचितस्य काव्यालङ्कारस्य व्याख्यानभूते (किन्त्वधुनाऽनुपलभ्यमाने) 'भामहविवरणे' कथितमुद्भटेन यत् 'शब्दानामभि-धानमभिधाव्यापारो गुणवृत्तिश्चः[५]। एतेन तदानीन्तनकाव्यशास्त्रिणां वृत्तिज्ञानपरिचयो द्योत्यते।

एकतो रूपकव्याजस्तुतिपर्यायोक्तादिचित्रणेषु क्रमशः प्रयुक्तैः 'श्रुति-शब्दशक्तिस्वभाववाचकवृत्त्यादि'पदैस्तस्य अभिधाज्ञानम्, अपरतश्च रूपकादिलक्षणप्रयुक्तैर्गुणवृत्त्यादिशब्दैर्लक्षणाज्ञानमनुमीयते, तत्रैव पर्यायोक्त-चित्रणावसरे तेन लक्षणातिरिक्तं शक्तित्रयमुल्लिखितम्—वाचकवृत्तिः (अभिधा), वाच्यवृत्तिः (तात्पर्यवृत्तिः), अवगमनव्यापारश्च (व्यञ्जना)[६]।

---

१. का.सू. ३.२.९-१०।
२. का.सू. वृत्तिटीकायां कामधेनौ, पृ. ११२।
३. तत्रैव।
४. इत्येवं स्वाभिप्रायप्रकाशनमवधानप्रकर्षेणात्र सहृदयहृदयसंवेद्यम्। (तत्रैव, पृ. ११३)
५. लोचने, पृ. ३४।
६. प्रतीहारेन्दुराजकृतायां लघुवृत्तौ, पृ. ३५९-६०।

अयञ्चावगमनव्यापारो वाचकवाच्यव्यापाराभ्याम् (अभिधातात्पर्याभ्यां) व्यतिरिक्त एव कश्चन व्यापार इति पर्यायोक्तलक्षणेन तत्कृतेन ज्ञायते—

पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते।
वाच्यवाचकवृत्तिभ्यां शून्येनावगमात्मना[१]।।

अभिनवगुप्त[२]-प्रतीहारेन्दुराज[३]-मम्मट[४]-वामन[५]-झलकीकरादिभिर्हि अवगमनं व्यञ्जनापरपर्यायमेव व्याख्यातम्। अत एव प्रतीहारेन्दुराजेन पर्यायोक्ते वस्तुध्वनि[६]-विच्छित्तिराच्छादिता। अथ च समग्र एव ध्वनिप्रपञ्चस्तेन पर्यायोक्तेऽप्रस्तुतप्रशंसायां च समावेशयितुमुद्योग आरब्धः[७]। लोचनकार-मम्मट-विश्वनाथादिभिरपि व्यञ्जनानामान्तरेषु अवगमस्य (अवगमनस्य वा) गणना कृतैव।

समासोक्त्याक्षेप-विशेषोक्ति-पर्यायोक्तापह्नुति-रूपकादिष्वलङ्कारेषु व्यङ्ग्यार्थ-समावेशस्य परिज्ञानं भट्टोद्भटेन तत्र तत्र समालोडितम्। अत एव ध्वनिकृता अलङ्कारसन्निविष्टव्यङ्ग्यार्थविजृम्भितानि काव्यानि गुणीभूतव्यङ्ग्यकोटिमापादितानि। किं बहुना, सूक्ष्मेक्षिकया ज्ञायते यद् भट्टोद्भटो व्यञ्जनावितानमतन्वन्नपि अवगमाख्येन व्यापारेण तामुपस्थापितवान्।

**६. आचार्य-रुद्रटः**

आचार्यरुद्रटोऽपि 'काव्यालङ्कारे' वाच्यार्थभिन्नस्य प्रतीयमानार्थस्य सत्तां द्योतयति 'प्रतीयते', 'गम्यते', 'गमयती'त्यादिभिः पदैः। भामहादिनिर्दिष्टां वक्रोक्तिवीथीमतिक्रम्य तेन वक्रोक्तेरलङ्कारमात्रत्वं प्रसाध्य श्लेषकाकुभ्यां द्विविधत्वं

---

१. काव्या.सा.स. ४.६।

२. अत एव पर्यायेण = प्रकारान्तरेण अवगमात्मना = व्यङ्ग्येनोपलक्षितम्, लोचने, पृ. ११८।

३. यो वाच्यवाचकयोर्व्यापारस्तमन्तरेणापि प्रकारान्तरेणार्थसामर्थ्यात्मनाऽवगमस्वभावेन यदवगम्यते (लघुवृत्तौ, पृ. ३६०)।

४. वाच्यवाचकभावव्यतिरिक्तेनावगमनव्यापारेण.। (का.प्र., पृ. ५११)

५. अवगमनव्यापारेण=व्यञ्जनारूपव्यापारेण। (वामनझलकीकरटीकायाम्, पृ. ६८०)

६. (अ) पर्यायोक्तं वस्तु। (ल.वृ., पृ. ३६०)
(ब) अतोऽत्र वस्तुमात्रस्यैवंविधस्य शब्दव्यापारास्पृष्टस्य प्रतीयमानता। (तत्रैव, पृ. ४१९)

७. (अ) काव्यधर्मस्य ध्वनिनाभिधानस्य......पर्यायोक्तालङ्कारसंस्पर्शित्वम्। (तत्रैव)
(ब) अतश्च पर्यायोक्ताप्रस्तुतप्रशंसयोरेव यथाक्रमं विवक्षिताविवक्षितवाच्ययोः सर्वध्वनिभेद-सामान्यभूतयोर्ध्वनिभेदयोरन्तर्गतिर्वाच्या। (ल.वृ., पृ. ४३०)

प्रतिष्ठापितम्। तत्र च काकुवक्रोक्तौ[2] काक्वा=कण्ठध्वनिविकारविशेषेण[1] प्राकरणिकार्थापेक्षयाऽन्यार्थप्रतीतिर्भवति[2]। आचार्यराजशेखरेण[3] तु काकूक्तेः काव्य-जीवितत्वं प्रत्यपादि[4]।

अथ च वास्तवौपम्यातिशयश्लेषमूलकेषु चतुर्विधेष्वर्थालङ्कारेषु वास्तवमूलकस्तावद् 'भाव'नामाऽन्यतमोऽलङ्कारो वर्णितो द्विधा लक्षणाभ्यामुदाहरणाभ्याञ्च। तत्र प्रथमो भावालङ्कारस्तु मम्मटेन, अलङ्कारशेखरेण च वर्णिताद् गुणीभूतव्यङ्ग्यनामकान् मध्यमकाव्यान्न भिन्नः—

यस्य विकारः प्रभवन्नप्रतिबद्धेन हेतुना येन।
गमयति तदभिप्रायं तत्प्रतिबन्धश्च भावोऽसौ[5]॥

अयं भावो यद् यत्र केनापि अनैकान्तिकलक्षणेन कुत्रापि विकारः परिलक्ष्यते, तेनैव च विकारेण लक्षणेन सह कार्यकारणभावो, विकारवति च कोऽपि निश्चितोऽभिप्रायः सूच्यते, तत्र भावो नामालङ्कारः। यथा—

ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम्।
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया[6]॥

अत्र वञ्जुलमञ्जरीकरं तरुणं दृष्ट्वैव सञ्जातस्तरुणीमुखमण्डलस्य मलिनिमा सूचयति यद् गृहकार्यादिव्यस्ततया, गुरुजनोपरुद्धतया विस्मृत्या वा तरुणी दत्तसङ्केतापि कुञ्जं नोपेतवतीति हेतोः पश्चात्तापेन लज्जया वा मूकां क्षमायाचनामिव तन्वन्ती हृदि खिद्यत इत्यादितात्पर्यचिन्तनेन तरुणीतरुणयोः प्रेमपरिपाकादिः सूच्यत इति भावालङ्कारत्वम्। अयमेव भावालङ्कारः, परवर्तिनां ध्वनिपान्थानां प्रकाशप्रदः।

द्वितीयस्य च भावालङ्कारस्येदं लक्षणं रुद्रटप्रोक्तमस्ति—

अभिधेयमभिदधानं तदेव तदसदृशसकलगुणदोषम्।
अर्थान्तरमवगमयति यद् वा वाक्यं सोऽपरो भावः[7]॥

---

१. काकुर्ध्वनेर्विकारः। (का.प्र., पृ. ८२)
२. अर्थान्तरप्रतीतिर्यत्रासौ काकुवक्रोक्तिः। (काव्यालङ्कारे–२.१६)
३. (अ) का.प्र., ३.२१-२२; (ब) तत्रैव–५.४५-४६।
४. अयं काकुकृतो लोके व्यवहारो न केवलम्।
शास्त्रेष्वप्यस्य साम्राज्यं काव्यस्याप्येष जीवितम्।। (का.मी., पृ. ८७)
५. काव्यालङ्कारे–७.३८।
६. काव्यालङ्कारे–७.३९; का.प्र., पृ. ३१; ७. काव्यालङ्कारे–७.४०।

अयमाशयो यद् येन वाक्येन स्वीयवाच्यार्थबोधनेनैव सह प्रकृताभ्यां विधिनिषेधाभ्यां विलक्षण एव कश्चन वक्त्रभिप्रायरूपोऽर्थविशेषोऽपि प्रत्याय्यते, तद् वाक्यमेव भावालङ्कारसंज्ञां बिभर्ति। नूनमेव लक्षणसन्निविष्टम् 'अवगमयती'ति पदं रुद्रटाचार्येण भट्टोद्भटमनुसृत्यैव 'द्योतयति, व्यञ्जयती'त्याद्यर्थ एव प्रयुक्तम्। भावालङ्कारविषयसीमा तु ध्वनिकारलोचन-काराभ्यां वस्तुध्वनावेव अन्तःपातितेति ध्रुवं तस्यापि ध्वन्यङ्गता प्रतिभाति, यथा—

एकाकिनी यदबला तरुणी तथाऽह-
मस्मिन् गृहे गृहपतिश्च गतो विदेशम्।
किं याचसे तदिह वासमियं वराकी
श्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ[१]॥

यद्यप्यत्र वाक्ये तरुणीकृतस्य पान्थनिष्ठनिवासनिषेधस्य प्रतीतिरेव बहिः स्फुरति, किन्तु एकाकिनीत्वं, तरुणीत्वम्, अबलात्वं, गृहपतेश्च विदेशं प्रति गतत्वं, श्वश्र्वाश्च वराकीत्वमन्धत्वं बधिरत्वञ्च निवासनिषेधरूपः कश्चन विध्यर्थः सूच्यत इति भावालङ्कारत्वम्। अस्मिन्नुदाहरणपद्ये तु लोचनकारेण गुणीभूतव्यङ्ग्यकाव्यत्वमूरीकृतमेव, एकैकत्र पदार्थे व्यङ्ग्यस्य उपस्कारकत्वात्[२]।

पर्यायालङ्कारचित्रणेऽपि रुद्रटः पूर्वाचार्यानादृत्य अर्थान्तरस्थितिं मन्यते। अर्थान्तरञ्चेदं व्यङ्ग्यरूपमेव। परिसङ्ख्यासमासोक्त्यन्योक्तिगम्योपमा-वाक्यमूलकार्थश्लेषादिष्वलङ्कारेषु च तेन अर्थान्तरद्योतनं स्फुटतरमङ्गीकृतम्। गम्योपमायां समासोक्तौ च वर्णितो विषयसीमा निश्चप्रचं व्यङ्ग्यसाम्राज्य-लक्ष्मीमनुवदत्येव[३]। **रुद्रटप्रतिपादितेषु शुद्धार्थश्लेषभेदेषु परिगणितो व्याजश्लेष एव परवर्तिनां व्याजस्तुतिः, विरोधश्लेष एव च परेषां विरोधाभास इति हि प्रतीयते**। तत्र व्याजश्लेषस्य[४] उदाहरणानि ध्वनिभेदोदाहरणेष्वन्तर्भावनीयान्येव, ध्वन्यभिन्नत्वात्। एवमेव अविशेषाख्ये वक्राख्ये च श्लेषभेदे सहृदयहृदयहारिणो व्यङ्ग्यार्थाः परिस्फुरन्ति। अर्थश्लेषगतेषु भेदेषु ध्वनिचारुत्वमालोक्यैव जयरथेन मन्ये श्लेषवादिनो ध्वनिविरोधिष्वन्तःपातिताः[५]। अत एव ध्वनेः श्लेषस्य च विषयसीमापार्थक्यविवेचनप्रयासो ध्वनिकृता विशदं विततः[६]।

१. काव्यालङ्कारे–७.४१; लोचने, पृ. १३४-३५।
२. लोचने, पृ. १३५।
३. काव्यालङ्कारे–८.७, नमिसाधुटीकायाञ्च, पृ. ११३।
४. काव्यालङ्कारे–१०.१२।
५. ध्व.सं. और उसके सि. (डॉ. भो.शं.व्यास), पृ. ३७६ (प्र.भा.)।
६. ध्वन्यालोके, पृ. ११६ (वि.)।

किं बहुना, आचार्यरुद्रटस्यापि व्यञ्जनाशक्तिपरिचय उपरितनैर्विवरणैर्विव्रियत एव, व्यङ्ग्यार्थलुब्धताऽपि दृश्यत एव समालोचकचेतोलोचनेषु।

## ७. अग्निपुराणम्

अष्टादशमहापुराणेषु अग्निपुराणस्य गणना क्रियते। यद्यप्यत्र विविधानामर्वाचीनविषयतथ्यवस्तूनां वैशद्येन विवेचनं सङ्कलनञ्च वीक्ष्य पुराणमीमांसका विस्मिताः सन्ति, रचनाकालं निर्धारयितुमशक्ताश्च सन्ति। अत एव पुराणरचना कैश्चन चतुर्थपञ्चमशताब्दीमध्ये कृतेति निर्णीयते। अलबेरुन्-महोदयस्तु सार्धदशशतपरिमितान् ईसाब्दान् (१०५० ई.) यावत् पुराणप्रणयनं मनुते। स्मिथमहाशयः षष्ठसप्तमशताब्द्योर्मध्ये पुराणरचनां स्वीकरोति। अग्निपुराणे खलु व्याकरणकाव्यशास्त्रादिसिद्धान्ता उल्लसन्ति। केषाञ्चन मतेऽग्निपुराणम् आनन्दवर्धनपूर्ववर्ति, केषाञ्चन मते तु आनन्दवर्धनोत्तरवर्ति[१]। अग्निपुराणस्य पूर्ववर्तित्व एव ध्वनिकारोपरि ततो वस्तुग्रहणं सम्भाव्यते, पुराणस्य च काव्यशास्त्रीयदृष्ट्या मौलिकं महत्त्वं प्रतीयते; परवर्तित्वे तु ध्वनिकारनिर्दिष्टां दिशमेवालम्बते पुराणमेतत्। वयन्तु साम्प्रतं नवमशताब्द्याः (ध्वनिकृत्कालात्) पूर्वमेव अग्निपुराणसत्तां विभाव्य तत्र ध्वनिव्यञ्जनादिसूचकस्थलानि विमृशामः।

अग्निपुराणस्य शब्दार्थालङ्कारनाम्नि प्रकरणे त्रयोदशसु श्लोकेषु अभिधालक्षणयोर्ध्वनेश्च (व्यञ्जनायाश्च) चित्रणमस्ति। भारतीयवाङ्मये शब्दवृत्तीनां सर्वप्रथमं वर्णनमग्निपुराण एव दृश्यते। अयमाशयो यत् 'तत्र हि अलङ्काराणां वर्गत्रयं कृतमस्ति—शब्दालङ्काराः, अर्थालङ्काराः, शब्दार्थालङ्काराश्च। शब्दार्थालङ्कारेषु 'अभिव्यक्ति'नामाऽप्यलङ्कारोऽस्ति। शब्दतोऽर्थप्रकटनं भावद्योतनं वाऽभिव्यक्तिः, सा च द्विविधा—श्रुतिः (अभिधा लक्षणा च), आक्षेपश्च (ध्वनिश्च, व्यञ्जना वा)। तत्र वाचकाच्छब्दाद् वाच्यार्थप्रकटनकर्त्री श्रुतिः। साऽपि द्विविधा— पारिभाषिकी, नैमित्तिकी च। पारिभाषिकी श्रुतिस्तु शब्दसङ्केतितमेवार्थं प्रबोध्य विरता भवति। इयं हि अभिधाशक्तिः। रुद्रटोऽपि रूपकलक्षणेऽभिधार्थकं श्रुतिशब्दं प्रयुक्तवान्। नैमित्तिकी श्रुतिर्हि साधारणसम्बन्धसामीप्यसमवायादियोगैः पञ्चधा। सा च स्खलद्गतिकान् शब्दान् रूढिप्रयोजनान्यतरनिमित्तेन वाच्यार्थभिन्नेष्वर्थेषु लक्षयतीति हेतोर्लक्षणा कथ्यते। वाच्यार्थसम्बद्धार्थान्तरप्रतीतिर्हि लक्षणा[२]।

---

१. अग्निपुराण का काव्यशास्त्रीय भाग, (डॉ. रामलाल वर्मा), भूमिका, पृ. ४।

२. अग्निपुराणगतवृत्तिविवेचनन्तु रसगङ्गाधरस्य आचार्यपुरुषोत्तमशर्मचतुर्वेदिकृतायां संस्कृत-भूमिकायाम्, मदनमोहनझाकृतायां हिन्दीभूमिकायाञ्च विततमस्ति। मूलन्तु अग्निपुराणे ३४५.७-१५।

अथ च श्रुत्या (पारिभाषिकीरूपयाऽभिधया, नैमित्तिकीरूपया लक्षणया च) अलभ्यमानानामर्थानां प्रत्यायनं सहृदयहृदयेषु यया वृत्त्या सम्पाद्यते, सा वृत्तिराक्षेप इति कथ्यते, स एव ध्वनिरिति कथ्यते। अत्र हि शब्दार्थौ स्वीयमर्थं स्वात्मानञ्च गौणीकृत्य ध्वनिद्वारा अर्थान्तरमाक्षिपत इति हेतोराक्षेप इत्यन्वर्थं नाम ध्वनेः। यत्रापि निषेधमुखेन वस्तुविशेषस्य स्वीकृतिः, स्वीकृतिमुखेन निषेधो व्यज्यते, सोऽप्याक्षेप एव[1]।

शब्दभेदेऽप्यर्थसाम्यं तु ध्वन्यालोकेऽग्निपुराणे च विमृष्टमेव। 'स आक्षेपो ध्वनिः स्याच्च ध्वनिना व्यज्यते यत' इत्यग्निपुराणीयवाक्ये द्वितीयो ध्वनिशब्दो व्यञ्जनापरः, प्रथमस्तु ध्वनिकृद्ध्वनेः संवादी प्रतीयमानार्थवाही। अत एव आक्षेपालङ्कारेऽपि ध्वनिच्छायां वीक्ष्य ध्वनिकृता तत्र गुणीभूतव्यङ्ग्यताऽङ्गीकृता[2]; किन्तु अग्निपुराणीय आक्षेपस्तु व्यङ्ग्यार्थस्य नामान्तरमेवेति स ध्वनिरूपो न तु गुणीभूतव्यङ्ग्यकक्ष्यानिविष्टः। ध्वनिकृता बहुशः प्रयुक्तः 'सहृदय'शब्दोऽपि अग्निपुराणीयस्य 'सचेतस्'पदस्यैव अनुवदनमात्रं विभाति। अग्निपुराणदृष्टौ ध्वनिवेत्तैव सचेता, न तु अभिधावेत्ता लक्षणाज्ञाता वा[3]।

अन्यरीत्याऽभिहिता कथनशैली हि पर्यायोक्तमिति पुराणकारेण कथितम्। तच्चापि ध्वनिरूपमेवेति 'पर्यायोक्तध्वनि'स्तत्र सङ्केतितः[4]। पर्यायोक्ते च व्यङ्ग्यार्थविच्छित्तिच्छाया न केषाञ्चनापि वैमत्यवाचामाचामति। ध्वनिकृताऽपि तत्र व्यङ्ग्यप्राधान्ये ध्वन्यन्तर्भूतिः, वाच्यप्राधान्ये च गुणीभूतव्यङ्ग्यता सिद्धान्तितैव[5]।

एवञ्च सङ्क्षिप्तैर्विवेचनैरपि ज्ञायत एव यद् अग्निपुराणगतवृत्तिचर्चासन्दर्भे ध्वनेर्बाभासमानः सङ्केतप्रकाशः परिस्फुरति, येन ध्वन्यालोकध्वनिवीथी मनाग् विद्योतितैवेति अग्निपुराणस्य ध्वनिकृत्पूर्ववर्तित्ववादिनां नयः।

यद्यप्युक्तविवरणेभ्योऽन्यत्रापि ध्वनिसङ्केतः समधिगम्यः, **तथापि प्रस्फुटं ध्वनिकृत्पूर्वगामि ध्वनिसङ्केतकमेतद् विवरणं प्रस्तुतीकृतम्, यतो ध्वनिकारादयः प्रभूतां तत्त्वसम्पदमासाद्य ध्वनिप्रासादप्रसाधनाय प्राभूवन्निति तर्क्यते।**



---

१. 'श्रुतेरलभ्यमानोऽर्थो यस्माद् भाति सचेतसाम्। स आक्षेपो ध्वनिः स्याच्च ध्वनिना व्यज्यते यतः॥ शब्देनार्थेन यत्रार्थः कृत्वा स्वस्योपसर्जनम्। प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया॥ तमाक्षेपं ब्रुवन्त्यत्र.....'। (अग्निपुराणे–३४६.१४-१५)

२. ध्वन्यालोके, पृ. १११, ११४; लोचने च, पृ. ११२-११५।

३. अ.पु. ३४५.१४।

४. एषामेकतमस्यैव समाख्या ध्वनिरित्यतः। (अग्निपु. ३४५.१९)

५. ध्वन्यालोके, लोचने च, पृ. ११८-११९।

# 'मालतीमाधवे' प्रतिबिम्बिता सामाजिकी चेतना

**प्रो. विन्ध्येश्वरीप्रसादमिश्रो 'विनयः'**
आचार्यः
संस्कृतविद्याधर्मविज्ञानसङ्कायस्य
काशीहिन्दूविश्वविद्यालये
वाराणस्याम्



वाङ्मयी संसृतिर्यस्य प्रभयैव प्रवर्तिता।
तं परात्परमात्मानमनिर्वाच्यमुपास्महे।।

नाट्यत्रितयसम्भूतिविभावितसुधासृतिः।
कृती सुकृतिनां शश्वद् भवभूतिर्जयत्यसौ।।

कविनाऽनेन नाट्येषु सर्वं वर्णयताऽपि या।
सामाजिकी श्रिता कापि चेतना सा विशिष्यते।।

मालतीमाधवप्रख्ये तस्य प्रकरणे पुनः।
समुन्मेषमवाप्नोति स्फुटं सा तदिहोच्यते।।

समाजनिरपेक्षको भवति नैव कश्चित्कविः
कवित्वपरिमार्जने श्रयति लोक एवार्हताम्।

अनेन हि परस्परं क्रमविभावनेनाञ्जसा
भवत्यमृतवल्लरी जगति जङ्गमा सत्कृतिः।।

सुरसरस्वत्यां 'समाज' इति न केवलं जनसम्मर्दस्यैवापरं नाम, शब्देऽस्मिन् मनुष्याणां व्यवस्थितः कश्चन समूहविशेष एव विवक्षित इति 'पशूनां समजोऽन्येषां समाज'[१] इत्यनया कोशोक्त्या, 'विशेषतः सर्वविदां समाजे विभूषणं मौनमपण्डितानाम्'[२], 'सतां समाजो भविता सप्तरात्रं सुदुर्लभः'[३]

---

१. अमरकोशे-२.५.४२; २. भर्तृहरिसन्दृब्धनीतिशतके-२.७।
३. पद्मपुराणे उत्तरखण्डे, भागवतमाहात्म्ये-६.८।

इत्यभियुक्तप्रयोगाच्च सुस्पष्टमेव। इदानीन्तनेऽनेहसि 'लोक' इति वक्तव्ये 'समाज' इत्याधुनिकाः समीक्षाचणा व्यवहरन्ति।

अथ का पुनश्चेतनेति ब्रूमः—चेतना हि चित्तत्त्वापरनामधेयं सञ्ज्ञानं बुद्धिर्वा, यथाऽऽह कोशकृदमरसिंहः—

बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः।
प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्तिचेतनाः[१]।।इति।

तस्मादत्र सामाजिकी चेतनेत्यभिहिते कवेः स्वाभिमता समाज-विषयिण्यवधारणा स्वकृतसन्दर्भे तत्प्रतिबिम्बनञ्चाभ्यूहितं भवति।

साहित्यसुधासूतिस्तत्रभवान् भवभूतिर्महावीरचरितोत्तररामचरितमिति श्रीरामायणमाश्रित्य नाटकद्वयं, स्वकल्पनयात्तवस्तुजातं प्रणयकथोपबृंहितं मालती-माधवसञ्ज्ञितं प्रकरणमिति त्रीन्नाट्यसन्दर्भान् रचितवानिति विदन्त्येव गीर्वाणवाणीविचक्षणाः। तत्र प्रकरणस्य सामान्यजनवृत्तविषयत्वादितिहासपुराण-प्रथितसुनिश्चितकथानकपारवश्यविरहाच्च सामाजिकीं चेतनां प्रति प्रतिपद-मेवावधानमादधाति मालतीमाधवे श्रीकण्ठपदलाञ्छनोऽसौ कविरिति नः प्रतिपत्तिरित्यमुमेव ग्रन्थमधिकृत्य संक्षेपेण किञ्चिदभिदध्महे। कस्यचनापि महाकवेः साधारणकवेर्वा काव्यं विशेषतो नाट्यकृतिः स्वान्तःसुखाय सन्दृब्धाऽपि न सामाजिकान् सहृदयानुपेक्षितुं शक्नोतीति रीत्यैव प्रायो महाकाव्येष्वादौ मङ्गलाचरणं रूपकेषु च नान्दीपाठमवश्यतयोपनिबध्नाति कवयिता। नाट्येषु प्रस्तावनायां भरतवाक्ये च विशिष्य सामाजिकानेवोद्दिश्य प्रवर्तेते तदत्र—

'वैनायक्यश्चिरं वो वदनविधुतयः पान्तु चीत्कारवत्यः'।

इति प्रथमनान्दीपद्ये, 'विनायकस्य श्रीगणेशस्य चीत्कारवत्यस्त्रासध्वनिसहिता वदनविधुतयो मुखाकुञ्चनशुण्डाऽऽस्फालनाद्याश्चेष्टा वः सामाजिकान् चिरं पान्तु, दीर्घकालं यावद्रक्षन्त्वित्यभिधयाऽभिदधता कविना विशिष्टो नायको यस्य समाजस्यासौ विनायकस्तस्य चीत्कारवत्यो वदनविधुतयः शेमुषीविच्छित्तयो वः पान्त्विति कश्चन सान्दर्भिको व्यङ्ग्यार्थोऽपि सन्निवेशित इति न समुन्नेतुम-शक्यम्। तदनु च प्रस्तावनायाम्—

---

१. अमरकोशे–१.५.१।

'मारिष! सुविहितानि रङ्गमङ्गलानि, सन्निपतितश्च भगवतः कालप्रियानाथस्य यात्राप्रसङ्गेन नानादिगन्तवास्तव्यो महाजनसमाजः' इति सूत्रधारवचनेन।

'तेन हि तत्प्रयोगादेवात्रभवतः सामाजिकानुपास्महे' इति नटोक्त्या च प्रकरणकर्त्तुरस्याभिमतं सामाजिकानामभ्यर्हितत्वं सुतरामवगम्यते; किन्तु यथाऽस्माभिः प्रागुक्तं भवभूत्यभिमतः समाजः परम्परान्तःपातिनमेवार्थजातं पुरस्करोति, तत्कृतन्नाट्यवस्तु न प्रायः सामान्यप्रेक्षकानावर्जयति, तत्र विद्वांस एवानुरोद्धारः प्रयोगद्रष्टारश्चेति। तत्रैव—

'आदिष्टश्चास्मि विद्वज्जनपरिषदा यथा केनचिदपूर्वप्रकरणेन वयं विनोदयितव्याः'। इति वाक्ये स्वयं नाट्यकृत्, 'महाजनसमाजो विद्वद्गोष्ठीति' पूर्वोदाहृतनिबन्धनेऽस्य टीकाकारो जगद्धरश्च प्रतिपादयन्तौ 'मालतीमाधवे'ऽभिजात-वर्गमेव सामाजिकत्वेन प्रमाणयतः। अपि च पुनरपि तत्रैव सूत्रधारमुखेनाह भवभूतिः—

'मारिष! कतमे ते गुणास्तत्र यानुदाहरन्त्यार्यविदग्धमिश्रा भगवन्तो भूमिदेवाश्च'। अत्रत्या कवेरमुष्य प्रसिद्धा वाचोयुक्तिरपि—

'ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान् प्रति नैष यत्नः'[१]।

इत्येवमाद्या परम्पराप्रियत्वमस्योपश्लोकयति। अयमस्त्यत्राशयः—तत्रभवतो भवभूतेरभिमतः समाजो वर्णाश्रमाचारवतां जनानां विदुषां नीतिविदां मसृणभावनाभिभूतप्रणयिनामेव कश्चन विशिष्टः समूहः। सुविहितेऽपि प्रणयव्यापारेऽत्र शूद्रकसन्दृब्धमृच्छकटिकप्रकरणवन्नास्ति वर्णाश्रमव्यवस्थाशैथिल्यं न च विटचेटशकारादीनामुद्वेजकमसद्वृत्तजातं धर्मशास्त्रोक्तनियमानां वाऽधरीकरणमिति सुव्यक्तमेव। भवभूतिः सामाजिकव्यवस्थाविषये मध्यममार्गगामी। असौ 'मृच्छकटिक'-समनुमोदितां सङ्घर्षपरां भौतिकीं क्रान्तिं न तथाऽनुमनुते, यथा धर्मनीतिपरां वैचारिकीं क्रान्तिम्। अस्याः फलवत्त्वं शिवत्वमेवायं प्रकरणेऽस्मिंस्तत्र

---

१. मालतीमाधवे-१.६।

तत्रोपवीणयति। गतानुगतिकजाड्यजृम्भिते बलादारोपितसम्बन्धविशेषे नास्याभिमतिः, किन्तु सहजाः शालीनाः पैतृकसंस्कारानुगुणा ये सम्बन्धास्तत्रान्तरः कोऽपि हेतुविशेष इति पारम्परीणां मान्यतां समर्थयति। यथोक्तमत्रैव माधवस्य सुहृन्मित्रेण मकरन्देन—

'व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः'[१]।।इति।

'मालतीमाधवा'ख्यरूपकस्य सङ्घटने वरकन्ययोर्विषमविवाहमूला सामाजिकी दुर्व्यवस्थैव समस्यात्वेन समुपयाति, तामेव चात्र कामन्दकीयनीतिद्वारेण समादधाति प्रकरणकृदिति न तिरोहितं प्रेक्षावताम्। विदर्भराजमन्त्रिणो देवरातस्य पद्मावतीश्वरामात्यस्य चासीद् विद्यापरिग्रहस्थानादेव काचनापूर्वा प्रीतिः। ताभ्याञ्चैकदा प्रणयपारवश्यादेव, 'अवश्यमावाभ्यां मिथोऽपत्यसम्बन्धो विधेयो यदि दैवं विषमसन्तानयोगान्नौ समनुगृह्णातीति' कामन्दक्याः सहाध्यायिन्याः समक्षं प्रतिज्ञातमासीत्।

अथ समुपागते समये भूरिवसोर्गृहे मालतीनाम्नी पार्वणेन्दुवदना सुखसदना कन्यका, देवरातस्य च तदनुगुणः सर्वाङ्गसुन्दरो माधवो नाम पुत्रो यथाक्रमं जनिमवापतुः, कालयोगाच्च तौ यौवनमासाद्योद्वाहयोग्यतामुपगतौ। अस्मिन्नेवान्तरे स्वानुजासहचरीममात्यभूरिवसुतनयामनिन्द्यसौन्दर्यमूर्त्तिं स्त्रीरत्नं मालतीं वीक्ष्य पद्मावतीश्वरनर्मसचिवो विगतयौवनो विरूपश्च नन्दनस्तां राजमुखेनाभ्यर्थयामास[२], भूरिवसुश्च राजकोपभयादनिच्छन्नपि—'प्रभवति निजस्य कन्यकाजनस्य महाराज'[३] इति राजानमुदीरयाञ्चक्रे, गुप्तरीत्या च सुगतवर्त्मानुयायिनीं श्रमणां स्वविद्यासहचरीं कामन्दकीं कुण्डिनपुरादान्वीक्षिकीमध्येतुं पित्रा पद्मावतीं प्रापिताय माधवायैव मालतीप्रदानव्यतिकरसङ्घटनाय नियोजयामास।

---

१. मालतीमाधवे–१.२४।

२. तां याचते नरपतेर्नर्मसुहृन्नन्दनो नृपमुखेन।
तत्साक्षात्प्रतिषेधः कोपाय शिवस्त्वयमुपायः।। (मालतीमाधवे–१.११)

३. द्वितीयेऽङ्के प्रवेशके द्वितीयचेटीवाक्यम्।

अत्र सौगतजरत्परिव्राजिकायाः कामन्दक्या अभिधानमपि प्रकृतार्थमनुसरति, यथाऽऽह टीकाकृज्जगद्धरः—

'कामन्दकीयनीतिग्रन्थभेदस्तं वेत्तीति कामन्दकी.....अनया नामव्युत्पत्त्या नीतिवेदिताबोधनेन प्रकृतसिद्धिहेतुतोक्ता तदुत्तेजनिकेति'[1]।

अत्र 'आर्जवं दुर्जनेषु न नीतिः', 'शठे शाठ्यं समाचरेदिति' नीतिवाक्यार्थमभिधायैवोक्तं भवभूतिना—

अनुरागप्रवादस्तु वत्सयोः सार्वलौकिकः।
श्रेयो ह्यस्माकमेवं हि प्रतार्यौ राजनन्दनौ[2]॥

अपि च—

बहिः सर्वाकारप्रगुणरमणीयं व्यवहर-
त्पराभ्यूहस्थानान्यपि तनुतराणि स्थगयति।
जनो विद्वानेकः सकलमभिसन्धाय कपटै-
स्तटस्थः स्वानर्थान् घटयति च मौनञ्च भजते[3]॥

विवाहविषये रूपककर्त्तुरयमसन्दिग्धोऽभ्युपगमो यदनुगुणयोरेव वरकन्ययोः सङ्गमः करणीयस्तत्र जनयितुर्दैवस्य वा रुचिरेव गरीयसी न कस्यचन राज्ञो महाराजस्य वेति पक्षं द्रढयितुकाम एवासौ तत्तत्पात्रमुखेन स्वसिद्धान्तमुपन्यस्यति, यथाऽऽह द्वितीयेऽङ्के कामन्दकी—

'अयि सरले!.....प्रभवति प्रायः कुमारीणां जनयिता दैवञ्च'।

सैव च चतुर्थाङ्केऽपि—

'न खलु महाराजस्य मालती निजा कन्यका। कन्यकाप्रदाने च नृपतयः प्रमाणमिति नैवंविधो धर्माचारसमयः'।

---

१. मालतीमाधवस्य प्रस्तावनानन्तरं प्रथमाङ्कटीकाऽऽरम्भे जगद्धरः।
२. मालतीमाधवे–१.१२।
३. तत्रैव–१.१४।

एतादृग्विवाहस्य गर्हा तदात्वेऽप्यासीदिति द्वितीयेऽङ्के प्रमाणयति लवङ्गिकावचनमिदम्—

'अस्त्येतन्नरेन्द्रवचनानुरोधिनाऽमात्येन नन्दनस्य प्रतिपन्ना मालतीति सकलो जनोऽमात्यं जुगुप्सते'। एवञ्च—

'तस्मिन् वरे दुर्दर्शनेऽतिक्रान्तयौवने किमिति न विचारितममात्येन'।

कामन्दक्यपि—

गुणापेक्षाशून्यं कथमिदमुपक्रान्तमथवा
कुतोऽपत्यस्नेहः कुटिलनयनिष्णातमनसाम्।
इदं त्वैदम्पर्यं यदुत नृपतेर्नर्मसचिवः
सुतादानान्मित्रं भवतु स हि नो नन्दन इति[१]।।

अथ परमगम्भीरा मालत्यपि स्फुटमुदीरयामासास्मिन् विषये तत्रैव—

'मालती (स्वगतम्)—कथमुपहारीकृतास्मि राज्ञस्तातेन...'।...
'राजाराधनं खलु तातस्य गुरुकं न पुनर्मालती'।

चतुर्थे च—

'परिणतमिदानीं मे जीविततृष्णायाः फलम्।
निर्व्यूढञ्च निष्करुणतया तातस्यापि कापालिकत्वम्'।।इति।

भवभूतिस्तु नैतत्समीचीनत्वेनाभ्युपैति। कामन्दकीमुखेनासौ सुव्यक्तं प्रतिपादयति स्वाभिमतम्, तद्यथा—

'इतरेतरानुरागो हि दारकर्म्मणि पाराध्यं मङ्गलम्। गीतश्चायमर्थोऽङ्गिरसा यस्यां मनश्चक्षुषोरनुबन्धस्तस्यामृद्धिरिति'। सन्दर्भेणानेन वरकन्ययोर्विवाहे पारस्परिकं प्रणयमनुगुणत्वञ्च बहुमन्वानोऽप्ययं महाकविर्न जातु स्वच्छन्दतामुपदिशति विषयेऽस्मिन्निति पारम्परीणत्वं शास्त्रीयत्वञ्च समर्थयन्नेवासौ प्रकरणमुपकल्पयामास।

१. मालतीमाधवे–२.७।

मालतीमाधवयोः प्रणय उद्वाहश्च न केवलेन कामेन स्वच्छन्दभोगाभिलाषेण वा सम्पाद्यते, तत्रास्ति दैवस्यापि प्राक्कल्पितं किमप्यनिर्वचनीयं विधानमन्यथा तयोर्जनकयोर्मध्ये तादृशी प्रतिज्ञैव न प्रसज्येत, प्रसक्तायामपि तस्यां कन्यापुत्ररूपमसमसन्ततित्वमेव नोपपद्येतेति सोमपीथिनां मीमांसकानां कुले जातस्य कर्मविधानविचक्षणस्य भवभूतेरयमनुरूपो राद्धान्ताभिनिवेशः। एतस्मादेव कारणादयमन्वयमहिम्ना समुपजातशीलव्रतत्वं कुमारीणामुररीकरोति, यथा माधवं प्रत्याह मकरन्दः—

'न खलु तादृश्यो महाभागधेयाः कुमार्योऽन्यत्रासक्तचेतसो भूत्वा चक्षूरागिण्यो भवन्ति'। (प्रथमेऽङ्के)

अपि च, विधेर्विधानमेवानुकरोत्यभिजनवतां प्रणयिनां मदनोऽपि, यथा—

या कौमुदी नयनयोर्भवतः सुजन्मा
तस्या भवानपि मनोरथबन्धबन्धुः।
तत्सङ्गमं प्रति सखे न हि संशयोऽस्ति
यस्मिन् विधिश्च मदनश्च कृताभियोगः[1]॥

इत्थं मालतीमाधवे प्रतिबिम्बिता श्रीभवभूतेस्सामाजिकी चेतना यद्येकत्र वरकन्ययोः समुद्वाहे पारस्परिकं प्रणयमुपरञ्जयति, तदपरत्र तयोः पारम्परिकमभिजातत्वमपि नोपेक्षाविषयीकरोतीति सुवचमेव।

इदमेव प्रकरणस्य पर्यन्तक्षणे समर्थयत्येषा सौदामिनीवाक्यरचना—

'इदमत्र रमणीयतरं यदमात्ययोर्भूरिवसुदेवरातयोश्चिरात्पूर्णोऽयमितरेतरापत्य-सम्बन्धात्मा मनोरथः'।

सन्दर्भेऽस्मिन्नन्या अपि तदानीन्तनसमाजविषयिण्यः समस्याः कविना समुपस्थापितास्तासां यथायथं समाधानञ्चापि विनिवेशितं किन्त्वत्रास्मदुन्नीता सेयं विषमविवाहसन्दर्भितैव प्राधान्यं भजते।

---

१. मालतीमाधवे–१.३४।

प्रकरणस्यैतस्य भरतवाक्येऽपि कविर्यामाशंसामभिव्यनक्ति तस्यां समाजरक्षणस्यैव ते ते पक्षा आविर्भवन्तीति तत्रभवाञ्छ्रीकण्ठपदलाञ्छनः स्वसमयसमाजस्य संस्काराधानं प्रति न जागरूक इति सर्वमप्यनवद्यम्। भरतवाक्यस्य कलेवरं च यथा—

सन्तः सन्तु निरन्तरं सुकृतिनो विध्वस्तपापोदया
राजानः परिपालयन्तु वसुधां धर्मे स्थिताः सर्वदा।
काले सन्ततवर्षिणो जलमुचः सन्तु क्षितौ पुण्यतो
मोदन्तां धनबन्धुबान्धवसुहृद्गोष्ठीप्रमोदाः प्रजाः।। इति।



# श्राद्धे मांसप्रयोगस्तदीयवेदशास्त्रप्रामाण्यविचारश्च

**श्रीशिवराज आचार्यः कौण्डिन्न्यायनः**
स्वाद्ध्यायशाला, च २.४१९, सरस्वतीमार्गः
लाजिम्पाट्, काष्ठमण्डपमहानगरम्,
नेपालदेशः



**उपक्रमः**

श्राद्धे मांसप्रयोगस्य विषये अत्यर्वाचीनेषु केषुचिद् धर्मशास्त्रनिबन्धेषु इदानीन्तनानां विदुषामाचारेषु च विगानं दृश्यते। तस्मादेतस्मिन् विषये वैदिकशास्त्रप्रामाण्यस्य विषये च स्वमतिपरिशुद्धये विदुषां विचारस्योपलब्धये च यथामति विचारः प्रस्तूयते।

**श्राद्धस्य परिभाषा**

परलोकं गतस्य जनस्य तृप्तये यथाविधि कर्तव्यं हवन-ब्राह्मणभोजन-पिण्डदानादिकं कर्म श्राद्धमित्युच्यते। एतस्मिन् विषयेऽधोलिखितानि वचनानि स्मरणीयानि—

श्रद्धया दीयते किञ्चिद् दैवं ब्रह्माग्नितर्पणम्।
श्राद्धं तु तद् विजानीयात् पुरा प्रोक्तं महर्षिणा[1]।।इति।

प्रेतं पितॄंश्च निर्दिश्य भोज्यं यत् प्रियमात्मनः।
श्रद्धया दीयते यत्र तच्छ्राद्धं परिकीर्तितम्[2]।।इति।

पिण्डदानञ्च यजुषां बह्वृचां द्विजतर्पणम्।
श्राद्धशब्दाभिधेयं स्यादुभयं सामगायिनाम्[3]।।इति।

---

१. स्कन्दमहापुराणे, नागप्रकाशकेन देहल्यां १९८६ खैस्ताब्दे पुनर्मुद्रिते, ५.१.५८.६।

२. निर्णयसिन्धौ तृतीयपरिच्छेदारम्भे पृथिवीचन्द्रोदयधृतं मरीचिवचनम्।

३. व्याघ्रपादस्मृतौ, श्लो. १७३, कालीघट्टनगरे २०१० वैक्रमाब्दे मनसुखरायमोरेण प्रकाशिते स्मृतिसन्दर्भे, चतुर्थभागे, पृ. २५०७।

प्राधान्यं पिण्डदानस्य केचिदाहुर्मनीषिणः।
गयादौ पिण्डमात्रस्य दीयमानत्वदर्शनात्।।
भोजनस्य प्रधानत्वं वदन्त्यन्ये महर्षयः।
ब्राह्मणस्य परीक्षायां महायत्नप्रदर्शनात्।
आमश्राद्धविधानस्य विना पिण्डैः क्रियाविधेः।
तदालभ्याप्यनध्यायविधानश्रवणादपि।।
विद्वन्मतमुपादाय ममाप्येतद् हृदि स्थितम्।
प्राधान्यमुभयोर्यस्मात् तस्मादेष समुच्चयः[१]।।इति।
तत्राग्नौकरणं मुख्यं ब्राह्मणानाञ्च भोजनम्।
पिण्डप्रदानं तत्पश्चात् त्रयमेतत्तु पैतृकम्[२]।।इति।
होमश्च पिण्डदानञ्च तथा ब्राह्मणभोजनम्।
श्राद्धशब्दाभिधेयं स्यादेकस्मिन्नौपचारिकम्[३]।।इति च।

**श्राद्धस्य माहात्म्यम्**

श्राद्धेन परलोकं गतानां तृप्तिर्भवति, श्राद्धस्य कर्तुश्च आयुर्वृद्धिर्भवति, विद्या-धन-पुत्र-राज्य-सुख-स्वर्ग-मोक्षाणाञ्च कामनानुसारं लाभश्च भवति, सर्वपुण्यप्राप्तिर्भवति, सर्वपापनाशश्च भवति। एतस्मिन् विषयेऽधोलिखितानि वचनानि विचार्याणि—

आयुर्विद्यां धनं पुत्रान् राज्यं सौख्यं त्रिविष्टपम्।
मोक्षञ्चाऽपि प्रयच्छन्ति पितरः श्राद्धतर्पिताः[४]।।इति।
सर्वशास्त्रार्थगमनं सर्वतीर्थावगाहनम्।
सर्वयज्ञफलं विन्द्याच्छ्राद्धदानान्न संशयः।।

---

१. कात्यायनस्मृतौ २९.९-१२, कालीघट्टनगरे २००९ वैक्रमाब्दे मनसुखरायमोरेण प्रकाशिते स्मृतिसन्दर्भे, तृतीयभागे, पृ. १३८५।
२. लौगाक्षिस्मृतौ, कालीघट्टनगरे २०१३ वैक्रमाब्दे मनसुखरायमोरेण प्रकाशिते स्मृतिसन्दर्भे, षष्ठे भागे, पृ. ३८३।
३. *निर्णयसिन्धौ* तृतीयपरिच्छेदारम्भे श्रीधरवचनम्।
४. याज्ञवल्क्यस्मृतिवचनं च 'आयुः प्रजाम्' (१.२७०) इत्यादिकमत्रानुसन्धेयम्।

महापातकसंयुक्तो यो युक्तश्चोपपातकैः।
घनैर्मुक्तो यथा भानू राहुमुक्तश्च चन्द्रमाः।।
सर्वपापविनिर्मुक्तः सर्वपापं विलङ्घयेत्।
सर्वसौख्यं स्वयं प्राप्तः श्राद्धदानान्न संशयः।।
सर्वेषामेव दानानां श्राद्धदानं विशिष्यते।
मेरुतुल्यं कृतं पापं श्राद्धदानं विशोधनम्[१]।।इति।
सदाचारपरो विप्रः कृपालुः श्राद्धकृत् तथा।
आत्मनिष्ठोऽथ लोकेषु तारयेत् तरति स्वयम्[२]।।इति।
न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः।
श्राद्धकृत् सत्यवादी च गृहस्थोऽपि हि मुच्यते[३]।।इति च।

**श्राद्धस्यात्यावश्यकत्वम्**

अधिकारिणा जनेनाकर्तव्यं कृत्वाऽपि श्राद्धोपकरणमुपकल्प्याऽऽवश्यकं पितृक्षयाहादिश्राद्धमवश्यमेव कार्यम्, आवश्यकश्राद्धाकरणे नरकपातादिकमनिष्टं भवेदिति शास्त्रं बोधयति। एतस्मिन् विषयेऽधोलिखितानि वचनानि विशेषेण स्मरणीयानि—

अकर्तव्यशतं कृत्वा श्राद्धं कुर्याद् विचक्षणः।
तच्च कर्तव्यतामेति स्वयमुक्तं विरिञ्चिना।
गुरोर्गोहननं कृत्वा ददुः श्राद्धं ययुर्दिवम्।
तेषाञ्च कीर्तनादेव श्राद्धं भवति चाक्षयम्[४]।।इति।
पितृयज्ञात् परो यस्माद् धर्मो नास्ति कथञ्चन।
तस्मात् सर्वप्रयत्नेन शक्त्या कुर्यादमत्सरः[५]।।इति।

---

१. पुण्यपत्तनस्थाऽऽनन्दाश्रममुद्रणालयेन १९२९ खैस्ताब्दे प्रकाशिते स्मृतीनां समुच्चये समाविष्टायामत्रिसंहितायाम्, श्लो. ३६३-३६६।
२. तत्रैव लघ्वाश्वलायनस्मृतौ–२४.३१।
३. याज्ञवल्क्यस्मृतौ–३.२०५।
४. पद्ममहापुराणे, (देहल्यां १९८४ खैस्ताब्दे नागप्रकाशकेन पुनर्मुद्रिते) सृष्टिखण्डे–५०.२७२-२७४।
५. तत्रैव, सृष्टिखण्डे–५०.३११।

नास्तिक्यादथवा लोभात् मोहात् काले यथोदिते।
भक्त्या न श्राद्धदा ये स्युः पच्यन्ते नरकेषु ते[१]।।इति।
पित्रोः श्राद्धपरित्यागाच्चाण्डालत्वमवाप्नुयात्।
सद्य एव न सन्देहस्तस्मात् कुर्यात् तु तत् सदा[२]।।इति।
मृताहं समतिक्रम्य चाण्डालः कोटिजन्मसु।
भवत्येवेति सा प्राह श्रुतिस्तस्मात्तु तच्चरेत्[३]।।इति।
मोहान्न कुरुते श्राद्धं मातापित्रोर्मृतेऽहनि।
निराशाः पितरो यान्ति दुर्गतिञ्चापि वै सुतः।।
अज्ञानाद् वा प्रमादाद् वा यो मृताहमतिक्रमेत्।
स याति नरकं घोरं यावदाभूतसम्प्लवम्[४]।।इति।
न कुर्याद् यो नरः श्राद्धं मातापित्रोर्मृतेऽहनि।
वेतालत्वमवाप्याऽऽशु पश्चान्नरकमश्नुते[५]।।इति च।

**श्राद्धादिधर्मकृत्यस्य यथाशास्त्रमनुष्ठेयत्वम्**

सर्वमेव धर्मकृत्यं शास्त्रविधिमेवानुसृत्य कर्तव्यम्, शास्त्रविधिमुपेक्ष्य कृतं धर्मकृत्यं सिद्धिं फलं वा न ददाति, तस्मात् शास्त्रं सम्यग् विचार्य किं विधिवाक्यमनुसृत्य कीदृशेनाऽधिकारिणा कस्मै फलाय कीदृश्या सामग्र्या कीदृशे देशे कीदृशे काले केन पदार्थक्रमेण कया पद्धत्या धर्मकृत्यविशेषोऽनुष्ठेय इति पूर्वं शास्त्रार्थं सम्यग् ज्ञात्वा यथाशक्त्येव प्रथमद्वितीयादिकल्पमुपादाय यथावत् कर्मणः कर्ता एव जनो व्रतादिकर्मणां फलेऽधिकारी भवति, विधिवत् कृतं कर्म अक्षयं भवति, विधिवत् कृतं स्वल्पमपि कर्म प्रभूतं फलं ददाति, विधिविकलं तु प्रभूतमपि कर्म अत्यल्पं फलं ददाति, विधिहीनस्य कर्मणः फलमसुरा हरन्ति, विधिहीनं

---

१. पद्ममहापुराणे, पातालखण्डे–९६.५६-५७।

२. मार्कण्डेयस्मृतौ, कालीघट्टनगरे २०१३ वैक्रमाब्दे मनसुखरायमोरेण प्रकाशिते स्मृतिसन्दर्भे षष्ठे भागे, पृ. १८४।

३. तत्रैव, लौगाक्षिस्मृतौ, पृ. २२१।

४. लघ्वाश्वलायनस्मृतौ २४.२७-२८, कालीघट्टनगरे मनसुखरायमोरेण २००९ वैक्रमाब्दे प्रकाशिते स्मृतिसन्दर्भे, तृतीये भागे, पृ. १९६६।

५. स्कन्दपुराणे (देहल्यां १९८६ खैस्ताब्दे नागप्रकाशकेन प्रकाशिते) २.१.२६.३२।

स्वमनीषिकया कृतं कर्म विफलं भवतीति च शास्त्रं प्रतिपादयति। तथा हि शास्त्रवचनानि—

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम्॥
तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि[1]॥इति।
देशं कालं युक्तपात्रं युक्तं चायुक्तमेव च।
शास्त्रदृष्ट्या समालोच्य पश्चाद् धर्मं समाचरेत्[2]॥इति।
पूर्वं निश्चित्य शास्त्रार्थं यथावत् कर्मकारकः।
अवेदनिन्दको धीमानधिकारी व्रतादिषु[3]॥इति।
प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते।
न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम्[4]॥इति।
स्नानं दानं जपो होमो देवपूजा द्विजार्चनम्।
अक्षयं जायते सर्वं विधिवच्चेद् भवेत् कृतम्[5]॥इति।
यथोक्तं कुरुते यस्तु विधिवत् सुकृतं नरः।
स्वल्पं मुनिवरश्रेष्ठ मेरुतुल्यं फलं भवेत्॥
विधिहीनं तु यः कुर्यात् सुकृतं मेरुमात्रकम्।
अणुमात्रं तदाप्नोति फलं धर्मस्य नारद[6]॥इति।

---

१. गीतायाम्–१६.२३-२४।
२. लोहितस्मृतौ, श्लो. ५२६-५२७, कालीघट्टनगरे २०१२ वैक्रमाब्दे मनसुखरायमोरेण प्रकाशिते स्मृतिसन्दर्भे, पञ्चमे भागे, पृ. २७५०-२७५१।
३. हेमाद्रिकृते चतुर्वर्गचिन्तामणौ (वाराणस्यां १९८५ खैस्ताब्दे चौखम्भासंस्कृतसंस्थानेन पुनर्मुद्रिते) व्रतखण्डे, पृ. ३२५।
४. मनुस्मृतौ (मन्वर्थमुक्तावल्या समन्वितायाम्, १९४६ खैस्ताब्दे निर्णयसागरमुद्रणालयेन प्रकाशितायाम्) ११.३०।
५. स्कन्दमहापुराणे (देहल्यां १९८७ खैस्ताब्दे नागप्रकाशकेन प्रकाशिते) प्रभासखण्डे २.१३.१०।
६. पद्ममहापुराणे (देहल्यां १९८४ खैस्ताब्दे नागप्रकाशकेन पुनर्मुद्रिते) उत्तरखण्डे ६१.१३-१४।

विधिदृष्टं तु यत् कर्म करोत्यविधिना तु यः।
न फलं किञ्चिदाप्नोति क्लेशमात्रं हि तस्य तत्।।

श्रद्धाविधिसमायुक्तं कर्म यत् क्रियते नृभिः।
शुचिशुद्धेन भावेन तदानन्त्याय कल्पते।।

विधिहीनं भावदुष्टं कृतमश्रद्धया च यत्।
तद्धरन्त्यसुरास्तस्य मूढस्य त्वकृतात्मनः[१]।।इति।

यः कश्चित् कुरुते धर्मं विधिं हित्वा दुरात्मवान्।
न तत्फलमवाप्नोति कुर्वाणोऽपि विधिच्युतः[२]।।इति।

स्वाभिप्रायकृतं कर्म विधिज्ञानविवर्जितम्।
क्रीडाकर्मेव बालानां तत् सर्वं स्यान्निरर्थकम्[३]।।इति च।

**शास्त्रविधिषु च स्वशाखाविधेर्विशेषतोऽनुसरणीयत्वम्**

शास्त्रविधिषु च स्वशाखाविधेरेव विशेषतोऽनुसरणीयत्वम्, स्वशाखा-विधिनाऽऽकाङ्क्षितस्य स्वशाखाविध्यनुकूलस्य चैवान्यस्य धर्मस्यानुष्ठेयत्वञ्च वैदिकोपनयनवेदवेदाङ्गाद्यध्यापनाध्ययनादिव्यवस्थात एवावगम्यते। एतस्मिन् विषये अधोलिखितानि वचनानि च स्मर्तव्यानि—

पारम्पर्यागतो येषां वेदः सपरिबृंहणः।
तच्छाखं कर्म कर्तव्यं तच्छाखाध्ययनं तथा।।

अधीत्य शाखामात्मीयां परशाखां ततः पठेत्।
स्वशाखां तु परित्यज्य शाखारण्डः स उच्यते[४]।।इति।

यच्छाखीयैस्तु संस्कारैः संस्कृतो ब्राह्मणो भवेत्।
तच्छाखाध्ययनं कार्यमन्यथा पतितो भवेत्[५]।।इति।

---

१. योगियाज्ञवल्क्यवचनं हेमाद्रिकृते श्राद्धकल्पे (वाराणस्यां १९८५ खैस्ताब्दे चौखम्भासंस्कृतसंस्थानेन पुनर्मुद्रिते) पृ. ८८३-८८४।
२. लघुहारीतस्मृतौ ३.३, कालीघट्टनगरे २००९ वैक्रमाब्दे मनसुखरायमोरेण प्रकाशिते स्मृतिसन्दर्भे, द्वितीयभागे, पृ. ९७९।
३. उत्तराङ्गिरसे १.१०, कालीघट्टनगरे २०१२ तमे वैक्रमाब्दे मनसुखरायमोरेण प्रकाशिते स्मृतिसन्दर्भे, पञ्चमे भागे, पृ. ३०६६।
४. संस्कारगणपतौ (वाराणस्यां चौखम्बासंस्कृतसिरीज-आफिस इत्युक्तेन निकायेन १९९५ तमे खैस्ताब्दे प्रकाशिते) गृह्यकारिकावचनम्, पृ. ९।
५. तत्रैव वीरमित्रोदयधृतं वसिष्ठवचनम्।

न जातु परशाखोक्तं बुधः कर्म समाचरेत्।
आचरन् परशाखोक्तं शाखारण्डः स उच्यते।।
यः स्वशाखोक्तमुत्सृज्य परशाखोक्तमाचरेत्।
अप्रमाणमृषिं कृत्वा सोऽन्धे तमसि मज्जति[१]।।इति।
स्वशास्त्रे विद्यमाने यः परशास्त्रेण वर्तते।
भ्रूणहत्यासमं तस्य स्वशास्त्रमवमन्यतः[२]।।इति।
बह्वल्पं वा स्वगृह्योक्तं यस्य यावत् प्रकीर्तितम्।
तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत्[३]।।इति।
ऊनो वाऽप्यतिरिक्तो वा यः स्वशाखोदितो विधिः।
तेन सन्तनुयाद् यज्ञं न कुर्यात् पारतन्त्रिकम्[४]।।इति।
यः स्वसूत्रमतिक्रम्य परसूत्रेण वर्तते।
अप्रमाणमृषिं कृत्वा सोऽप्यधर्मेण युज्यते[५]।।इति।
स्वगृह्यचोदितं कर्म द्विजः कुर्वन् कृती भवेत्।
अन्यथा पतितो भूयात् सर्वधर्मबहिष्कृतः[६]।।इति।
सर्वेषामपि पक्षाणां स्वगृह्योक्तं विधीयते।
स्वगृह्योक्तस्य चाभावे ग्रहणं स्वेच्छया भवेत्[७]।।इति।
यावदुक्तं स्वस्वगृह्ये न कृतं तावदेव तत्।
परोक्तं वा विमिश्रं वा कृतमप्यकृतं भवेत्[८]।।इति।

---

१. संस्कारगणपतौ, वसिष्ठवचनम्, पृ. १०, व्याघ्रपादस्मृतौ, श्लो. १७४।
२. बौधायनश्रौतसूत्रे (देहल्यां १९८२ खैस्ताब्दे मुंशीराममनोहरलालेन पुनर्मुद्रिते), २९.८।
३. प्रथमयज्ञपार्श्वे (हस्तलिखिते, वाराणसीस्थसरस्वतीभवनपुस्तकालये वर्तमाने), श्लो. ८२।
४. तत्रैव, श्लो. ८०।
५. विष्णुधर्मोत्तरपुराणे (देहल्यां १९८५ खैस्ताब्दे नागप्रकाशकेन पुनमुद्रिते), २.१२७.४८-४९।
६. नारदीयमहापुराणे (देहल्यां १९८४ खैस्ताब्दे नागप्रकाशकेन पुनर्मुद्रिते) १.२४.१०।
७. श्राद्धकाशिकायाम् (मुम्बय्यां १९७३तमे वैक्रमाब्दे गुजरातीप्रिण्टिङ्गप्रेसनामकेन निकायेन प्रकाशिते भाष्यपञ्चकयुतपारस्करगृह्यसूत्रे समाविष्टायाम्), पृ. ४८३।
८. कातीयमन्त्रभ्रान्तिहरसूत्रे (१९४३ खैस्ताब्दे निर्णयसागरमुद्रणालये मुद्रिते शुक्लयजुर्विधानसूत्रे समाविष्टे), श्लो. ९३।

कल्पमेकं समाश्रित्य प्रवृत्तेऽपि च कर्मणि।
न मिश्रयेत् प्रयोगाँस्तान् कल्पयोरव्यवस्थयो:[१]।।इति च।

**श्राद्धे मांसस्य विधयः**

एतादृश्यां शास्त्रविधिव्यवस्थायां सत्यां तत्तच्छाखाश्राद्धकल्पसूत्रादिषु शास्त्रेषु श्राद्धे मांसप्रयोगस्य विहितताया दर्शनादधुना श्राद्धे मांसस्य प्रयोगस्याऽऽचारे प्रायेणाऽदर्शनाच्च श्राद्धे मांसस्याऽधुना शास्त्रानुसारं प्रयोग: कर्तव्यो न वेति जिज्ञासा भवति। तत्र तावच्छास्त्रेषु श्राद्धे मांसस्य विधय: प्रदर्श्यन्ते। तथा हि—

**तत्तच्छाखागृह्यसूत्राद्युक्तश्राद्धकल्पेषु मांसस्य विधयः**

ये तातृषुरिति चतस्त्रोऽनुद्रुत्य वपां जुहुयात्।
(इति कौषीतकिगृह्यसूत्रे–३.१५.४)

स्थालीपाकोऽवदानमिश्र:। (इति च तत्रैव)

श्वोऽन्वष्टक्यां पिण्डपितृयज्ञावृता गोपशुरजस्थालीपाको वा।
(इति च तत्रैव–३.१५.७)

अथ श्वोभूतेऽष्टका पशुना स्थालीपाकेन च।
(इति आश्वलायनगृह्यसूत्रे–२.४.६)

पशुकल्पेन पशुं संज्ञप्य प्रोक्षणोपाकरणवर्जं वपामुत्खिद्य जुहुयात्।
(इति च तत्रैव–२.४.१३)

अथावदानानां स्थालीपाकस्य च। (इति च तत्रैव–२.४.१४)

अपरेद्युरन्वष्टक्यम्, तस्यैव मांसस्य प्रकल्प्य। (इति च तत्रैव–२.५.१-२)

अपरपक्षे मासि मासि चैवम्। (इति च तत्रैव–२.५.११)

ऊर्ध्वमाग्रहायण्यास्तिस्त्रोऽष्टका:, ऐन्द्री वैश्वदेवी प्राजापत्या पित्र्येति, अपूपमांस-शाकैर्यथासङ्ख्यम्। (इति पारस्करगृह्यसूत्रे–३.३.१-३)

मध्यमा गवा, तस्यै वपां जुहोति वह वपां जातवेद: पितृभ्य इति।
श्वोऽन्वष्टकासु सर्वासां पार्श्वसक्थिसव्याभ्यां परिवृते पिण्डपितृयज्ञवत्।।
(इति च तत्रैव–३.३.८-१०)

---

१. कृष्णभट्टकृतायां निर्णयसिन्धुसंस्कृतटीकायाम् (वाराणस्यां चौखम्बा-संस्कृत-सिरीज-ऑफिस-नामकेन निकायेन प्रकाशिते निर्णयसिन्धौ समाविष्टायाम्), पृ. ११७१।

एकादश्यामयुग्मान् ब्राह्मणान् भोजयित्वा मांसवत्।
(इति च तत्रैव–३.१०.४८)

छागोस्त्रमेषानालभ्य क्रीत्वा लब्ध्वा वा, न स्वयं मृतानाहृत्य पचेत्।
(इत्यादिकं वचनं च कात्यायनश्राद्धकल्पसूत्रे, क.७)

बर्हिरादाय गामुपाकरोति।
(इत्यादिकं वचनजातं बौधायनगृह्यसूत्रे–२.११.७-५५)

एवमेव मासि श्राद्धमपरपक्षस्याऽन्यतमेऽहनि क्रियेत।
(इति वचनं च तत्रैव–२.११.६८)

अष्टकानुकृतिर्मासिकं तत् पुरस्ताद् व्याख्यातम्। (इति च तत्रैव–३.१२.१)

एतावद् गोरालम्भनस्थानमतिथिः पितरो विवाहश्च।
(इति आपस्तम्बगृह्यसूत्रे–३.१०)

श्वोभूते दर्भेण गामुपाकरोति पितृभ्यस्त्वा जुष्टामुपाकरोमीति।
(इत्यादिकं वचनजातं च तत्रैव–२२.३-१२)

श्वोभूते पितृभ्यो गामालभते।
(इत्यादिकं वचनजातं सत्याषाढ-(हिरण्यकेशि) गृह्यसूत्रे–२०.५.१०-२०)

श्वोऽवशिष्टं भक्तं रन्धयित्वा पिण्डानामावृता त्रीन् मांसौदनपिण्डान् निदधाति।
(इति वचनं च तत्रैव २.९.८)

श्वोऽन्यां (गां) कारयेत्, तस्या वपां जुहुयात्।
(इति वचनं च तत्रैव २.९.३-४)

श्वोऽवशिष्टं भक्तं रन्धयित्वा पिण्डानामावृता त्रीन् मांसौदनपिण्डान् निदधाति।
(इति वचनं च तत्रैव–२.९.८)

श्राद्धमपरपक्षे पितृभ्यो दद्यात्, अनुगुप्तं ब्राह्मणान् भोजयेन् नाऽवेदविद् भुञ्जीतेति श्रुतिः यदि गवा पशुना वा कुर्वीत प्रोक्षणमुपपायनं पर्यग्निकरणमुल्मुकहरणं वपाहोममिति, त्रैधं वपां जुहुयात् स्थालीपाकमवदानानि च।
(इति वचनं मानव-मैत्रायणीयगृह्यसूत्रे–२.९.९-१२)

तिस्रोऽष्टकाः पितृदेवत्याः, ऊर्ध्वमाग्रहायण्यास्त्रयस्तामिस्रास्तेष्वष्टमीष्वष्टकायज्ञाः, प्रथमां शाकेन द्वितीयां मांसेन तृतीयामपूपैः।
(इति काठक-(लौगाक्षि) गृह्यसूत्रे–६१.१-३)

अष्टकां करिष्यमाण उपकल्पयते उक्षाणं वा वेहतं व्रीहीनन्नं मधु च सर्पिश्च।
(इति अग्निवेश्यगृह्यसूत्रे-३.२.१)

अथैभ्यो गामुपाकरोति पितृभ्यस्त्वा जुष्टामुपाकरोमीति, अथैनां प्रोक्षति पितृभ्यस्त्वा जुष्टां प्रोक्षामीति, तामत्रैव प्रतीचीनशिरसं दक्षिणापदीं संज्ञपयन्ति।
(इत्यादिकं वचनजातं च तत्रैव-३.२.५)

यदि नित्यश्राद्धं कुर्वन् शशं वा मृगं वा कूर्मं वोपाकरोति श्रपयित्वा हिरण्येन परिक्रीय वा यथाष्टकासु द्वितीयेऽह्नि तथा करोति। (इति च तत्रैव-३.३.२)

उपस्थितेऽन्न ओदनस्य मांसानामिति समवदाय सर्पिर्मिश्रस्य जुहोति।
(इति भारद्वाजगृह्यसूत्रे-२.१७)

गामुपाकृत्य पशुबन्धवत् संज्ञप्त्वोत्खिद्य वपामुद्धृत्य पक्वया तया वह वपामिति होमं चामनन्ति। (इति वचनं वैखानसगृह्यसूत्रे-४.३)

चतुरष्टको हेमन्तस्ताः सर्वाः समांसाश्चिकीर्षेदिति कौत्सः।
(इति गोभिलगृह्यसूत्रे-३.१०.३-४)

तैष्या ऊर्ध्वमष्टम्यां गौः।
(इत्यादीनि वचनानि च तत्रैव-३.११.१६; ४.४.२४)

छागोस्रमेषा आलभ्याः।
(इत्यादिकं वचनजातं च गोभिलीयश्राद्धकल्पसूत्रे, क. ६.६-७.६)

मध्यमायां गौः। (इत्यादीनि वचनानि खादिरगृह्यसूत्रे-३.४.१-३; ५.३७)

ऊर्ध्वमाग्रहायण्यास्त्रयोऽपरपक्षास्तेषामेकैकस्मिन्नेकैकाष्टका भवति।

शाकाष्टका मांसाष्टकाऽपूपाष्टकेति तत्र शाक-मांसाऽपूपानि हवींष्योदनं च॥
(इत्यादिकं वचनजातं जैमिनीयगृह्यसूत्रे-२.३)

गां वेदयन्ते, कुरुतेत्याह, तस्या दक्षिणमर्धं ब्राह्मणान् भोजयति सव्यं पितॄन्।
(इत्यादिकं वचनजातं कौशिकसूत्रे-८३.३३-३५)

पुरा विवाहात् समांसः पिण्डपितृयज्ञः। (इति च तत्रैव-८४.१२)

अष्टकायामष्टकाहोमाञ् जुहुयात्, तस्या हवींषि धानाः करम्भः शष्कुल्यः पुरोडाश उदौदनः क्षीरौदनस्तिलौदनो यथोपपादिपशुः, सर्वेषां हविषां समुद्धृत्य, दर्व्या जुहुयात् प्रथमा ह व्युवास सेति पञ्चभिः। (इति च तत्रैव-१३८.१-४)

अतस्तिलैर्मांसैः शाकैर्यूषैः कृसरापायसाऽपूपैर्लाजैर्भक्षैरिक्षुविकारैः पानैर्मधुना घृतेन दध्ना पयसा चैव प्रभूतमिष्टतोऽन्नं दद्यादनसूयः।

(इति अथर्वपरिशिष्टेषु श्राद्धविधौ–४४.३.१०)

नियुक्तस्तु यतिः श्राद्धे दैवे वा मांसमुत्सृजेत्।

यावन्ति पशुरोमाणि तावन् नरकमृच्छति।। (इति वासिष्ठधर्मसूत्रे–११.३४)

पिता पितामहश्चैव तथैव प्रपितामहः।

उपासते सुतं जातं शकुन्ता इव पिप्पलम्।।

मधुमांसैश्च शाकैश्च पयसा पायसेन च।

एष नो दास्यति श्राद्धं वर्षासु च मघासु च।। (इति च तत्रैव–११.३९-४०)

स्नेहवति त्वेवाऽन्ने तीव्रतरा पितॄणां प्रीतिर्द्राघीयांसं कालम्, तथा धर्माहृतेन द्रव्येण तीर्थे प्रतिपन्नेन, संवत्सरं गव्येन प्रीतिः, भूयांसमतो माहिषेण, एतेन ग्राम्यारण्यानां पशूनां मांसं मेध्यं व्याख्यातम्, खड्गोपस्तरणे खड्ग-मांसेनाऽऽनन्त्यं कालम्, तथा शतबलेर्मत्स्यमांसेन, वाध्रीणसस्य च।

(इत्यापस्तम्बधर्मसूत्रे–२.७.१.३३; २.७.२.३)

तेषामुत्तमं लोहेनाऽजेन कुर्यात्। (इति च तत्रैव–२.८.१.१४)

नैयमिकं तु श्राद्धं स्नेहवदेव दद्यात्, सर्पिर्मांसमिति प्रथमः कल्पः, अभाव तैलं शाकमिति। (इति च तत्रैव–२.८.२.१३-१५)

अन्नदधिघृतमधुमांसैः कर्षूत्रयं पूरयित्वा एतत् त इति जपेत्, एवं मृताहे प्रतिमासं कुर्यात्। (इति विष्णुधर्मसूत्रे–२१.१०-११)

अष्टकासु दैवपूर्वं शाकमांसापूपैः श्राद्धं कृत्वाऽन्वष्टकास्वष्टकावद् वह्नौ हुत्वा।

(इति च तत्रैव–७४.१)

दध्ना मांसेन पयसा प्रत्येकं कर्षूत्रयं पूरयित्वा जपेत्।

(इति च तत्रैव–७४.७-८)

(प्रीयन्ते) द्वौ मासौ मत्स्यमांसेन। (इत्यादिकं च तत्रैव–८०.१-१४)

तिलमाषव्रीहियवोदकदानैर्मासं पितरः प्रीणन्ति, मत्स्यहरिणरुरुशशकूर्म-वराहमेषमांसैः संवत्सराणि, गव्यपयःपायसैर्द्वादशवर्षाणि, वार्ध्रीणसेन मांसेन कालशाक-छाग-लोह-खड्गमांसैर्मधुमिश्रैश्चाऽऽनन्त्यम्।

(इति गौतमधर्मसूत्रे स्मृतिसन्दर्भे, चतुर्थे भागे, पृ. १९००, मिहिरचन्द्रसम्पादितासु अष्टादशसु स्मृतिषु, देहलीस्थेन नागप्रकाशकेन १९९० तमे खैस्ताब्दे प्रकाशितासु, पृ. ५१७, सव्याख्येषु गौतमधर्मसूत्रसंस्करणेषु तु एतन्न दृश्यते)

भक्ष्या: प्रतुदा विष्किरा जालपादा मत्स्याश्चाऽविकृता:, वध्याश्च धर्मार्थे।
(इति च तत्रैव, पृ. १९०३, २.८.३५-३७)

**मनुस्मृत्यादिषु स्मृतिषु श्राद्धे मांसप्रयोगस्य विधयः**

पितॄणां मासिकं श्राद्धमन्वाहार्यं विदुर्बुधा:।
तच्चाऽऽमिषेण कर्तव्यं प्रशस्तेन प्रयत्नत:॥
(इति मनुस्मृतौ–३.१२३)

भक्ष्यं भोज्यं च विविधं मूलानि च फलानि च।
हृद्यानि चैव मांसानि पानानि सुरभीणि च॥
उपनीय तु तत् सर्वं शनकै: सुसमाहित:।
परिवेषयेत् प्रयतो गुणान् सर्वान् प्रचोदयन्॥
(इति च तत्रैव–३.२२७-२२८)

मुन्यन्नानि पय: सोमो मांसं यच्चाऽनुपस्कृतम्।
अक्षारलवणं चैव प्रकृत्या हविरुच्यते॥ (इति च तत्रैव–३.२५७)

तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा।
दत्तेन मासं तृप्यन्ति विधिवत् पितरो नृणाम्॥
द्वौ मासौ मत्स्यमांसेन त्रीन् मासान् हारिणेन तु।
औरभ्रेणाऽथ चतुर: शाकुनेनाऽथ पञ्च वै॥
षण्मासांश्छागमांसेन पार्षतेन च सप्त वै।
अष्टावेणस्य मांसेन रौरवेण नवैव तु॥
दश मासांस्तु तृप्यन्ति वराहमहिषामिषै:।
शशकूर्मयोस्तु मांसेन मासानेकादशैव तु॥
संवत्सरं तु गव्येन पयसा पायसनेन च।
वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी॥

कालशाकं महाशल्काः खड्ग-लोहाऽऽमिषं मधु।
आनन्त्यायैव कल्प्यन्ते मुन्यन्नानि च सर्वशः॥
(इति च तत्रैव–३.२६७-२७२)

क्रीत्वा स्वयं वाऽप्युत्पाद्य परोपकृतमेव वा।
देवान् पितॄंश्चाऽर्चयित्वा खादन् मांसं न दुष्यति॥
(इति च तत्रैव–५.३२)

नियुक्तस्तु यथान्यायं यो मांसं नाऽत्ति मानवः।
स प्रेत्य पशुतां याति सम्भवानेकविंशतिम्॥
(इति च तत्रैव–५.३५)

मधुपर्के च यज्ञे च पितृदैवतकर्मणि।
अत्रैव पशवो हिंस्या नाऽन्यत्रेत्यब्रवीन् मनुः॥
एष्वर्थेषु पशून् हिंसन् वेदतत्त्वार्थविद् द्विजः।
आत्मानं च पशुं चैव गमयत्युत्तमां गतिम्॥
(इति च तत्रैव–५.४१-४२)

या वेदविहिता हिंसा नियताऽस्मिंश्चराचरे।
अहिंसामेव तां विद्याद् वेदाद् धर्मो हि निर्बभौ॥
(इति च तत्रैव–५.४४)

प्राणात्यये तथा श्राद्धे प्रोक्षिते द्विजकाम्यया।
देवान् पितॄन् समभ्यर्च्य खादन् मांसं न दोषभाक्॥
(इति याज्ञवल्क्यस्मृतौ–१.१७९)

हविष्यान्नेन वै मासं पायसेन तु वत्सरम्।
मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः॥
ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम्।
मासवृद्ध्याऽभितृप्यन्ति दत्तैरिह पितामहाः॥
खड्गामिषं महाशल्कं मधु मुन्यन्नमेव वा।
लौहामिषं महाशाकं मांसं वार्ध्रीणसस्य च॥

यद् ददाति गयास्थश्च सर्वमानन्त्यमश्नुते।
तथा वर्षत्रयोदश्यां मघासु च विशेषतः।।

(इति च तत्रैव–१.२५८-२६१)

स्थालीपाकं पशुस्थाने कुर्याद् यद्यानुकल्पितम्।
श्रपयेत् तं सवत्सायास्तरुण्या गोः पयस्तथा।।

(इति कात्यायनस्मृतौ–१७.२५)

क्षालनं दर्भकूर्चेन सर्वत्र स्रोतसां पशोः।
तूष्णीमिच्छाक्रमेण स्याद् वपार्थे पार्णदारुणी।।

(इत्यादिकानि च वचनानि, तत्रैव–२९.१-१४)

कालशाकं सशल्कांश्च मांसं वार्ध्रीणसस्य च।
खड्गमांसं तथाऽनन्तं यमः प्रोवाच धर्मवित्।।

(इति शङ्खस्मृतौ–१४.२६)

द्वौ मासौ मत्स्यमांसेन त्रिमासान् हारिणेन च।
औरभ्रेणाऽथ चतुरः शाके(शे)हेन (नेह) च पञ्च तु।।
षण् मासांश्छागमांसेन रौरवेण च (न)वै (न)व तु।
दशमासांस्तु तृप्यन्ति वराहमहिषाविकैः।।
शशर्णवृकयोर्मांसैर्मासानेकादशैव तु।
संवत्सरन्तु गव्येन पयसा पायसेन च।।
सदैव सस्यमांसेन (?) तृप्तिर्द्वादशवार्षिकी।
कालशाकं महाशाकं ख(ड्)गलोहामिषं मधु।।
अनन्तान्येव कल्पन्ते मूलान्यन्यानि सर्वशः।।
कृत्वा लब्ध्वा स्वयं वाऽथ मृतानाहृत्य वै द्विजाः।
दद्याच्छ्राद्धे प्रयत्नेन दत्तस्याऽक्षयमुच्यते।।

(इति औशनसस्मृतौ–३.१३९-१४४)

न किञ्चिद् वर्जयेत् श्राद्धे नियुक्तस्तु द्विजोत्तमः।
न मांसं प्रतिषेधेत न चान्यस्यान्नमीक्षयेत्।।

यो नाश्नाति द्विजो मांसं नियुक्तः पितृकर्मणि।
स प्रेत्य पशुतां याति सन्ततामेकविंशतिम्।।इति च।
(तत्रैव ५.६५-६६)

नाश्नीयाद् ब्राह्मणो मांसमनियुक्तः कथञ्चन।
क्रतौ श्राद्धे नियुक्तो वा अनश्नन् पतति द्विजः।।इति।
(व्यासस्मृतौ–३.५३-५४)

व्याधेभ्यो मेध्यमांसानि ग्राह्याणि द्रव्यपर्ययैः।
पित्रर्थं स्वगृहे हिंसन् खादन् मांसं न पापभाक्।।इति।
(प्रजापतिस्मृतौ, श्लो. १४३)

विना मांसेन यच्छ्राद्धं कृतमप्यकृतं भवेत्।
क्रव्यादाः पितरो यस्मादलाभे पायसादिकम्।।इति।
(ब्रह्मप्रोक्तयाज्ञवल्क्यसंहितायाम्–४.९२)

अतो मांसं प्रवक्ष्यामि श्राद्धार्थं सम्प्रकल्पयेत्।
मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः।।
ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम्।
मासवृद्ध्याऽभितृप्यन्ति उक्तमेवं पितामहैः।।
खड्गामिषं महाशल्कं त्रिमधून्यन्नमेव च।
लोहामिषं कालशाकं मांसं वार्ध्रीणमक्षयम्।।इति च।
(तत्रैव–४.१५३-१५५)

एवं पञ्च मखान् कुर्वन् मधुमांसाऽऽज्यपायसैः।
स सन्तर्प्य पितॄन् देवान् मनुष्यान् स्वर्गमाप्नुयात्।।इति।
(बृहत्पराशरस्मृतौ–६.८०-८१[१])

ये खण्ड-मांस-मधु-पायस-सर्पिरन्नैर्देशे च कालसहिते च सुपात्रदत्तैः।
प्रीणन्ति देवमनुजान् पितृवंशजातान् तेषां नृणां तु पितरो वरदा भवन्ति।।इति च।
(तत्रैव–७.३९८[२])

---

१. स्मृतिसन्दर्भे द्वितीये भागे (कालीघट्टनगरे, २००९ तमे वैक्रमाब्दे मनसुखरायमोरेण प्रकाशिते) पृ. ७६२।
२. तत्रैव, पृ. ८२९।

**पुराणेषु श्राद्धे मांसस्य विधयः**

उक्तानां महास्मृतीनामनुस्मृतीनाञ्च पुराणप्रतिपादितं कुमारिलभट्टेन—

'वेदेनैवाऽभ्यनुज्ञाता येषामेव प्रवक्तृता।
नित्यानामभिधेयानां मन्वन्तरयुगादिषु।।
तेषां विपरिवर्तेषु कुर्वतां धर्मसंहिताः।
वचनानि प्रमाणानि नाऽन्येषामिति निश्चयः'[१]।।

इति स्पष्टीकृतञ्च सिद्धान्तमनुसृत्य मन्वन्तरान्तर्गततत्तत्कृतयुगादिषु ऋषिभिः प्रवर्तितत्वात् तेषां प्रायेण कृतयुगादिविषयत्वे कुशकाशावलम्बनन्यायेन कथञ्चिद् वर्णयितुं शक्येऽपि पुराणानां सूतप्रोक्तसंहितारूपाणां तु—

'प्रायेणाल्पायुषः सभ्याः कलावस्मिन् युगे जनाः।
मन्दाः सुमन्दमतयो मन्दभाग्या ह्युपद्रुताः।।
भूरीणि भूरिकर्माणि श्रोतव्यानि विभागशः।
अतः साधोऽत्र यत् सारं समुद्धृत्य मनीषया।।
ब्रूहि नः श्रद्दधानानां येनाऽऽत्मा सम्प्रसीदति'[२]।।
'कलौ दुर्मेधसां पुंसां धर्माचारोज्झितात्मनाम्।
हिताय विदधे शम्भुः पुराणाख्यं सुधारसम्।।
मन्वन्तरेषु सर्वेषु द्वापरे द्वापरे युगे'[३]।।
'प्रादुःकरोति धर्मार्थी पुराणानि यथाविधि।
द्वापरे-द्वापरे विष्णुर्व्यासरूपेण सर्वदा।।
वेदमेकं तु बहुधा कुरुते हितकाम्यया।।
अल्पायुषोऽल्पबुद्धींश्च विप्रान् ज्ञात्वा कलावथ।
पुराणसंहितां पुण्यां कुरुतेऽसौ युगे युगे'[४]।।

---

१. तन्त्रवार्तिके १.३.७ (आनन्दाश्रममुद्रणालयेन १९७० खैस्ताब्दे पुनर्मुद्रिते श्रीमज्जैमिनिप्रणीते मीमांसादर्शने), पृ. १२२।
२. भागवते–१.१.१०-११।
३. शिवमहापुराणे (देहल्यां १९८६ खैस्ताब्दे नागप्रकाशकेन पुनर्मुद्रिते), ५.१३.३३।
४. देवीभागवते–१.३.१८-२०। (वाराणसीस्थ-ठाकुरप्रसाद-एण्ड-सन्स-बुक्सेलर-प्रकाशिते)

इत्यादीनि पुराणवचनान्येव विचार्य कलियुगविषयत्वस्यैव स्वीकार्यत्वाद् इदानीं कलियुगे श्राद्धे मांसप्रयोगस्य विधेर्विचाराय तत्र तत्र पुराणेषु प्रतिपादितेषु श्राद्धविधिषु श्राद्धे मांसप्रयोगस्य विधिना सम्बद्धानि वचनानि सङ्क्षेपेणाऽध उपस्थाप्यन्ते—

मासं तृप्तिस्तथाऽऽरण्यैः कन्दमूलफलादिभिः।
मत्स्यैर्मासद्वयं मार्गैस्त्रयं वै शाकुनेन च॥
चतुरो रौरवेणाऽथ पञ्च षट् छागलेन तु।
कूर्मेण सप्त चाष्टौ च वाराहेण नवैव तु॥
मेषमांसेन दश च माहिषैः पार्व(र्ष?)तैः शिवैः।
संवत्सरं तु गव्येन पयसा पायसेन वा॥
वार्ध्रीनसस्य मांसेन तृप्तिर्द्वादशवार्षिकी।
खड्गमांसं कालशाकं लोहितच्छागलो मधु॥
महाशल्काश्च वर्षासु मघाश्राद्धमथाऽक्षयम्॥ (इति अग्निपुराणे[1])
हविष्यान्नेन वै मासं पायसेन तु वत्सरम्।
मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः॥
ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम्।
मासवृद्ध्याऽभितृप्यन्ति दत्तैरेव पितामहाः॥
खड्गामिषं महाशल्कं मधुयुक्तान्नमेव च।
लोहामिषं कालशाकं मांसं वार्ध्रीणसस्य च॥
यद् ददाति गयास्थश्च सर्वमानन्त्यमश्नुते।
तथा वर्षात्रयोदश्यां मघासु च न संशयः॥ (इति च तत्रैव[2])
द्वौ मासौ मत्स्यमांसेन त्रीन् मासान् हारिणेन तु।
औरभ्रेणाऽथ चतुरः शाकुनेनेह पञ्च तु॥
षण्मासांश्छागमांसेन पार्षतेनाऽथ सप्त वै।
अष्टावेणस्य मांसेन रौरवेण नवैव तु॥

---

१. अग्निपुराणे–११७.४४-४८ (नागप्रकाशकेन देहल्यां १९८५ खैस्ताब्दे पुनर्मुद्रिते)।
२. तत्रैव–१६३.३०-३३।

दश मासांस्तु तृप्यन्ति वराहमहिषामिषैः।
शशकूर्मयोर्मांसेन मासानेकादशैव तु॥
संवत्सरं तु गव्येन पयसा पायसेन तु।
वाध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी॥
कालशाकं महाशल्कं खड्गलोहामिषं मधु।
आनन्त्यायैव कल्पन्ते मुन्यन्नानि च सर्वशः॥
क्रीत्वा लब्ध्वा स्वयं वाऽथ मृतानाहृत्य वा द्विजः
दद्याच्छ्राद्धे प्रयत्नेन तदस्याऽक्षयमुच्यते॥ (इति कूर्मपुराणे[१])
अथ पिण्डावशिष्टान्नं विधिना भोजयेद् द्विजान्।
मांसान्यपूपान् विविधान् दद्यात् कृसरपायसम्॥ (इति च तत्रैव[२])
न किञ्चिद् वर्जयेच्छ्राद्धे नियुक्तस्तु द्विजोत्तमः।
न मांसं प्रतिषेधेत न चान्यस्यान्नमीक्षयेत्॥
यो नाश्नाति द्विजो मांसं नियुक्तः पितृकर्मणि।
स प्रेत्य पशुतां याति सम्भवानेकविंशतिम्॥ (इति च तत्रैव[३])
एकादशाहे यः पिण्डस्तं दद्यादामिषेण तु।
सिद्धान्नं तस्य दातव्यं कृशराः पूपकाः पयः॥
(इति मूलगरुडपुराणे[४])
यथाचारं प्रदेयञ्च मधुमांसादिकं तथा।
पाकादिञ्च प्रशंसेरन् वाग्यता धृतभाजनाः॥
(इति नारदीयमहापुराणे[५])
हविष्यान्नेन वै मासं पायसेन तु वत्सरम्।
मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः॥

---

१. कूर्मपुराणे २.२०.४०-४५। (वाराणसीस्थ-सर्वभारतीयकाशिराजन्यासेन २०२८ वैक्रमाब्दे प्रकाशिते)।
२. तत्रैव–२.२२.५४;
३. तत्रैव–२.२२.६७-६८।
४. गरुडमहापुराणे–२.३४.५२ (देहल्यां १९८४ खैस्ताब्दे नागप्रकाशकेन पुनर्मुद्रिते)।
५. नारदीयमहापुराणे–१.२८.६२-६३ (देहल्यां १९८४ खैस्ताब्दे नागप्रकाशकेन पुनर्मुद्रिते)।

ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम्।
मासवृद्ध्याभितृप्यन्ति दत्तैरिह पितामहा:।।
खड्गामिषं महाक(श)ल्कं मधु मुन्यन्नमेव च।
लोहामिषं महाशाकं मांसं वार्ध्रीणसस्य च।।
यो ददाति गयास्थश्च सर्वमानन्त्यमश्नुते।
तथा वर्षात्रयोदश्यां मघासु च विशेषत:।। (इति च तत्रैव[1])
खड्गिनामामिषं चैवमन्नं श्यामाकशालय:।
यवनीवारमुद्गेक्षुशुक्लपुष्पफलानि च।।
वल्लभानि प्रशस्तानि पितॄणामिह सर्वदा।
दर्भा माष: षष्टिकान्नं गोक्षीरं मधुसर्पिषी।। (इति पद्मपुराणे[2])
अन्नं च सदधिक्षीरं गोघृतं शर्करान्वितम्।
मासं प्रीणाति वै सर्वान् पितॄनित्याह पद्मज:।।
द्वौ मासौ मत्स्यमांसेन त्रीन् मासान् हारिणेन तु।
औरभ्रेणाऽथ चतुर: शाकुनेनाऽथ पञ्च वै।।
वराहस्य तु मांसेन षण्मासं तृप्तिरुत्तमा।
सप्त लोहस्य मांसेन तथाऽष्टावाजकेन तु।।
पृषतस्य तु मांसेन तृप्तिर्मासान् नवैव तु।
दशमासांश्च तृप्यन्ते वराहमहिषामिषै:।।
शशकूर्मयोस्तु मांसेन मासानेकादशैव तु।
संवत्सरं तु गव्येन पयसा पायसेन वा।।
सौकरेण तु तृप्यन्ते मासान् पञ्चदशैव तु।
वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी।
कालशाकेन चाऽऽनन्त्यं खड्गमांसेन चैव हि।।
यत्किञ्चिन्मधुना मिश्रं गोक्षीरं दधि पायसम्।।
दत्तमक्षयमित्याहु: पितर: पूर्वदेवता:।। (इति च तत्रैव[3])

---

१. नारदीयमहापुराणे–१.५१.१४१.१४५।
२. पद्ममहापुराणे (देहल्यां १९८४ खैस्ताब्दे नागप्रकाशकेन पुनर्मुद्रिते) सृष्टिखण्डे–९.६२-६३।
३. तत्रैव–९.१५२-१५९।

यद्यवश्यमियं वध्या श्राद्धरूपेण योज्यताम्।
श्राद्धे नियोज्यमानायां पापं नश्यति नो ध्रुवम्।। (इति च तत्रैव[1])
मार्गेण चाऽथ मांसेन धान्येन विविधेन च।
तृप्तिं प्रयच्छ विप्राणां श्राद्धदानेन सुव्रत।।
लक्ष्मणं चाऽब्रवीद् रामो मेध्यमाहर मे मृगम्।
शुद्धेक्षणं च शशकं कृष्णशाकं तथा मधु।।
जम्बीराणि च मुख्यानि मूलानि विविधानि च।
पक्वानि च कपित्थानि फलान्यन्यानि यानि च।।
तान्याहरस्व वै श्राद्धे क्षिप्रमेवास्तु लक्ष्मण।
तथा तत् कृतवान् सर्वं रामादेशाच्च राघवः।। (इति च तत्रैव[2])
गोधा कूर्मः शशः खड्गः सल्लकश्चेति सत्तमाः।
भक्ष्यान् पञ्चनखान् नित्यं मनुराह प्रजापतिः।।
मत्स्यान् सशल्कान् भुञ्जीत मांसं रौरवमेव च।
निवेद्य देवताभ्यस्तु ब्राह्मणेभ्यश्च नाऽन्यथा।।
मयूरं तित्तिरं चैव कपोतञ्च कपिञ्जलम्।
वार्ध्रीणसं वकं भक्ष्यं मीनं हंसं पराजितम्।।
शफरीं सिंहतुण्डं च तथा पाठीनरोहितौ।
मत्स्याश्चैते समुद्दिष्टा भक्षणीया द्विजोत्तमाः।।
प्रोक्षितं भक्षयेदेषां मांसं च द्विजकाम्यया।
यथाविधि प्रयुक्तञ्च प्राणानामपि चात्यये।।
भक्षयन्नेव मांसानि शेषभोजी न लिप्यते।
औषधार्थमशक्तो वा नियोगाद् यज्ञकारणात्।।
आमन्त्रितश्च यः श्राद्धे दैवे वा मांसमुत्सृजेत्।
यावन्ति पशुरोमाणि तावन्नरकमृच्छति।। (इति च तत्रैव[3])

१. पद्ममहापुराणे, सृष्टिखण्डे–१०.५३-५४; २. तत्रैव–३३.८०, ८३-८५।
३. तत्रैव स्वर्गखण्डे–५६.३६-४२।

पितृदेवाऽवशेषे च भक्ष्यं मांसं न दूषितम्।
पञ्चपर्वसु त्याज्यञ्च सर्वेषां मनुरब्रवीत्।। (इति ब्रह्मवैवर्तपुराणे[1])
तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलैस्तथा।
दत्तेन मासं प्रीयन्ते श्राद्धेन हि पितामहाः।।
मत्स्यैः प्रीणन्ति द्वौ मासौ त्रीन् मासान् हारिणेन तु।
शाशेन चतुरो मासान् पञ्च प्रीणाति शाकुनैः।।
वाराहेण तु षण्मासान् छागलं सप्तमासिकम्।
अष्टमासिकमित्युक्तं यच्च पार्व(र्ष)तकं भवेत्।।
रौरवेण तु प्रीयन्ते नव मासान् पितामहाः।
गवयस्य तु मांसेन मासानेकादशैव तु।।
श्राद्धे तृप्तिप्रदं गव्यं पयः संवत्सरं द्विजाः।
आनन्त्याय भवेत् तद्वत् खड्गमांसं पितृक्षये।।
पायसं मधुसर्पिर्भ्यां छायायां कुञ्जरस्य च।
कृष्णच्छागस्य मांसेन तृप्तिर्भवति शाश्वती।।
अत्र गाथाः पितृगीताः कीर्तयन्ति पुराविदः।
तास्तेऽहं कीर्तयिष्यामि यथावत् सन्निबोध मे।।
अपि नः स कुले या(जा)याद् यो नो दद्यात् त्रयोदशीम्।
आजेन सर्वलोहेन वर्षासु च मघासु च।। (इति ब्रह्माण्डपुराणे[2])

इक्ष्वाकोर्विकुक्षिं प्रति वचनम्—

मांसमानय श्राद्धे त्वं मृगान् हत्वा महाबल।
श्राद्धं मम तु कर्तव्यमष्टकानां न संशयः।। (इति च तत्रैव[3])

---

१. ब्रह्मवैवर्तपुराणे (देहल्यां १९८६ खैस्ताब्दे मोतीलालबनारसीदासेन पुनर्मुद्रिते) ४.८५.२६।

२. ब्रह्माण्डमहापुराणे (वाराणस्यां १९८३ खैस्ताब्दे कृष्णदासाऽकादमी-पुनर्मुद्रिते), उपोद्घातपादे–१९.३-११।

३. तत्रैव, उपोद्घातपादे–६३.१२।

इक्ष्वाकुस्तु विकुक्षिं वै अष्टकायामथाऽऽदिशत्।
मांसमानय श्राद्धार्थं शशान् हत्वा महाबल।। (इति ब्रह्मपुराणे[1])
मासं तृप्तिः पितॄणां तु हविष्यान्नेन जायते।
मासद्वयं मत्स्यमांसैस्तृप्तिं यान्ति पितामहाः।।
त्रीन् मासान् हारिणं मांसं विज्ञेयं पितृतृप्तये।
पुष्णाति चतुरो मासान् शशस्य पिशितं पितॄन्।।
शाकुनं पञ्च वै मासान् षण्मासान् शूकरामिषम्।
छागलं सप्त वै मासानैणेयं चाऽष्टमासकान्।।
करोति तृप्तिं नव वै रुरुमांसं न संशयः।
गव्यं मांसं पितृतृप्तिं करोति दशमासिकीम्।।
तथैकादशमासांस्तु औरभ्रं पितृतृप्तिदम्।
संवत्सरं तथा गव्यं पयः पायसमेव च।।
वार्ध्रीणमांसं सल्लोहं कालशाकं तथा मधु।
रोहितामिषमन्नं च दत्तान्यात्मकुलोद्भवैः।।
अनन्तं वै प्रयच्छन्ति तृप्तियोगं सुतांस्तथा।
पितॄणां नाऽत्र सन्देहो गयाश्राद्धं च भो द्विजाः।। (इति च तत्रैव[2])
छागमांसं वार्तिकं च तैत्तिरं शशकामिषम्।
शिवालावकराजीवमांसं श्राद्धे नियोजयेत्।।
वार्ध्रीणसं रक्तशिवं लोहं शल्कसमन्वितम्।
सिंहतुण्डं च खड्गं च श्राद्धे योज्यं तथोच्यते।। (इति च तत्रैव[3])
शशकः कच्छपो गोधा श्वाविन् मत्स्योऽथ शल्यकः।
भक्ष्याश्चैते तथा वर्ज्यौ ग्रामसूकर-कुक्कुटौ।।

---

१. ब्रह्ममहापुराणे (देहल्यां १९८५ खैस्ताब्दे नागप्रकाशकेन पुनर्मुद्रिते) ५.४८-४९।
२. तत्रैव-१११.२३-३०।
३. तत्रैव-११२.११८-१२०।

पितृदेवादिशेषं च श्राद्धे ब्राह्मणकाम्यया।
प्रोक्षितं चौषधार्थं च खादन् मांसं न दुष्यति।। (इति च तत्रैव[1])
तिस्रोऽष्टकास्तु कर्तव्या मध्यावर्ता(र्षा) चतुर्थिका।
शाकपायसपूपैस्तु मांसेन तु चतुर्थिका।। (इति भविष्यपुराणे[2])
प्राणात्यये प्रोक्षितं च श्राद्धे च द्विजकाम्यया।
पितॄन् देवांश्चार्पयित्वा भुञ्जन् मांसं न दोषभाक्।। (इति च तत्रैव[3])
प्राचीनावीतमुदकं तिलाः सव्याङ्गमेव च।
दर्भा मांसं च पाठीनं गोक्षीरं मधुरा रसाः।।
खड्गलोहामिषमधुकुशश्यामाकशालयः।
यवनीवारमुद्गेक्षुशुक्लपुष्पघृतानि च।
वल्लभानि प्रशस्तानि पितॄणामिह सर्वदा।। (इति मत्स्यपुराणे[4])
अन्नं तु सदधिक्षीरं गोघृतं शर्करान्वितम्।
मासं प्रीणाति वै सर्वान् पितॄनित्याह केशवः।।
द्वौ मासौ मत्स्यमांसेन त्रीन् मासान् हारिणेन तु।
औरभ्रेणाऽथ चतुरः शाकुनेनाऽथ पञ्च वै।।
षण्मासं छागमांसेन तृप्यन्ति पितरस्तथा।
सप्त पार्षतमांसेन तथाऽष्टावेणजेन तु।।
दश मासांस्तु तृप्यन्ति वराहमहिषामिषैः।
शशकूर्मजमांसेन मासानेकादशैव तु।।
संवत्सरं तु गव्येन पयसा पायसेन च।
रौरवेण च तृप्यन्ति मासान् पञ्चदशैव तु।।

---

१. ब्रह्ममहापुराणे–११३.१११,११२।
२. भविष्यमहापुराणे (देहल्यां १९८४ खैस्ताब्दे नागप्रकाशकेन पुनर्मुद्रिते) १.१८३.४।
३. तत्रैव–१.१८६.२९।
४. मत्स्यमहापुराणे (देहल्यां १९८४ खैस्ताब्दे मेहरचन्दलछमनदासेन पुनर्मुद्रिते) १५.३४-३६।

वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी।
कालशाकेन चाऽनन्ता खड्गमांसेन चैव हि।। (इति च तत्रैव[1])

मांसमन्नं तथा शाकं गृहे यच्चोपसाधितम्।
न च तत् स्वयमश्नीयाद् विधिवद् यन्न निर्वपेत्।।
(इति मार्कण्डेयपुराणे[2])

मासं तृप्तिः पितॄणां च हविष्यान्नेन जायते।
मासद्वयं मत्स्यमांसैस्तृप्तिं यान्ति पितामहाः।।
त्रीन् मासान् हारिणं मांसं विज्ञेयं पितृतृप्तये।
पुष्णाति चतुरो मासाञ्छशस्य पिशितं पितॄन्।।
शाकुनं पञ्च वै मासान् षण्मासान् सूकरामिषम्।
छागलं सप्त वै मासानैणेयं चाऽष्टमासिकीम्।।
करोति तृप्तिं नव वै रुरोर्मांसं न संशयः।
गवयस्याऽऽमिषं तृप्तिं करोति दशमासिकीम्।।
तथैकादशमासांस्तु औरभ्रं पितृतृप्तिदम्।
संवत्सरं तथा गव्यं पयः पायसमेव वा।।
वार्ध्रीणसामिषं लोहं कालशाकं तथा मधु।
दौहित्रामिषमन्यच्च दत्तमात्मकुलोद्भवैः।।
अनन्तां वै प्रयच्छन्ति तृप्तिं गौरीसुतस्तथा।
पितॄणां नाऽत्र सन्देहो गयाश्राद्धं च पुत्रक।। (इति च तत्रैव[3])
पितृगाथास्तथैवाऽत्र गीयन्ते ब्रह्मवादिभिः।
या गीताः पितृभिः पूर्वमैलस्याऽऽसन् महीपतेः।।
कदा नः सन्तताविग्र्यः कस्यचिद् भविता सुतः।
यो योगिभुक्तशेषान्नैर्भुवि पिण्डं प्रदास्यति।।

---

१. मत्स्यमहापुराणे–१७.३०-३५।

२. मार्कण्डेयमहापुराणे (नागप्रकाशकेन देहल्यां पुनर्मुद्रिते) २६.४८।

३. तत्रैव–२९.२-८, (१८७९ खैस्ताब्दे प्रकाशिते जीवानन्दसंस्करणे तु ३२.२-८)।

गयायामथवा पिण्डं खड्गमांसं महाहविः।
कालशाकं तिलाढ्यं वा कृसरं मासतृप्तये।।
वैश्वदेवं च सौम्यं च खड्गमांसं परं हविः।
विषाणवर्ज्यखड्गाप्त्यामासूर्यञ्चाश्नुवामहे।। (इति च तत्रैव[१])
शशकः कच्छपो गोधा श्वावित् खड्गोऽथ पुत्रक।
भक्ष्या ह्येते तथा वर्ज्यौ ग्रामशूकरकुक्कुटौ।।
पितृदेवादिशेषं च श्राद्धे ब्राह्मणकाम्यया।
प्रोक्षितं चौषधार्थं च खादन् मांसं न दुष्यति।। (इति च तत्रैव[२])
तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन च।
दत्तेन मासं प्रीयन्ते श्राद्धेन तु पितामहाः।।
मत्स्यैः प्रीणन्ति द्वौ मासौ त्रीन् मासान् हारिणेन तु।
शाशं तु चतुरो मासान् पञ्च प्रीणाति शाकुनम्।।
वाराहेण तु षण्मासान् छागलं साप्तमासिकम्।
अष्टमासिकमित्युक्तं यच्च पार्षतकं भवेत्।।
रौरवेण तु प्रीयन्ते नव मासान् पितामहाः।
गवयस्य तु मांसेन तृप्तिः स्याद् दशमासिकी।।
कूर्मस्य चैव मांसेन मासानेकादशैव तु।
श्राद्धमेवं विजानीयाद् गव्यं संवत्सरं भवेत्।।
तथा गव्यसमायुक्तं पायसं मधुसर्पिषा।
वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी।।
आनन्त्याय भवेद् युक्तं खाड्गमांसैः पितृक्षये।
कृष्णाच्छागस्तथा गोधा आनन्त्यायैव कल्पते।। (इति वायुपुराणे[३])

---

१. मार्कण्डेयमहापुराणे–२९.३१-३५ (जीवानन्दसंस्करणे, ३२.३१-३४ पाठभेदा द्रष्टव्याः, 'विषाणवर्जा ये खड्गा आसूर्यं तांस्तु भुञ्ज्महे' इति च पाठः स्मृतिचन्द्रिकायां श्राद्धकाण्डे पितृतृप्त्यतिशयहेतुभूतद्रव्यविषयकवचनप्रकरणान्ते दृश्यते)।

२. तत्रैव–३२.२-४।

३. वायुमहापुराणे (देहल्यां १९८३ खैस्ताब्दे नागप्रकाशकेन पुनर्मुद्रिते) २.२१.४-९।

दत्त्वा तु मांसशाकानि मूलानि च फलानि च।
पूजयित्वा तु विप्रान् स सप्तकृत्वश्च सुन्दरि।।
कृत्वा तु दक्षिणाग्राँश्च कुशाँश्च प्रयतः शुचिः।
प्रददौ श्रीमते पिण्डं नामगोत्रमुदाहरन्।। (इति वाराहपुराणे[1])
हविष्यमत्स्यमांसैस्तु शशस्य शकुनस्य च।
सौकरच्छागलैणेयरौरवैर्गवयेन च।।
औरभ्रगव्यैश्च तथा मासवृद्ध्या पितामहाः।
प्रयान्ति तृप्तिं मांसैस्तु नित्यं वार्ध्रीणसामिषैः।।
खड्गमांसमतीवाऽत्र कालशाकं तथा मधु।
शस्तानि कर्मण्यत्यन्ततृप्तिदानि नरेश्वर।। (इति विष्णुपुराणे[2])
व्रश्चनान् वृक्षनिर्यासान् पायसाऽपूपशष्कुलीः।
अदेवपित्र्यं पललमवत्सागोपयस्त्यजेत्।।
(इति स्कन्दपुराणे काशीखण्डे[3])
प्राणात्यये क्रतौ श्राद्धे भेषजे विप्रकाम्यया।
अलौल्यमित्थं पललं भक्षयन् नैव दोषभाक्।। (इति च तत्रैव[4])
मुक्त्वा श्राद्धं तथा यज्ञं न मांसं भक्षयेद् द्विजः।
विशेषेण व्रतस्यान्ते चातुर्मास्योद्भवस्य च।।
(इति स्कन्दपुराणे नागरखण्डे[5])
वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी।
त्रिःपिबं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम्।।
तं तु वार्ध्रीणसं विद्यात् सर्वयूथाधिपं तथा।
खड्गमांसं च वा दद्यात् तृप्तिर्द्वादशवार्षिकी।। (इति च तत्रैव[6])

---

१. वाराहमहाप् ुराणे (देहल्यां १९८४ खैस्ताब्दे मेहरचन्दलछमनदासेन पुनर्मुद्रिते) १८७.३८-४०।
२. विष्णुमहापुराणे (देहल्यां १९८५ खैस्ताब्दे नागप्रकाशकेन पुनर्मुद्रिते) ३.१६.१-३।
३. स्कन्दमहापुराणे (देहल्यां १९८७ खैस्ताब्दे नागप्रकाशकेन पुनर्मुद्रिते) ४.४०.१०।
४. तत्रैव–४.४०.१७; ५. तत्रैव–६.४९.१९।
६. तत्रैव–६.२२०.५-६।

न श्राद्धे प्रतिषेधश्च प्रकर्तव्यः कथञ्चन।
न च त्याज्यं समुच्छिष्टं तेन भुञ्जामहे ततः।। (इति च तत्रैव[१])
खड्गमांसं कालशाकं मांसं वार्ध्रीणसोद्भवम्।
प्रदेयं ब्राह्मणेभ्यश्च तत् समन्तादुदाहृतम्।।
त्रिःपिबश्चेन्द्रियक्षीणः सर्वयूथानुगस्तथा।
एष वार्ध्रीणसः प्रोक्तः पितॄणां तृप्तिदः सदा।।
तस्याऽभावेऽपि दातव्यं क्षीरौदनमनुत्तमम्।
तस्मिन्नहनि विप्रेभ्यः पितॄणां तृप्तये नृप।। (इति च तत्रैव[२])
आजं च पिशितं राजन् शिशुमारसमुद्भवम्।
मांसं प्रतुष्टये प्रोक्तं वत्सरं मासवर्जितम्।।
तदभावे वराहस्य दशमासप्रतुष्टिदम्।
मांसं प्रोक्तं महाराज पितॄणां नात्र संशयः।।
आरण्यमहिषोत्थेन तृप्तिः स्यान् नवमासिकी।
रुरोश्चैवाऽष्टमासोत्था एणस्य सप्तमासिका।।
शम्बरोर्मासषट्कं च शशकस्य तु पञ्चकम्।
चत्वारः शल्लकस्योक्तास्त्रयो वा तैत्तिरस्य च।।
मासद्वयं च मत्स्यस्य मासमेकं कपिञ्जले।
नाऽन्येषां योजयेन् मांसं पितृकार्ये कथञ्चन।।
एतेषामेव मांसानि पावनानि नृपोत्तम।। (इति च तत्रैव[३])
मांसं नाऽश्नाति यः पङ्क्त्यां यथावद् विनियोजितम्।
स प्रेत्य नरकं याति नाऽत्र कार्या विचारणा।।
(इति विष्णुधर्मोत्तरपुराणे[४])

---

१. स्कन्दमहापुराणे–६.२२०.३१-३२।
२. तत्रैव–६.२२१.३-५।
३. तत्रैव–६.२२१.२५-३०।
४. विष्णुधर्मोत्तरपुराणे (देहल्यां १९८५ खैस्ताब्दे नागप्रकाशकेन पुनर्मुद्रिते) १.१४०.४९-५०।

सुजातकैः पद्मफलैर्भक्ष्यैर्भोज्यैः सुसंस्कृतैः।
रागषाडवचोष्यैश्च त्रिजातकसमन्वितैः।।
दत्तेन मासं प्रीयन्ते श्राद्धेन पितरो नृणाम्।
द्वौ मासौ मत्स्यमांसेन त्रीन् मासान् हारिणेन तु।।
औरभ्रेणाऽथ चतुरः शाकुनेन च पञ्च वै।
षण्मासाञ्छाशिकेनाऽपि सप्त पारिषतेन च।।
तथाऽष्टौ छागमांसेन पयसा पायसेन च।
वाराहेण नवैवाहू रौरवेण तथा दश।।
मासानेकादशैवाहुर्गवयेन नराधिप।
संवत्सरं तु गव्येन पयसा पायसेन च।।
पयोविकारैश्च तथा हृद्यैश्च मनुजेश्वर।
पानकैश्च तथा हृद्यैस्त्रिसुगन्धैः सुशीतलैः।।
वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी।
त्रिपिबं त्विन्द्रियक्षीणं यूथस्याग्रसरं तथा।।
रक्तं वर्णेन राजेन्द्र छागं वार्ध्रीणसं विदुः।
कालशाकं महाशल्कं खड्गमांसं तथैव च।।
आनन्त्याय भवेद् दत्तं सर्वं च मधुसंयुतम्।। (इति च तत्रैव[1])
नाऽश्नाति यो द्विजो मांसं नियुक्तः पितृकर्मणि।
स प्रेत्य नरकं याति पशुत्वं च प्रपद्यते।। (इति सौरपुराणे[2])
देवार्थे पितृकार्येषु मनुष्यार्थे पुरन्दर।
वधयन् न भवेदेनोऽन्यथा महाकिल्विषम्।। (इति देवीपुराणे[3])

---

१. विष्णुधर्मोत्तरपुराणे–१.१४२.४१-५०।

२. सौरपुराणे (पुण्यपत्तनस्थाऽऽनन्दाश्रमेण १९२४ खैस्ताब्दे प्रकाशिते) १९.२६।

३. देवीपुराणे (देहलीस्थ-लालबहादुरशास्त्रि-केन्द्रीयविद्यापीठेन १९७६ खैस्ताब्दे प्रकाशिते) ९७.४।

**महाभारते श्राद्धे मांसस्य विधयः**

पुराणसंहितोपदेशकत्वेनैव भारतवर्षीयपरम्परया स्वीक्रियमाणेन कृष्णद्वैपायनेन व्यासेन रचितत्वेन कौरव-पाण्डव-युद्धसमाप्तिकालात् षट्त्रिंशतिवर्षेषु कृष्णस्य स्वर्गारोहणे जाते कलियुगे च प्रवृत्ते युधिष्ठिरादिषु महाप्रस्थानं गतेषु परीक्षिति तक्षकदशनाद् दिवं गते अर्जुनप्रपौत्रमभिमन्युपौत्रं परिक्षितपुत्रं राजानं जनमेजयं प्रति सर्पसत्रावसरे व्यासशिष्येण वैशम्पायनेन प्रोक्तत्वेन लोमहर्षणपुत्रेण उग्रश्रवसा सौतिना नैमिषारण्ये शौनकस्य कुलपतेर्द्वादशवार्षिके सत्रे श्रावितत्वेन च गृह्यमाणे महाभारतेऽपि श्राद्धे मांसस्य प्रयोज्यताया बोधकानि वचनानि दृश्यन्ते। तथा हि—

अत्राऽपि विधिरुक्तश्च मुनिभिर्मांसभक्षणे।
देवतानां पितृणां च भुङ्क्ते दत्त्वाऽपि यः सदा।।
यथाविधि यथाश्राद्धं न प्रदुष्यति भक्षणात्।
अमांसाशी भवत्येवमित्यपि श्रूयते श्रुतिः।। (इति वनपर्वणि[१])

श्राद्धस्य ब्राह्मणः कालः प्राप्तं दधि घृतं तथा।
सोमक्षयश्च मांसं च यदारण्यं युधिष्ठिर।। (इति अनुशासनपर्वणि[२])

औरभ्रमुत्तरायोगे यस्तु मांसं प्रयच्छति।
स पितॄन् प्रीणयति वै प्रेत्य चाऽऽनन्त्यमश्नुते।। (इति च तत्रैव[३])

द्वौ मासौ तु भवेत् तृप्तिर्मत्स्यैः पितृगणस्य ह।
त्रीन् मासानाविकेनाऽऽहुश्चतुर्मासान् शशेन ह।।
आजेन मासान् प्रीयन्ते पञ्चैव पितरो नृप।
वाराहेण तु षण्मासान् सप्त वै शाकुनेन तु।।
मासानष्टौ पार्षतेन रौरवेण नव प्रभो।
गवयस्य तु मांसेन तृप्तिः स्याद् दशमासिकी।।

---

१. श्रीमन्महाभारते (पुण्यपत्तनस्थ-चित्रशालामुद्रणालयेन १९३० खैस्ताब्दे प्रकाशिते) वनपर्वणि–२०८.१४-१५।

२. श्रीमन्महाभारते (पुण्यपत्तनस्थ-चित्रशालामुद्रणालयेन १९३३ खैस्ताब्दे प्रकाशिते) अनुशासनपर्वणि–२३.३४।

३. तत्रैव–६४.३२।

मांसेनैकादश प्रीतिः पितॄणां माहिषेण तु।
गव्येन दत्ते श्राद्धं तु संवत्सरमिहेष्यते।।
यथा गव्यं तथा युक्तं पायसं सर्पिषा सह।
वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी।।
आनन्त्याय भवेद् दत्तं खड्गमांसं पितृक्षये।
कालशाकं च लौहं चाप्यानन्त्यं छाग उच्यते।। (इति च तत्रैव[1])
संयावं कृसरं मांसं शष्कुलीं पायसं तथा।
आत्मार्थं न प्रकर्तव्यं देवार्थं तु प्रकल्पयेत्।। (इति च तत्रैव[2])
हविर्यत् संस्कृतं मन्त्रैः प्रोक्षिताभ्युक्षितं शुचि।
वेदोक्तेन प्रमाणेन पितॄणां प्रक्रियासु च।।
अतोऽन्यथा वृथामांसमभक्ष्यं मनुरब्रवीत्।
अस्वर्ग्यमयशस्यं च रक्षोवद् भरतर्षभ।। (इति च तत्रैव[3])
प्रजानां हितकामेन त्वगस्त्येन महात्मना।
आरण्याः सर्वदैवत्याः प्रोक्षितास्तपसा मृगाः।।
क्रिया ह्येवं न हीयन्ते पितृदैवतसंश्रिताः।
प्रीयन्ते पितरश्चैव न्यायतो मांसतर्पिताः।। (इति च तत्रैव[4])

**धर्मशास्त्रव्याख्याकार-निबन्धकारग्रन्थेषु श्राद्धे मांसस्य विधयः**

धर्मशास्त्रव्याख्याकार-निबन्धकारेषु च वैक्रमाब्दानां नवमे शतके वर्तमानत्वेन सम्भाव्यमानेन विश्वरूपेण याज्ञवल्क्यस्मृतिव्याख्यायां बालक्रीडायाम् 'अन्नमिष्टम्' (१.२३६) इत्यादिकस्य श्लोकस्य व्याख्यायां 'मांसैः शाकैर्यूषैः कृसरपायसापूपैर्लाजैर्मधुना घृतेन दध्ना पयसा च प्रभूतमिष्टतोऽन्नं दद्यात्' इति शङ्खवचनं प्रदर्श्य श्राद्धे मांसस्य दानीयत्वं प्रतिपादितं दृश्यते।

वैक्रमाब्दानां दशमस्य शतकस्य प्रारम्भे वर्तमानत्वेन सम्भावितेन मेधातिथिना मनुभाष्येऽपि 'हृद्यानि चैव मांसानि' (३.२२७) इत्यादीनां

---

१. श्रीमन्महाभारते, वनपर्वणि–८८.५-१०; २. तत्रैव–१०४.४१।
३. तत्रैव–११५.५२-५३; ४. तत्रैव–११५.५९-६०।

मनुस्मृत्यंशानां (३.२२७, ३.२५७, ३.२६७-२७२, ५.३२, ५.३५, ५.४१-४२, ५.५२) व्याख्याने श्राद्धे मांसस्य देयत्वं श्राद्धभोजिना ब्राह्मणेन भोज्यत्वं च प्रतिपादितमस्ति। तेन 'यत् तु शङ्खेन गोमांसभक्षणे प्रायश्चित्तमाम्नातं तन् मधुपर्काष्टकाश्राद्धेभ्योऽन्यत्र ज्ञेयम्' (३.२७१) इति चोक्तं दृश्यते। एतच्च 'पितुश्चाऽपरितोषेण गुरोर्दोग्ध्रीवधेच्च। अप्रोक्षितोपयोगान् च त्रिविधस्ते व्यतिक्रमः'।। इति हरिवंशवचनस्य (१.१३.१८) नीलकण्ठेन महाभारतव्याख्याने (१.७१.३४) धृतस्य व्याख्यातस्य चानुकूलं दृश्यते।

**वैक्रमाब्दानां दशमस्य शतकस्याऽन्ते वर्तमानत्वेन सम्भावितेन आश्वलायनगृह्यसूत्रभाष्यकारेण देवस्वामिनाऽपि** 'पशुकल्पेन पशुं संज्ञप्य' (२.४.१३) इत्यादेः सूत्रस्य व्याख्यानेऽष्टकाश्राद्धे मांसप्रयोगः प्रतिपादितोऽस्ति[1]।

विज्ञानेश्वरेण च वैक्रमाब्दानामेकादशस्य शतकस्यान्ते वर्तमानत्वेन सम्भावितेन **याज्ञवल्क्यस्मृतिव्याख्यायां मिताक्षरायाम्** 'अन्नमिष्टम्' (१.२) इत्यादिकस्य श्लोकस्य व्याख्यायां श्राद्धार्थहविष्षु मांसमपि उपात्तमस्ति।

वैक्रमाब्दानां द्वादशस्य शतकस्य प्रारम्भे वर्तमानत्वेन सम्भावितेन **मनुस्मृति-व्याख्याकारेण गोविन्दराजेनाऽपि मनुस्मृतेः 'हृद्यानि चैव मांसानि'** (३.२२७) इत्यादीनामंशानां व्याख्याने श्राद्धे मांसस्य प्रयोज्यत्वं 'यत् शब्दो बोधयति तत् तथैव प्रतिपादनीयम्, अन्यथा शब्दप्रमाणकधर्मार्थलाभेऽपि कः समाश्वासः' इत्याद्यपि (५.४१-४२) उक्त्वा वर्णितमस्ति[2]।

कान्यकुब्जराज-गोविन्दचन्द्रमन्त्रिणा वैक्रमाब्दानां द्वादशे शतके वर्तमानत्वेन ज्ञायमानेन **लक्ष्मीधरेण च कृत्यकल्पतरोः श्राद्धकाण्डे 'अथ हवींषि। अत्र हविर्विशेषात् प्रीतिविशेषः'** इत्यादिना सन्दर्भेण श्राद्धे प्रयोज्यानां मांसादीनां प्रतिपादनं कृतमस्ति[3]।

वैक्रमाब्दानां त्रयोदशे शतके वर्तमानत्वेन सम्भावितेन **याज्ञवल्क्य-स्मृतेरपरार्कव्याख्यायाः कर्त्राऽपि 'अन्नमिष्टम्' (१.२२७) इत्यादिकस्य**

---

१. आश्वलायनगृह्यसूत्रभाष्ये देवस्वामिकृते (अड्यारपुस्तकालयेन १९८० खैस्ताब्दे प्रकाशिते), पृ. ११५।

२. मानवधर्मशास्त्रे (मुम्बापुर्यां गणपतकृष्णाजीनामकमुद्रायन्त्रालये १८८६ खैस्ताब्दे मुद्रिते), पृथक् मुद्रितायां गोविन्दराजटीकायाम्।

३. कृत्यकल्पतरौ श्राद्धकाण्डे (बडोदाप्राच्यविद्यागृहेण १९५० खैस्ताब्दे प्रकाशिते), पृ. ४१-५०।

श्लोकस्य व्याख्यायां शङ्खवचनं यमवचनं मनुवचनम्, आपस्तम्बवचनं च प्रदर्श्य श्राद्धे प्रयोज्येषु हविष्षु मांसस्योल्लेखः कृतोऽस्ति[१]। 'हविष्यान्नेन' इत्यादीनां श्लोकानां व्याख्यानेऽपि (पृ.५५१-५५३) श्राद्धे मांसप्रयोगस्य कलिवर्ज्यतायास्तेन कोऽप्युल्लेखो न कृतोऽस्ति।

**स्मृत्यर्थसारकारेण वैक्रमाब्दानां त्रयोदशे शतके वर्तमानत्वेन सम्भावितेन श्रीधरेण च स्मृत्यर्थसारे श्राद्धप्रकरणे 'अथ हविष्याणि' इत्युक्त्वा 'मेध्यमांसं महाशल्कादि' इति श्राद्धे मांसस्य प्रयोज्यत्वं प्रतिपादितमस्ति[२]।**

१३२३ तमे वैक्रमेऽब्दे ग्रन्थं कृतवता **कातीयगृह्यकारिकाकारेण रेणुदीक्षितेन चाऽष्टकाश्राद्धे 'छागमांसं क्रयक्रीतं चरु स्यात् तदलाभतः' इत्यादि, 'पूर्वेणाऽऽहरणं मांसं मेक्षणेन जुहोत्यथ'** इत्यादि चोक्त्वा मांसप्रयोगः प्रतिपादितोऽस्ति[३]।

वैक्रमाब्दानां चतुर्दशस्य शतकस्याऽऽरम्भे वर्तमानत्वेन सम्भावितेन **हरिहरेणाऽपि अष्टश्राद्धे छागपशोः प्रयोगः पूर्णां पद्धतिं प्रदर्श्य प्रतिपादितोऽस्ति[४]।**

**स्मृतिचन्द्रिकाकारेण वैक्रमाब्दानां चतुर्दशस्य शतकस्य पूर्वार्धे वर्तमानत्वेन सम्भावितेन देवण्णभट्टेन श्राद्धकाण्डे तृप्त्यतिशयहेतुभूतद्रव्याणां प्रतिपादने श्राद्धे मत्स्यमांसादीनां दानीयत्वं प्रतिपादितमस्ति[५]।**

**हेमाद्रिणाऽपि** दाक्षिणात्यदेवगिरिस्थ-यादवराज-महादेवस्य सर्वश्रीकरणेश्वरेण वैक्रमाब्दानां चतुर्दशे शतके वर्तमानेन चतुर्वर्गचिन्तामणेः परिशेषखण्डे श्राद्धकल्पे **'अथ ग्राह्याणि मांसानि, तत्र तावत् सामान्यतः श्राद्धे मांसदानविधिः'** इत्यादिना सन्दर्भेण श्राद्धे ग्राह्याग्राह्याणां भक्ष्याऽभक्ष्याणां च मांसानां प्रतिपादनं विस्तरेण कृतं दृश्यते[६]।

---

१. याज्ञवल्क्यस्मृतौ अपरार्कव्याख्यायुतायाम् (पुण्यपत्तनस्थाऽऽनन्दाश्रममुद्रणालयेन १९०३ खैस्ताब्दे प्रकाशितायाम्), पृ. ५००-५०१।
२. स्मृत्यर्थसारे (आनन्दाश्रममुद्रणालयेन १९१२ खैस्ताब्दे प्रकाशिते) पृ. ५२।
३. कातीयगृह्यकारिकायां (राजस्थाने जयपुरे १९८९ खैस्ताब्दे प्रकाशितायाम्), पृ. ३१८।
४. पारस्करगृह्यसूत्रे (चौखम्बासुरभारतीप्रकाशनेन १९९१ तमे खैस्ताब्दे प्रकाशिते हरिहर-गदाधरभाष्यद्वयोपेते) ३.३.८, ३.३.१३, पृ. ३८८-३९४।
५. स्मृतिचन्द्रिकायाः श्राद्धकाण्डे (नागप्रकाशकेन देहल्यां १९८८ खैस्ताब्दे पुनर्मुद्रिते) पृ. २५५-२५८।
६. चतुर्वर्गचिन्तामणौ (चौखम्भासंस्कृतसंस्थानेन वाराणस्यां १९८५ खैस्ताब्दे पुनर्मुद्रिते) तृतीयखण्डस्य प्रथमे भागे, पृ. ५७३-६००।

**वैक्रमाब्दानां चतुर्दशे शतके वर्तमानत्वेन सम्भावितेन कुल्लूकभट्टेनाऽपि मन्वर्थमुक्तावल्यां 'हृद्यानि चैव मांसानि' इत्यादीनां मनुस्मृत्यंशानां (३.२२७, ३.२५७, ३.२६७-२७२, ५.३२, ५.३५, ५.४१-४२, ५.५२) व्याख्याने श्राद्धे मांसस्य दानीयत्वं श्राद्धभोजिना ब्राह्मणेन श्राद्धे दत्तस्य मांसस्य भोज्यत्वं च प्रतिपादितमस्ति**[१]। तत्र श्राद्धे मांसस्य कलिवर्ज्यतायाः कोऽप्युल्लेखः कृतो नास्ति।

**श्रीदत्तोपाध्यायेन च वैक्रमाब्दानां चतुर्दशे शतके वर्तमानत्वेन सम्भावितेन सामगानां श्राद्धकल्पे श्राद्धे मांसस्य प्रयोगः 'अनवस्त्रावितं घृतं मांसं च यत्नतो दद्यात्, असम्भवे तैलं शाकं चान्नं घृताक्तं कर्तव्यम्' इत्यादिभिर्वचनैः प्रतिपादितोऽवलोक्यते**[२]।

**चण्डेश्वरेणाऽपि स्मृतिरत्नाकरान्तर्गते** गृहस्थरत्नाकरे भक्ष्याऽभक्ष्यप्रकरणे मांसभक्षणवर्जनविधिविचारे **'श्राद्धे तु मांसमश्नीयात्'** इत्यादीनां पैठीनस्यादिवचनानां व्याख्याने श्राद्धे मांसस्य प्रयोज्यत्वं सूचितमस्ति[३]।

**पराशरस्मृतिव्याख्याकारेण वैक्रमाब्दानां पञ्चदशस्य शतकस्य पूर्वार्द्धे वर्तमानत्वेन ज्ञायमानेन माधवेनाऽपि 'द्वौ मासौ मत्स्यमांसेन' इत्यादिकं मनुस्मृतिवचनं प्रदर्श्य व्याख्याय च श्राद्धे मांसस्य प्रयोज्यत्वं प्रतिपादितं दृश्यते**[४]। श्राद्धे मांसस्य भोज्यत्वं प्रदर्श्य[५] श्राद्धे परिवेषणस्य प्रकरणेऽपि मनुस्मृतिवचनं प्रदर्श्य हृद्यानां मांसानामपि परिवेषणीयत्वं तेन प्रोक्तमस्ति[६]।

**वैक्रमाब्दानां पञ्चदशस्य शतकस्योत्तरार्धे वर्तमानत्वेन सम्भावितेन रुद्रधरेण च श्राद्धविवेके प्रथमे परिच्छेदे श्राद्धे विहितानां हविर्द्रव्याणां प्रतिपादने 'अथ मांसानि' इत्युक्त्वा गण्डकादिमांसानि महाशल्कादिमत्स्यमांसानि च प्रतिपादितानि सन्ति**[७]।

---

१. मनुस्मृतौ मन्वर्थमुक्तावल्या समन्वितायाम् (निर्णयसागरमुद्रणयन्त्रालयेन १९४६ खैस्ताब्दे प्रकाशितायाम्)।

२. श्राद्धकल्पे (वाराणसेयसंस्कृतविश्वविद्यालयेन २०२७ वैक्रमाब्दे प्रकाशिते). पृ. २६, २७, २९, ५६, ६३।

३. गृहस्थरत्नाकरे (बङ्गालस्थेन एशियाटिक-सोसाइटि-नामकेन निकायेन कालीघट्टनगरे १९२८ तमे खैस्ताब्दे प्रकाशिते) पृ. ३८३।

४. पराशरस्मृतौ श्रीमन्माधवाचार्यकृतव्याख्यासहितायां (बङ्गालस्थेन एशियाटिक-सोसाइटि-नामकेन निकायेन कालीघट्टनगरे १९७४ खैस्ताब्दे पुनर्मुद्रितायाम्) आचारकाण्डरूप-प्रथमभागे, पृ. ७०५।

५. तत्रैव, पृ. ७१९-७२०; ६. तत्रैव, पृ. ७४४।

७. श्राद्धविवेके (चौखम्बा-संस्कृत-सिरीज-ऑफिस-नामकेन निकायेन वाराणस्यां १९४८ खैस्ताब्दे प्रकाशिते) पृ. ५२-५३।

तृतीये परिच्छेदे एकादशाहश्राद्धप्रयोगे परिवेषणप्रकरणे 'मांसादीनि व्यञ्जनानि भूमिष्ठपात्रान्तरेषु परिविष्य'[१] इत्युक्त्वा श्राद्धे मांसस्य प्रयोगोऽपि प्रतिपादितो दृश्यते।

**१५०५ तमे वैक्रमाब्दे वाराणस्यां ग्रन्थं कृतवता कात्यायनश्राद्ध-कल्पसूत्रस्य श्राद्धकाशिकाख्याया व्याख्यायाः कर्त्रा कृष्णमिश्रेण च—**

दारवान् यो द्विजः श्राद्धे नो दद्यात् मांसमध्वरे।
स दुरात्मा दुराचारो वेदमार्गस्य दूषकः।।
तर्पणं तिलहीनं यच्छ्राद्धं यच्च निरामिषम्।
विना दर्भैश्च या सन्ध्या त्रयं शशविषाणवत्।।
यत्र मातुलजोद्वाही यत्र वा वृषलीपतिः।
श्राद्धं धिनोति न ह्येतान् कृतं यच्च निरामिषम्।।
(इति जातूकर्ण्यवचनम्[२])

निमन्त्रितस्तु यः श्राद्धे यज्ञे वाऽपि द्विजाधमः।
मांसं नाऽश्नाति निरयं याति वै पशुतां नरः।।
(इति विश्वामित्रवचनम्[३])

अश्नन्ति ये न मांसानि भार्याहीनाश्च ये द्विजाः।
ये च मातुलसम्बन्धा न तान् श्राद्धे नियोजयेत्।।
(इति जाबालवचनम्[४])

श्राद्धे मांसं न यो दद्यान्न वाऽश्नाति कुतर्कतः।
नरकार्हावुभौ श्रौत-स्मार्तधर्मस्य लोपनात्।।
(इति स्कन्दसंवादवचनम्[५])

विना मांसेन यच्छ्राद्धं कृतमप्यकृतं भवेत्।
क्रव्यादाः पितरो यस्मादलाभे पायसादयः।।
(इति वृद्धयाज्ञवल्क्यवचनम्[६])

---

१. श्राद्धविवेके, पृ. १००।
२. भाष्यपञ्चकयुते पारस्करगृह्यसूत्रे (गुजरातीमुद्रणालयाधिपतिना १९७३ वैक्रमाब्दे प्रकाशिते, मुंशीराममनोहरलालेन देहल्यां १९८२ खैस्ताब्दे पुनर्मुद्रिते), पृ. ४३६, ४७२।
३. तत्रैव, पृ. ४३६;
४. तत्रैव, पृ. ४३७।
५. तत्रैव, पृ. ४७२;
६. तत्रैव, पृ. ४७२।

रोमाणि कूर्मपृष्ठे चेन्नृणां चेच्छृङ्गसम्भवः।
व्योम्नश्च मुष्टिना घातः सास्थि चेद् रक्तपावपुः।।
तदोपतिष्ठते स्कन्द दत्तं श्राद्धं निरामिषम्।
तस्मात् सर्वप्रयत्नेन श्राद्धं देयं हि सामिषम्।
अभोज्य विप्रान् यः श्राद्धे मांसमन्यांस्तु भोजयेत्।
स्वयमश्नाति वा मूढः स याति नरकं ध्रुवम्।।
(इति स्कन्दसंवादवचनम्[१])

मुन्यन्नं ब्राह्मणस्योक्तं मांसं क्षत्रियवैश्ययोः।
मधुप्रधानं शूद्रस्य सर्वेषां वाऽविशेषतः।। (इति पुलस्त्यवचनम्[२])

मुन्यन्नामिषमाध्वीकैर्विप्रद्विजजघन्यजाः।
श्राद्धं विदध्युरसति द्रव्ये तु सति चाऽपरैः।। (इति आत्रेयवचनम्[३])

मुन्यन्नामिषमध्वाज्यैरभावे प्रोक्तवस्तुनः।
क्रमाद् विप्रादिभिर्वर्णैर्विधेयमिति शुश्रुमः।।
परमान्नेन मांसेन शाकैर्मधुघृतादिभिः।
सर्ववर्णैः प्रकर्तव्यं श्राद्धं वाऽवित्तशाठ्यतः।।
(इति वृद्धशातातपवचनम्[४])

मुन्यन्नैर्ब्राह्मणः श्राद्धं साऽऽमिषं बाहुसम्भवाः।
उरव्या मधुना कुर्युः शूद्रा मूलफलादिना।।
असम्भवे प्रकर्तव्यमेतैरेव हि केवलम्।
सर्ववर्णैस्तु कर्तव्यं सामिषं सति सम्भवे।।

इति वृद्धमनुवचनं[५] च प्रदर्श्य सति सम्भवे सर्वैर्वर्णैः श्राद्धे मांसं दानीयम्, श्राद्धभोजिना ब्राह्मणेन श्राद्धे दत्तं मांसमवश्यं भोज्यमिति च दृढतया प्रतिपादितं दृश्यते।

---

१. भाष्यपञ्चकयुते पारस्करगृह्यसूत्रे, पृ. ४७२; २. तत्रैव, पृ. ४७२।
३. तत्रैव, पृ. ४७३; ४. तत्रैव, पृ. ४७३।
५. तत्रैव, पृ. ४७३।

**गदाधरभाष्ये श्राद्धकाशिकाया उल्लिखितत्वात्**[1] श्राद्धकाशिकाकाराद् अर्वाचीनत्वेन ज्ञायमानेन १६२८तमे वैक्रमाब्दे रचितस्य मुहूर्तमार्तण्डस्य उद्वाहादित्यादिकं पद्यमुल्लिखता (पारस्करगृह्यसूत्रभाष्ये–१.८.२१) कात्यायनश्राद्धकल्पसूत्रभाष्यकारेण गदाधरेणाऽपि श्राद्धे ब्राह्मणाय दानीयेषु भक्ष्यभोज्यलेह्यचोष्यपेयरूपेषु अन्नेषु 'व्रीहिशालियवगोधूममुद्गमाषमुन्यन्न-कालशाकशुण्ठीमरिचहिङ्गुगुडशर्कराकर्पूरसैन्धवसम्भारपनसनारिकेलकदलीबदरगव्यपयो-दधिघृतपायसमधुमांसप्रभृतीनि दद्यात्'[2] इत्युक्त्वा मांसस्यापि समावेशः प्रदर्शितोऽस्ति।

**वैक्रमाब्दानां सप्तदशस्य शतकस्य प्रारम्भे वर्तमानत्वेन सम्भावितेन गोविन्दानन्देन च श्राद्धक्रियाकौमुद्यां**[3] **श्राद्धार्थहविर्द्रव्येषु खड्गमांस-लोहितच्छाग-मांसादिकं प्रतिपादितं दृश्यते।**

**१६६८ तमे वैक्रमेऽब्दे निर्णयसिन्धुग्रन्थं पूर्णं कृतवता कमलाकरभट्टेन च निर्णयसिन्धोस्तृतीये परिच्छेदे उत्तरार्धे श्राद्धार्थहविर्निरूपणप्रकरणे श्राद्धे मांसदानस्य विधायकान् याज्ञवल्क्यस्मृतिश्लोकान् प्रदर्श्य श्राद्धदत्तमांसस्याऽभक्षणे दोषस्य प्रदर्शकं मनुस्मृतिश्लोकं चोल्लिख्य बहुषु वचनेषु श्राद्धे मांसमधुनोः प्राशस्त्यस्योक्तत्वात् मांसेन मधुना च रहितस्य श्राद्धस्य स्वकार्यासमर्थतायाः प्रकटनेन निन्दितत्वाच्च 'मांसमधुनोः श्राद्धे नियतत्वं गम्यते' इत्युक्तमस्ति।** तत्र तेन बृहत्पराशरस्मृतौ श्राद्धे मांसदानस्य निन्दितत्वं भागवते श्राद्धदानस्य निषिद्धत्वं चोल्लिख्य, केषाञ्चिन्मते पुलस्त्योक्ताया वर्णभेदेन व्यवस्थाया मान्यत्वं च प्रदर्श्य, पृथ्वीचन्द्रोदयोक्तं निगम-हेमाद्रिधृतादित्यपुराणवचन-बृहन्नारदीयपुराणवचन-भृगुवचनानां विचारेण कलौ मांसनिषेधानां देशाचाराद् व्यवस्था स्वीकर्तव्येति मतं निराकृत्य च 'वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी' इति मनुस्मृतिवचनस्य (३.२७१) उल्लेखेन श्राद्धे मांसदानस्य निर्णय उपसंहृतो दृश्यते[4]। एतेन कमलाकरेणाऽपि श्राद्धे मांसस्य दानीयत्वं भोज्यत्वं च स्वीकृतमवगम्यते।

---

१. वाराणस्यां हथुआराजेन कृष्णप्रतापशर्मसाहिना १९५२ तमे वैक्रमेऽब्दे भाष्यचतुष्टययुते पारस्करगृह्यसूत्रे, पृ. ५८३, भाष्यपञ्चकयुते पारस्करगृह्यसूत्रे, पृ. ४२७, वाराणस्यां १९९१ तमे खैस्ताब्दे चौखम्बासुरभारतीप्रकाशनेन प्रकाशिते हरिहर-गदाधरभाष्यद्वयोपेते पारस्करगृह्यसूत्रे, पृ. ४९६।

२. भाष्यचतुष्टययुते पारस्करगृह्यसूत्रे, पृ. ६०२, भाष्यपञ्चकयुते पारस्करगृह्यसूत्रे, पृ. ४५९, भाष्यद्वयोपेते पारस्करगृह्यसूत्रे, पृ. ५०८।

३. श्राद्धक्रियाकौमुद्याम् (कालीघट्टनगरे १९०४ खैस्ताब्दे एशियाटिक-सोसाइटि-नामकेन निकायेन प्रकाशितायाम्, कमलकृष्णस्मृतिभूषणेन संस्कृतायाम्), पृ. १४-१६।

४. निर्णयसिन्धौ (निर्णयसागरमुद्रणालयमुद्रिते, पञ्चमसंस्करणे) पृ. २९०।

**लक्ष्मीपतिना च श्राद्धरत्नमित्युक्तायां मैथिलसाम्प्रदायिकश्राद्धपद्धतौ 'पितरं ध्यायन् पुरुषतृप्तिक्षमं परिवेविष्यात्। मांसादीनि व्यञ्जनानि पात्रान्तरेषु परिविष्य'[१] इत्युक्त्वा श्राद्धे मांसप्रयोगः प्रतिपादित एव।**

**१५५६ तमे शकाब्दे (१६९१ तमे वैक्रमाब्दे) वृन्दावने न्यायसूत्रवृत्तिं कृतवता कारिकावली-न्यायसिद्धान्तमुक्तावल्यादिग्रन्थकारेण विश्वनाथन्यायपञ्चाननेन च मांसतत्त्वविवेके 'ब्रह्मावर्तब्रह्मर्षिदेशमध्यदेशार्यावर्तेषु मांसभक्षणाचार आजानिकोऽविगीतः प्रतीयत एव। ये तु कलिवर्ज्यतया विवदन्ते 'स्तेयान्यमहापातकनिष्कृतिः' इति कलिवर्ज्यतयोक्तमपि ब्रह्महत्यातत्संसर्गप्रायश्चित्तं धनलोभादुपदिशन्ति मातृसपिण्डानयने च न विवदन्ते रागरोषदूषितचेतसो देवानां प्रियास्ते केन शिक्षणीया इत्यलं मांसं विद्विषद्भिः सौगतमतानुसारिभिः सह श्रमेणेति'[२] इति स्वनिबन्धोपसंहारं कृतवता प्रोक्षितादिमांसभक्षणं कर्तव्यत्वेन प्रतिपादयता श्राद्धे शास्त्रानुमतप्रकारेण मांसस्य प्रयोज्यता प्रदर्शिता दृश्यते।**

**श्राद्धे मांसप्रयोगस्य निषेधकानां वचनानां विचारः**

अत्र श्राद्धे मांसदानस्य मांसभोजनस्य च निन्दकानि निषेधकानि च लघुस्मृतिपुराणवचनानि वैष्णवसम्प्रदायमूलकानि सन्तीति वेदितव्यम्। बृहत्पराशरस्मृतौ निर्णयसिन्धुधृतेन 'यस्तु प्राणिवधं कृत्वा'[३] इत्यादिना वचनेन युक्तायामेव 'एवं पञ्चमखान् कुर्वन् मधुमांसाऽऽज्यपायसैः'[४] इति, 'ये खण्ड-मांस-मधु-पायससर्पिरन्नैः'[५] इति, 'सेधाद्यांश्च पञ्चनखान् सिंहाद्या(स्या)न् मत्स्यकांस्तथा। धर्मशास्त्रोदितानद्यात् सर्वा(र्पा)काराँश्च वर्जयेत्।। भक्ष्यं प्राणात्यये मांसं श्राद्धयज्ञोत्सवेष्वपि। कृत्वा च विधिवच्छ्राद्धं पश्चात्तत्स्वयमश्नुते'[६]।। इति वचनानां च दर्शनात् पूर्वापरसमन्वयाऽभावात्, 'क्रीत्वा स्वयं वाऽप्युत्पाद्य'[७] इति मनुवचनेन विरुद्धत्वाच्च

---

१. श्राद्धरत्ने (कर्मकाण्डोद्धारिणा वैयाकरणकेसरिणा श्रीपरमेश्वरशर्मणा संशोधिते, दरभङ्गाराजधान्यां मुद्रिते), पृ. ४०।

२. मांसतत्त्वविवेके (१९२७ खैस्ताब्दे वाराणस्यां मुद्रिते, जगन्नाथशास्त्रिहोशिङ्गेन सम्पादिते) पृ.२८-२९।

३. बृहत्पराशरस्मृतौ (२००९ वैक्रमाब्दे कालीघट्टनगरे मनसुखरायमोरेण प्रकाशिते स्मृतिसन्दर्भे, द्वितीये भागे), ७.२९९-३००।

४. तत्रैव–६.८०-८१; ५. तत्रैव–७.३९८।

६. तत्रैव–६.३२२-३२४।

७. मनुस्मृतौ (कुल्लूकभट्टकृतमन्वर्थमुक्तावलीसहितायां निर्णयसागरमुद्रणालयेन १९४६ खैस्ताब्दे प्रकाशितायाम्), ५.३२।

बृहत्पराशरस्मृतौ 'यस्तु प्राणिवधं कृत्वा' इत्यादिकं वचनं प्रक्षिप्तं वैष्णवागममूलकं वा प्रतीयते। बृहत्पराशरस्मृतेर्वैष्णवागमप्रवणत्वादेव तत्र निरूढपशुबन्धाऽग्निषोमीय-पशुयागाऽग्निष्टोमादिश्रौतयागानामपि अननुष्ठेयत्वमिव 'दर्शश्च पौर्णमासश्च तथैवाऽऽग्रयणद्वयम्। चातुर्मास्यव्रतान्येव कार्याणि साऽग्निकैर्द्विजैः'[१]॥ इति वचनेन प्रतिपादितं दृश्यते। तत्र वैष्णवपाञ्चरात्रा-गमस्याऽऽदरणीयत्वं चाऽनेकवारं प्रतिपादितं दृश्यते (४.१०६, १४३)। तत्र ऊर्ध्वपुण्ड्रस्य कार्यत्वं त्रिपुण्ड्रस्याऽकार्यत्वं चोक्तमुपलभ्यते (७.१२८-१२९)।

यत्र भागवते 'न दद्यादामिषं श्राद्धे न चाऽद्याद् धर्मतत्त्ववित्'[२] इति श्राद्धे मांसभोजनदानयोर्निषेधोऽस्ति तद् भागवतमपि तत्र 'भागवता धर्माः'[३] 'चक्रे सात्वतसंहिताम्'[४], 'स संहितां भागवतीम्'[५], 'तन्त्रं वा भगवत्स्मृतम्'[६], 'वेदे च तन्त्रे च त एव कोविदाः'[७], 'सात्वतीया....यं सङ्कर्षणमित्याचक्षते'[८], 'सह सात्वतर्षभैः'[९], 'वैदिकतान्त्रिकेण'[१०], 'भगवान् वासुदेवेति यं गृणन्ति हि सात्वताः'[११], 'सख उदेयिवान् सात्वतां कुले'[१२], 'यजन्ति वेदतन्त्राभ्याम्'[१३], 'वैदिकी तान्त्रिकी दीक्षा'[१४], 'वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः'[१५], 'य आशु हृदयग्रन्थिं निर्जिहीर्षुः परात्मनः। विधिनोपचरेद् देवं तन्त्रोक्तेन च केशवम्'[१६]॥ इत्यादीनां वचनानामुल्लेखस्य दर्शनाद्, वेदे क्रियापथ-सन्न्यासयोर्द्वयोर्मार्गयोरेव मान्यत्वे दृश्यमानेऽपि भागवते तृतीयस्य भक्तिमार्गस्याऽपि प्रमुखमार्गत्वेन प्रोक्ततायाः स्वीकृतत्वाच्च[१७] भागवतग्रन्थस्य सात्वततन्त्रे वैष्णवतन्त्रविशेषरूपे भक्तिप्रधाने विशिष्टस्याऽऽग्रहस्य प्रतीयमानत्वात्, श्रुतौ (मा.वा.शतपथ. ११.२.६.१३) आत्मयाजिनः श्रेयस्त्वे

---

१. बृहत्पराशरस्मृतौ–६.२९५, पृ. ७८२।

२. श्रीमद्भागवतमहापुराणे (मूलमात्रे, २०३७ वैक्रमाब्दे गीताप्रेसप्रकाशिते द्वादशे संस्करणे) ७.१५.७।

३. तत्रैव–१.४.३१; ४. तत्रैव–१.७.६।

५. तत्रैव–१.७.८; ६. तत्रैव–३.७.३०।

७. तत्रैव–४.२४.६२; ८. तत्रैव–५.२५.१।

९. तत्रैव–५.२५.४; १०. तत्रैव–८.६.९।

११. तत्रैव–९.९.४९; १२. तत्रैव–१०.३१.४।

१३. तत्रैव–११.५.२८; १४. तत्रैव–११.११.३७।

१५. तत्रैव–११.२७.७; १६. तत्रैव–११.३.४७।

१७. तत्रैव–११.२०.६।

प्रतिपादितेऽपि देवयाजिनोऽपि प्रशस्यतायाः स्वीकृतत्वात्, यज्ञस्य सर्वथाऽनिन्द्यत्वस्याऽपि महाभारते (१२.६०.४९-५३) प्रतिपादितत्वात्, देवयाजिनिन्दने श्रौतपशुयागनिन्दने च भागवतस्य 'तं यज्ञपशवोऽनेन संज्ञप्ता येऽदयालुना। कुठारैश्छिचच्छिदुः क्रुद्धाः स्मरन्तोऽमीवमस्य तत्'।। (४.२८.२६), 'द्रव्ययज्ञैर्यक्ष्यमाणं दृष्ट्वा भूतानि बिभ्यति। एष माऽकरुणो हन्यादतज्ज्ञो ह्यसुतृब् ध्रुवम्'।। (७.१५.१०), 'हिंस्रं द्रव्यमयं काम्यमग्निहोत्राद्यशान्तिदम्' (७.१५.४८), 'यद् घ्राणभक्षो विहितः सुरायास्तथा पशोरालभनं न हिंसा' (११.५.१३), 'हिंसायां यदि रागः स्याद् यज्ञ एव न चोदना। हिंसाविहारा ह्यालब्धैः पशुभिः स्वसुखेच्छया।। यजन्ते देवता यज्ञैः पितृभूतपतीन् खलाः। स्वप्नोपमममुं लोकमसन्तं श्रवणप्रियम्। आशिषो हृदि सङ्कल्प्य त्यजन्त्यर्थान् यथा वणिक्'।। (११.२१.२९-३१) इत्यादिषु वचनेषु विशिष्टस्याऽऽग्रहस्य दृश्यमानत्वाच्च वेदादिविरुद्धार्थप्रतिपादकत्वेन प्रतीयमानस्य भागवतस्य वेदकल्प-मनुस्मृत्यादिवचनविरुद्धं सर्वयुगविषयं 'न दद्यादामिषं श्राद्धे' इत्यादिकं वचनं वैष्णवतन्त्रमूलकं वैदिकानां कृतेऽनादरणीयञ्चेत्यवसीयते।

स्कन्दपुराणे वैष्णवखण्डे तु मांसभोजनप्रवृत्तिप्रबन्धकल्पनावर्णनपूर्वकम्—

मुनयः प्रायशस्तत्र क्षुधाव्याकुलितेन्द्रियाः।
परोक्षवादवेदार्थान् विपरीतान् प्रपेदिरे।।

अर्थं चाऽजादिशब्दानां मुख्यं छागादिमेव ते।
बुबुधुश्चाऽथ ते प्राहुर्यज्ञान् कुरुत भो द्विजाः।।
या वेदविहिता हिंसा न सा हिंसाऽस्ति दोषदा।
उद्दिश्य देवान् पितॄंश्च ततो घ्नत पशूञ्छुभान्।।
प्रोक्षितं देवताभ्यश्च पितृभ्यश्च निवेदितम्।
भुञ्जत स्वेप्सितं मांसं स्वार्थं तु घ्नत मा पशून्।।
ततो देवर्षिभूपाला नराश्च स्वस्वशक्तितः।
चक्रुस्तैर्बोधिता यज्ञानृते ह्यैकान्तिकान् हरेः[1]।।

इत्यैकान्तिकानां वैष्णवानामेव श्राद्धे यज्ञे च पशूपाकरणवर्जनं वर्णयित्वा—

१. श्रीस्कन्दमहापुराणे (देहल्यां नागप्रकाशकेन १९८६ तमे खैस्ताब्दे पुनर्मुद्रिते) २.९.९.१३-१७।

विद्वांसस्तत्र ये जातास्ते तु धर्मं तदेव हि।
मेनिरे मुख्यमेवाऽथ ग्रन्थाँश्चक्रुश्च तादृशान्।।
ते परम्परया ग्रन्थाः प्रामाण्यं प्रतिपेदिरे।
आद्ये त्रेतायुगे हीत्थमासीद् धर्मस्य विप्लवः।।
ततः प्रभृति लोकेषु यज्ञादौ पशुहिंसनम्।
बभूव सत्ये तु युगे धर्म आसीत् सनातनः।।
कालेन महता सोऽपि सह देवैः सुराधिपः।
आराध्य सम्पदं प्राप वासुदेवं प्रभुं मुने।।
ततो धर्मनिकेतस्य श्रीपतेः कृपया हरेः।
यथापूर्वं स सद्धर्मस्त्रिलोक्यां सम्प्रवर्त्तते।।
तत्राऽपि केचिन्मुनयो नृपा देवाश्च मानुषाः।
कामक्रोधरसास्वादलोभोपहतसद्धियः।।
तमापद्धर्ममद्याऽपि प्राधान्येनैव मन्वते।
एकान्तिनो भागवता जितकामादयस्तु ये।।
आपद्यपि न तेऽगृह्णंस्तं तदा किमुताऽन्यदा[1]।।

इति यज्ञे श्राद्धे च पश्वालम्भनस्य विधायकान् वेदकल्पादिकान् सर्वान् ग्रन्थान् भ्रमेण कामक्रोधरसास्वादलोभादिना च आपद्धर्मं मुख्यधर्मं मत्वा विद्वद्भिः कृतान् उक्त्वा चैकान्तिभिर्भागवतैर्वैष्णवैरेव यज्ञे श्राद्धे च मांसस्य प्रयोगस्य भोजनस्य च वर्जितत्वं प्रतिपादितं दृश्यते।

स्कन्दपुराणवैष्णवखण्डे एव—

न श्राद्धे क्वाऽपि मांसं तु दद्यान्नाऽद्याच्च मानवः।
मुन्यन्नैः क्षीरसर्पिर्भ्यां तृप्यन्ति पितरो भृशम्।।
अहिंसा प्राणिमात्रस्य मनोवाक्तनुभिस्तु या।
तयैव पितरः सर्वे तृप्यन्त्यतिदयालवः।।
तस्मात् कुसङ्गतः क्वाऽपि शास्त्रहार्दमबुध्य च।
श्राद्धे मांसं नैव दद्याद् वासुदेवपरः पुमान्।।

---

१. श्रीस्कन्दमहापुराणे–२.९.९.२८-३४।

इति[१] वासुदेवपरान् वैष्णवान् प्रत्येव श्राद्धे मांसदाननिषेधः स्फुटतया प्रतिपादितोऽस्ति।

**वैदिकानां कृते लघुस्मृतिपुराणाद्युक्तानां वैष्णवादितन्त्रमूलकानामर्थानामग्राह्यत्वम्**

उक्तेन विवरणेन च श्राद्धे मांसस्य प्रयोगस्य भोजनस्य च वर्जनं वैष्णवानामैकान्तिकानामेव न पुरुषार्थचतुष्टयवादिनां वर्णाश्रमधर्मानुयायिनां 'वेदं समाप्य स्नायात्'[२] इत्यादिकं नित्यं वेदवेदाङ्गाध्ययनविधिमनुसृत्याऽधीतानामेव ग्रन्थानां धर्मे मोक्षे च मुख्यं प्रामाण्यं स्वीकुर्वतां वैदिकानामिति स्फुटं भवति।

तत्र देवीभागवते—

स्मृतयश्च श्रुतेरर्थं गृहीत्वैव च निर्गताः।
मन्वादीनां श्रुतीनां च ततः प्रामाण्यमिष्यते।।
क्वचित् कदाचित् तन्त्रार्थकटाक्षेण परोदितम्।
धर्मं वदन्ति सोंऽशस्तु नैव ग्राह्योऽस्ति वैदिकैः[३]।।

इति प्रतिपादितत्वात्, सूतसंहितायां च—

अष्टादशानां विद्यानां वेदादन्याश्च सत्तमाः।
विद्या वेदानुसारेण प्रवृत्ताः सर्वशोभनाः।।
तथाऽपि तासु सर्वासु कश्चिदंशः क्वचित्क्वचित्।
शिवागमानुसारेण तत्प्रभेदानुसारतः।।
विष्ण्वागमानुसारेण तत्प्रभेदानुसारतः।
ब्रह्मागमानुसारेण तत्प्रभेदानुसारतः।।
अधिकारिविशेषेण क्रमेणैव विमुक्तये।
प्रवर्तते मुनिश्रेष्ठाः सत्यमेव मयोदितम्।।
तत्तत्तन्त्रेषु ये मर्त्या दीक्षिता मुनिसत्तमाः।
सोंऽशस्तैरैव सङ्ग्राह्यः सर्वदा नैव वैदिकैः[४]।।

---

१. श्रीस्कन्दमहापुराणे–२.९.२२.४५.४७; २. पारस्करगृह्यसूत्रे–२.६.१।

३. देवीभागवते (वाराणस्यां ठाकुरप्रसाद-एण्ड-सन्स-बुक्सेलर-प्रकाशिते) ७.२९.१८-१९।

४. सूतसंहितायाम् (माधवप्रणीततात्पर्यदीपिकासंहितायाम्, आनन्दाश्रममुद्रणालयेन १९२५ खैस्ताब्दे द्वितीयाङ्कनावृत्त्या प्रकाशितायाम्) द्वितीये भागे, यज्ञवैभवखण्डे–४५.५३-५७।

इति प्रतिपादितत्वात्, पराशरपुराणे च—

पुराणे धर्मशास्त्रे च योंऽशः श्रुत्या विरुध्यते।
स तन्त्रार्थस्तु विज्ञेयः समासेन मनीषिभिः[१]।।इति।

यत्तु तन्त्रानुरोधेन कथितं तत्परित्यजेत्।
धर्मशास्त्रे पुराणे च यत्नतो वैदिको जनः[२]।।

इति च प्रतिपादितत्वाच्च बृहत्पराशरस्मृत्यादिषु स्मृतिषु भागवत-स्कन्दपुराणवैष्णवखण्डादिषु पुराणेषु च प्रतिपादितं श्राद्धे मांसस्य वर्जनीयत्वं वैष्णवादीनामेव मान्यमित्यवगम्यते।

**श्राद्धे मांसप्रयोगस्य कलौ वर्ज्यताया विचारः**

यत्तु 'अक्षता गोपशुश्चैव श्राद्धे मांसं तथा मधु। देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत्'।। इति निगमवचनं श्राद्धदीपकलिका-मदनपारिजातयोः स्थितमित्युक्त्वा अविज्ञायमानाकरं तदेव वचनमादाय बृहन्नारदीयपुराणस्य द्वाविंशेऽध्याये स्थितमित्युक्त्वा 'मांसदानं तथा श्राद्धे'[३] इति वचनं चाऽऽदाय श्राद्धमयूखे नीलकण्ठभट्टेन वैक्रमाब्दानां सप्तदशस्य शतकस्योत्तरार्धे स्थितेन श्राद्धे मांसस्य दानं कलौ वर्जनीयमिति प्रतिपादितम्[४], यच्च तदनुकूलमेव १८४७ तमे वैक्रमाब्दे वर्तमानेन धर्मसिन्धुकारेण विठोवाभक्तेन वैष्णवेन काशीनाथोपाध्यायेन 'मांसं श्राद्धेषु नैव देयं कलिवर्ज्यत्वात्, 'न दद्यादामिषं श्राद्धे न चाऽद्याद् धर्मतत्त्ववित्' इत्यादिश्रीभागवतवचनाच्च' इत्युक्तम्[५], तत्तु विश्वरूप-मेधातिथि-देवस्वामि-विज्ञानेश्वर-गोविन्दराज-कृत्यकल्पतरुकृल्लक्ष्मीधराऽपरार्कव्याख्याकार-स्मृत्यर्थसारकारश्रीधर-रेणुदीक्षित-हरिहर-स्मृतिचन्द्रिकाकारदेवणभट्ट-हेमाद्रि-कुल्लूकभट्ट-श्रीदत्तोपाध्याय-चण्डेश्वर-पराशरस्मृतिव्याख्याकारमाधव-रुद्रधर-कृष्णमिश्रादिवृद्धाऽनादृतपक्षकत्वादुपेक्षणीयमवगम्यते। कस्यचन बृहन्नारदीयवचनस्य

---

१. पराशरोपपुराणे (सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन वाराणस्यां १९९० खैस्ताब्दे प्रकाशिते) १०.७३।

२. तत्रैव–६.३१।

३. द्र. नारदीयमहापुराणे (देहल्यां नागप्रकाशकेन १९८४ तमे खैस्ताब्दे पुनर्मुद्रिते) १.२४.१३-१६।

४. श्राद्धमयूखे (भगवन्तभास्करप्रथमखण्डे समाविष्टे, चौखम्बासंस्कृतप्रतिष्ठानेन वाराणस्यां १९८६ खैस्ताब्दे पुनर्मुद्रिते), पृ. ५५।

५. धर्मसिन्धौ (निर्णयसागरमुद्रायन्त्रालये १९०४ खैस्ताब्दे मुद्रिते), पृ. २९२।

वृद्धानादृतत्वादुपेक्षणीयत्वं तु निर्णयसिन्धुकारेणाऽपि प्रतिपादितं दृश्यत एव[१]। एतस्मिन् विषये १५०५ तमे वैक्रमाब्दे ग्रन्थं कृतवता कात्यायन-श्राद्धकल्पसूत्रव्याख्यानरूपश्राद्धकाशिकाख्यग्रन्थकारेण कृष्णमिश्रेण 'यच्चाऽभ्यधायि कलियुगविषयो मांसनिषेध इति तदप्यसङ्गतम्'[२] इत्युक्त्वा—

मांसं युगेषु सर्वेषु यज्ञश्राद्धार्थमादृतम्।
श्राद्धोपयमने यज्ञे कलौ तच्च विशिष्यते।।
(इति जातूकर्ण्यवचनम्[३]),

कुतर्कोपहता विप्राः कलावाश्नन् निरामिषम्।
तृप्तिं नाऽश्नन्ति पितरस्तस्य श्राद्धे कदाचन।।
(इति सुमन्तुवचनम्[४]),

परमान्नं कालशाकं मधु मांसं घृतं पयः।
मुन्यन्नानि तिला विप्राः प्रकृत्या हविरष्टधा।।
शस्तान्यष्टौ तु सर्वेषु युगेषु मुनिसत्तमाः।
पितृणां देवतानां च दुर्लभानि कलावति।। (इति पैठीनसिवचनम्[५]),

न युगानां न देशानां न विप्राणां द्विजोत्तमाः।
धर्मशास्त्रेषु वै भेदो दृश्यते मांसभक्षणे।।

इति वृद्धप्रचेतोवचनं[६] च प्रदर्श्य, 'अक्षता गोपशुश्चैव' इत्यादेः पूर्वोक्तस्य श्लोकस्य निर्मूलत्वं च निबन्धान्तरप्रतिपादितमुल्लिख्य, 'गोमेधो नरमेधश्च अक्षता गोपशुस्तथा। देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत्'[७]।। इति पराशरपाठ एव प्रामाणिक इति प्रोच्य च 'तस्माद् विहितहिंसादौ श्राद्धादिकर्मसु च मांसभक्षणविधिरितरत्र निषेध इति सिद्धम्' इति निर्णयः कृतो दृश्यते[८]। अत्र

१. निर्णयसिन्धौ (निर्णयसागरमुद्रणालयेन १९४९ तमे खैस्ताब्दे प्रकाशिते पञ्चमे संस्करणे) पृ. ३१३।
२. भाष्यपञ्चकयुते पारस्करगृह्यसूत्रे, पृ. ४७३।
३. तत्रैव; ४. तत्रैव।
५. तत्रैव; ६. तत्रैव।
७. तत्रैव, (याज्ञवल्क्यस्मृतेः अपरार्कव्याख्यायामपि (पृ. २३३) **'अक्षता नरमेधश्च गोयज्ञश्च कमण्डलुः। देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत्'**।। इति पाठोऽस्ति)।
८. तत्रैव।

कलिवर्ज्यप्रकरणस्य प्रधानेषु महापुराणेष्वपि अप्राप्यत्वं स्मृतिचन्द्रिकालिखितानां कलिवर्ज्यविषयकार्वाचीनविद्वद्वचनानां बहुतराणामेव हेमाद्रि-कमलाकरादिभिः आदित्यपुराणवचनताभ्रमजनकतयोल्लेखेनैतस्मिन् विषये प्रगाढस्य भ्रमस्योत्पादिततत्वं च स्मर्तव्यम्। तत्र स्मृतिपुराणवचनेषु कुत्रचित् पञ्चानामेव वर्ज्यत्वं कुत्रचिद् अष्टानामेव वर्ज्यत्वं च प्रतिपादितमस्तीति च न विस्मरणीयम्। कलौ पञ्चानामष्टानां वा वर्जनीयतायाः प्रतिपादकेषु वचनेषु श्राद्धे मांसस्य वर्जनीयताया उल्लेखो नास्तीति च स्मरणीयम्। उक्तस्य निर्णयस्योपपादनाय बहूनि वचनानि प्रदर्श्य व्याख्याय च श्राद्धकाशिकाकारेण 'अतश्च त्यक्तमांसादेरपि श्राद्धे भक्षणमेवोचितमित्युक्तम्'[१] इत्युपसंहारः कृतः, तस्योपसंहारस्य समर्थनाय च तेन—

नियुक्तश्चैव यः श्राद्धे यत् किञ्चित् परिवर्जयेत्।
पितरस्तस्य तन्मासं नैराश्यं प्रतिपेदिरे।। (इति उशनोवचनम्[२]),
नियुक्तस्तु यदि श्राद्धे दैवे मांसं समुत्सृजेत्।
यावन्ति पशुरोमाणि तावन् निरयमृच्छति।। (इति देवलवचनम्[३]),
निवेशितस्तु यः श्राद्धे यज्ञे वाऽपि द्विजाधमः।
मांसं नाऽश्नाति निरयं याति वै पशुतां ततः।।

इति स्कन्दसंवादवचनं[४] च प्रदर्शितमस्ति।

कलिवर्ज्यविषयाणां विविधा उल्लेखा यद्यपि अप्रसिद्धेषु अर्वाचीनत्वेन प्रतीयमानेषु अव्यवस्थितपाठेषु केषुचन शौनक-बृहस्पति-लौगाक्षि-नारायणस्मृति-नारदीयपुराणादि-लघुस्मृतिपुराणग्रन्थेष्वपि स्थिताः प्रतीयन्ते[५], तथापि ते उल्लेखास्तु वैक्रमाब्दानां त्रयोदशे शतके वर्तमानत्वेन सम्भाविताद् याज्ञवल्क्य-स्मृतिव्याख्याकाराद् अपरार्कात् प्राचीनेन केनापि धर्मशास्त्रसङ्ग्रहकारेण वा धर्मशास्त्रव्याख्याकारेण वाऽपि सर्व एव तु परामृष्टा आदृता वाऽपि न दृश्यन्त इति तेषां सर्वेषां तु मान्यत्वं विमृश्यमेवास्ति। 'अक्षता' इत्यादिके श्लोके श्राद्धे वर्ज्यतया उक्तस्य

---

१. भाष्यपञ्चकयुते पारस्करगृह्यसूत्रे, पृ. ४७४; २. तत्रैव, पृ. ४७४।
३. तत्रैव; ४. तत्रैव।
५. स्मृतिसन्दर्भे षष्ठे भागे, पृ. २७७, स्मृतिसन्दर्भे पञ्चमे भागे, पृ. २७८५-२७९२, नारदीयमहापुराणे–१.२४.१३-१४, ब्रह्मवैवर्तपुराणे कृष्णजन्मखण्डे ११५.११२-११३।

माक्षिकापरपर्यायस्य मधुनः श्राद्धे वर्जनं तु प्रायः कैरपि वैदिकैः शिष्टैर्न क्रियत इति च स्मरणीयम्।

कलिवर्ज्यानां विषयेऽधोलिखितानि कुमारिलभट्टादीनां वचनानि च स्मरणीयानि विमृश्यानि च। तत्र—

शोभासौकर्यहेतूक्तिकलिकालवशेन वा।
यज्ञोक्तपशुहिंसादित्यागभ्रान्तिमवाप्नुयुः॥

(इति कुमारिलभट्टवचनं तन्त्रवार्तिके[1])

गोवधं नाऽनुमन्यन्ते श्रुत्युक्तमपि तद्विदः।
तस्योपपातकश्रैष्ठ्यं स्मृतौ यस्मादुदाहृतम्॥
करणं च श्रुतेर्ज्ञातं ज्योतिष्टोमादिकर्मणाम्।
स्तेयाद्यर्थार्जनेनाऽपि न तत् स्मृतिविरोधतः॥
मैवं न खलु शिष्टानां क्वचित् स्मृतिविरोधतः।
श्रुत्युक्तार्थाऽननुष्ठानं दृढ(ष्ट)मल्पीयसामपि॥
न हि च्छागवधं तज्ज्ञा न कुर्वन्ति निवारितम्।
अवारितः स चेत् स्मृत्या गोवधोऽपि हि तत्समः॥
स्मार्ता हि विधयः सर्वे श्रुत्युक्तव्यतिरेकिणः।
तेन स्मृतिविरुद्धत्वं नाऽननुष्ठानकारणम्॥

(इत्यादिकं विश्वरूपवचनं बालक्रीडायाम्[2])

युगभेदेन धर्मवैलक्षण्यमभ्युपेत्य धर्मानिति (पूर्वश्लोके) बहुवचननिर्देशः। तदेव वैलक्षण्यं प्रतिजानीते—'अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे युगे। अन्ये कलियुगे नृणां युगरूपानुसारतः'॥ इति। अत्रान्यशब्दो न धर्मस्य स्वरूपान्यत्वमाचष्टे, किन्तु प्रकारान्यत्वम्, धर्मप्रमाणचोदनानामपि युगभेदेन भेदापत्तेः, न हीयं चोदना कृतेऽध्येतव्या, इयं तु त्रेतायामित्यादिव्यवस्थापकं किञ्चिदस्ति, प्रकारान्यत्वे

---

१. तन्त्रवार्तिके–१.३.४, (श्रीमज्जैमिनिप्रणीते मीमांसादर्शने, शाबरभाष्यतन्त्रवार्तिकसहिते, पुण्यपत्तनस्थाऽऽनन्दाश्रममुद्रणालये १९७० तमे खैस्ताब्दे पुनर्मुद्रिते), पृ. ११३।

२. याज्ञवल्क्यस्मृतौ श्रीविश्वरूपाचार्यप्रणीतया बालक्रीडाख्यया व्याख्ययोपेतायाम् (१९८२ तमे खैस्ताब्दे देहल्यां मुंशीराममनोहरलालेन पुनर्मुद्रितायाम्), प्रथमे भागे, १.७, पृ. २५-२६।

त्वस्ति दृष्टान्तः, एकस्याऽप्यग्निहोत्रस्य सायंप्रातःकालभेदेन अनुष्ठानप्रकार-भेदश्रवणात्, ऋतं त्वा सत्येन परिषिञ्चामीति सायं परिषिञ्चति, सत्यं त्वर्तेन परिषिञ्चामीति प्रात इति। ननु तत्राऽर्थवादेन मन्त्रः प्रकारभेदेनोपपादितः 'अग्निर्वा ऋतमसावादित्यः सत्यमग्निमेव तदादित्येन सायं परिषिञ्चति, अग्निनाऽऽदित्यं प्रातः सह' इति, एवं तर्हि अत्रापि युगरूपानुसारत इत्यनेन प्रकारभेद उपपाद्यते, युगानां स्वरूपमनुष्ठातृ-पुरुष-शक्ति-तारतम्योपेतम्, तदनुसारेणानुष्ठानवैषम्यं सम्भवति, यथा शक्नुयात् तथा कुर्यादिति नित्यकर्मसु निर्णीतत्वात्।

(इति माधववचनं पराशरस्मृतिव्याख्यायाम्[१])

उक्तैर्वचनैः कुमारिलभट्टादीनां कलिवर्ज्यव्यवस्थाविषयेऽनादरो दृष्टिभेदो वाऽभिव्यज्यते।

**मत्स्यपुराणे 'उद्धरिष्यति कौटिल्यः समैर्द्वादशभिः सुतान्। भुक्त्वा महीं वर्षशतं ततो मौर्यान् गमिष्यति'[२]।। इति, वायुपुराणे च–'चन्द्रगुप्तं नृपं राज्ये कौटिल्यः स्थापयिष्यति। चतुर्विंशतिसमा राजा चन्द्रगुप्तो भविष्यति'[३]।। इत्युल्लिखितेन 'येन शस्त्रं च शास्त्रं च नन्दराजगता च भूः। अमर्षेणोद्धृतान्याशु तेन शास्त्रमिदं कृतम्'[४]।। इति वदता विष्णुगुप्तेन कौटल्येनाऽर्थशास्त्रे 'लोम-दोह-वाहन-प्रजननोपकारिणां क्षुद्रपशूनामादाने तच्च तावच्च दण्डः, प्रवासने चान्यत्र देवपितृकार्येभ्यः'[५] इत्युक्तत्वात्,** प्रवासनशब्दस्य च मन्दैरन्यथाऽर्थे वर्ण्यमानेऽपि 'प्रमापणं निबर्हणं निकारणं विशारणम्। प्रवासनं परासनं निषूदनं निहिंसनम्'[६] इत्यादिकस्य नामलिङ्गानुशासनपाठस्य दर्शनाद् उपपत्तेरौचित्याच्च हिंसनार्थकताया निश्चयात् कलियुगे कौटिल्यस्य समये पितृकार्यार्थं पशुहिंसनस्य राज्ञाऽनुमन्तव्यतायाः सिद्धान्तस्य स्थिरताया अवगमाच्च श्राद्धे मांसप्रयोगस्य कलिवर्ज्यतायाः काऽपि चर्चा तदा नाऽऽसीदित्यवगम्यते। 'यथैवाऽश्राद्धभोजित्वं यथा वाऽमांसभोजनम्। श्रेयसे विहितं धर्म्यं न सर्वत्र निषिध्यते'[७]।। इति कुमारिलभट्टवचनात् तत्समयेऽपि तादृश्येव स्थितिः प्रतीयते।

१. पराशरस्मृतौ श्रीमन्माधवाचार्यकृतव्याख्यासहितायाम् (१९७४ खैस्ताब्दे पुनर्मुद्रितायाम्) १.२२, पृ. १०७-१०८।
२. मत्स्यपुराणे (आनन्दाश्रममुद्रणालयेन १९०७ खैस्ताब्दे मुद्रिते) २७२.२२, पृ. ५५३।
३. वायुमहापुराणे (देहल्यां १९८३ खैस्ताब्दे नागप्रकाशकेन पुनर्मुद्रिते) २.३७.३२५।
४. कौटलीयेऽर्थशास्त्रे (१९६० खैस्ताब्दे मैसूरविश्वविद्यालयेन प्रकाशिते) १५.१, पृ. ४६२।
५. तत्रैव–४.१३, पृ. २४५।
६. अमरकोषे (रामाश्रम्याख्यया व्याख्यासुधया विभूषिते, १९७० खैस्ताब्दे वाराणस्यां चौखम्बासंस्कृतसिरीज-ऑफिस-नामकेन निकायेन प्रकाशिते) २.८.११२-११५।
७. तन्त्रवार्तिके–१.३.४।

सुदूरातीतकाले वर्तमानस्य कौटिल्यस्य ग्रन्थस्य वार्ता तिष्ठतु, वैक्रमाब्दानां चतुर्दशस्य शतकस्य पूर्वार्धे वर्तमानतया सम्भावितस्य देवण्णभट्टस्य ग्रन्थेऽपि 'अकृताऽन्वाधानेनाऽनग्निना च पञ्चदश्यामपि पितृसेवितं मांसं 'भुञ्जीत पितृसेवितम्' इत्येवंविधैर्वचनैर्विहितत्वाद् भक्षणीयम्'[१] इत्युक्त्वा पौर्णमास्याममावास्यायामेवाऽपि श्राद्धशेषभोजने श्राद्धकर्त्रा मांसस्याऽपि भोजनीयत्वं प्रतिपादितं दृश्यते, १६६८ तमे वैक्रमेऽब्दे ग्रन्थं समापितवता निर्णयसिन्धुकारेण कमलाकरभट्टेनाऽपि श्राद्धशेषभोजनप्रकरणे 'सर्वं पर्वनिषिद्धं मांसमाषाद्यपि (भुञ्जीत)'[२] इति मात्स्यवचनं व्याख्यातं दृश्यत इति श्राद्धे मांसप्रयोगस्य कलिवर्जनीयत्वमतीवाऽर्वाचीने काल एव वैदिकेषु वेदमन्त्रसंहिता-ब्राह्मणग्रन्थ-श्रौतसूत्र-गृह्यसूत्राद्युक्त-श्राद्धकल्प-प्रधानस्मृतिपुराणादिमूलकधर्मशास्त्रग्रन्थज्ञातस्य, बालक्रीडामनुभाष्य-मिताक्षरा-कृत्यकल्पतरुप्रभृतिधर्मशास्त्रनिबन्धग्रन्थेतिहासस्य, भारतवर्षेतिहासस्य च सम्यग्ज्ञानस्याऽभावाद् भ्रमात् परप्रत्ययनेयभावाच्चाऽपि प्रसृतमवगम्यते।

**अनादिपरम्परासिद्धस्य वेदमूलकस्यैवार्थस्य वैदिकैर्धर्मत्वेन ग्राह्यत्वम्**

'वेदेनैवाऽभ्यनुज्ञाता येषामेव प्रवक्तृता।
नित्यानामभिधेयानां मन्वन्तरयुगादिषु।।
तेषां विपरिवर्तेषु कुर्वतां धर्मसंहिताः।
वचनानि प्रमाणानि नाऽन्येषामिति निश्चयः'[३]।।

इति कुमारिलभट्टोल्लिखिताद् वैदिकानां धर्मशास्त्रवचनप्रामाण्याप्रामाण्यसिद्धान्तात् प्रमाणत्वेन ग्रहीतुं शक्यस्य अनादिपरम्परामूलकत्वेनाऽवगम्यमानस्य स्वशाखाश्रुतिसूत्राद्यविरुद्धस्य स्मृतिपुराणवचनस्यैव वैदिकैर्धर्मे प्रमाणतायाः स्वीकार्यत्वात्, जैनबौद्धवैष्णवादीनाम् 'इह न कश्चिज्जीवः आलभ्य प्रहोतव्यः'[४] इत्यादिकान् सिद्धान्तानादायाऽर्वाक्काले

---

१. स्मृतिचन्द्रिकायां (१९८८ खैस्ताब्दे देहल्यां नागप्रकाशकेन पुनर्मुद्रितायाम्) श्राद्धकाण्डे, पृ. ४१०।

२. निर्णयसिन्धौ (निर्णयसागरमुद्रणालयेन १९४९ खैस्ताब्दे मुद्रिते पञ्चमे संस्करणे), पृ. ३२७-३२८।

३. तन्त्रवार्तिके–१.३.७ (श्रीमज्जैमिनिप्रणीते मीमांसादर्शने शाबरभाष्यतन्त्रवार्तिकसहिते, आनन्दाश्रममुद्रणालयेन १९७० खैस्ताब्दे पुनर्मुद्रिते) पृ. १२२।

४. (भारतीय-विद्या-प्रकाशनेन १९७८ खैस्ताब्दे प्रकाशिते) 'भारतीय अभिलेख' इति ग्रन्थे अशोकस्य प्रथमे शिलालेखे, पृ. २।

प्रवृत्तत्वेनाऽवगम्यमानानाम्—

'नैवं स्मृतिषु सर्वासु पुराणेष्वखिलेषु वा।
तस्मात् तन्मध्यसम्प्राप्तप्रक्षिप्तग्रन्थविस्तरैः।।
तानि सर्वाण्यप्रामाण्यकलङ्कितशरीरतः।
आचारसंशयेष्वत्र सम्यक् स्युर्न विधायकाः'[१]।।
'प्रचरद्रूपतः स्कन्दपुराणैकांशतोऽधिकम्।
यत् खण्डत्रितयं पौण्ड्रेवाऽवन्तिकथाश्रयम्।।
तार्क्ष्यं पुराणमपरं ब्राह्ममाग्नेयमेव च।
त्रयोविंशतिसाहस्रं पुराणमपि वैष्णवम्।।
षट्सहस्रमितं लैङ्गं पुराणमपरं तथा।
दीक्षाप्रतिष्ठापाषण्डयुक्तिरत्नपरीक्षणैः।।
मृषावंशानुचरितैः कोषव्याकरणादिभिः।
असङ्गतकथाबन्धपरस्परविरोधतः।।
तन्मीनकेतनादीनां भण्डपाषण्डलिङ्गिनाम्।
लोकवञ्चनमालोक्य सर्वमेवाऽवधीरितम्'[२]।।

'पुराणवचनेषु पद्मपुराणादिकतिपयपुराणेषु कृत्रिमवचनानि बहूनि दृश्यन्ते'[३], 'पुराणानामव्यस्थिततत्वात्'[४] इत्यादिभिर्वचनैः प्राचीनैरपि विद्वद्भिः कृतयाऽप्रामाण्यशङ्कयाऽऽक्रान्तानां लघुस्मृतिपुराणादीनां प्रक्षिप्तत्वेन प्रतीयमानानां वेदवेदाङ्गप्रधानस्मृतिविरुद्धानां वाक्यानां वैदिकैर्धर्मे प्रमाणतायाः स्वीकर्तुमशक्यत्वस्य—

'या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः।।

---

१. मार्कण्डेयस्मृतौ (स्मृतिसन्दर्भे, षष्ठे भागे, २०१३ वैक्रमाब्दे कालीघट्टनगरे मनसुखरायमोरेण प्रकाशिते), पृ. ६६।

२. दानसागरे (वैक्रमाब्दानां द्वादशे शतके वर्तमानेन वल्लालसेनेन रचितत्वेन प्रसिद्धे, १९५३ खैस्ताब्दे कालीघट्टनगरे प्रकाशिते, प्रथमे भागे, उपक्रमणिकायाम्) श्लो. ६२-६६,पृ. ७।

३. जगन्मोहने प्रथमे भागे (२०२० वैक्रमाब्दे नेपालराष्ट्रियपुस्तकालयेन प्रकाशिते), सप्तविंशे तिथिफलाध्याये, पृ. २०७।

४. वीरमित्रोदये (१९०६ खैस्ताब्दे वाराणस्यां प्रकाशिते) संस्कारप्रकाशे, पृ. ६५५।

उत्पद्यन्ते विनश्यन्ति यान्यतोऽन्यानि कानिचित्।
तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च'[१]॥

इति मनुस्मृतिवचनेन बोधितत्वाच्च तत्तद्वेदशाखा-मन्त्रसंहिता-ब्राह्मण-श्रौतसूत्र-गृह्यसूत्र-परिशिष्टसूत्र-धर्मसूत्रादि-वेदवेदाङ्गोपाङ्गमनु-याज्ञवल्क्य-पराशरादिप्रधान-स्मृति-बहुसङ्ख्यक-महापुराणादिप्रतिकूलाः लघुस्मृतिपुराणोपपुराणाद्युक्ता अर्था वैदिकैर्धर्मत्वेनाऽग्राह्या एव मन्तव्या इत्यवगम्यते। कलौ युग एव प्राचीने कौटिल्यादिकाले तु श्राद्धे मांसस्य अप्रयोज्यतायाः सिद्धान्तस्याऽभावस्याऽवगम्यमानत्वात्, मिथिलास्थैर्बङ्गदेशजैश्च जनैरिदानीमपि परम्पराप्राप्तरूपेण श्राद्धे मांसस्य प्रयुज्यमानतायाः श्रूयमाणत्वाच्चेदानीं वैदिकेषु प्रसिद्धं श्राद्धे मांसस्याऽप्रयोज्यत्वं भ्रमादिमूलकमवगम्यते। इदानीं वैदिकानामपि श्राद्धे मांसस्याऽप्रयोगस्य प्रथा धर्मे वेदस्य प्रामाण्यमस्वीकुर्वाणानां जैनानां बौद्धानां वैष्णवादीनां च मतेन प्रभावितस्य लोकस्य गर्हाया भीत्या प्रचलितो व्यवहारोऽवगम्यते, न तु शास्त्रैकगम्योऽमुत्रार्थो धर्मः, वैदिकानां कृते धर्मस्य चोदनैकगम्यत्वात्।

**श्राद्धादिधर्मकृत्यस्य शास्त्रविध्यनुसारमेवानुष्ठेयत्वे विशिष्टानि वचनानि**

श्राद्धादिधर्मकृत्यस्य शास्त्रविध्यनुसारमेव कर्तव्यताया विशेषतो बोधकानि अधोलिखितानि विशिष्टानि वचनानि च **'शब्दप्रमाणका वयम्, यच्छब्द आह तदस्माकं प्रमाणम्'**[२] इति वदतां वैदिकानां शास्त्रकाराणां परम्परामनुसरद्भिः, धर्मे लोकप्रसिद्धितः शास्त्रप्रसिद्धेरेव बलीयस्त्वस्य प्रतिपादकं 'शास्त्रस्था वा तन्निमित्तत्वात्'[३] इति जैमिनिवचनं स्मरद्भिः, शास्त्रैकगम्येऽर्थे लौकिकशुद्ध्य-शुद्ध्योरकिञ्चित्करताया बोधकम् 'अशुद्धमिति चेत्, न, शब्दात्'[४] इति वेदव्यासबादरायणमुनिवचनं च परिचिन्तयद्भिर्वैदिकवरैर्विचारणीयानि—

पिता मम महातेजाः शन्तनुर्निधनं गतः।
तस्य दित्सुरहं श्राद्धं गङ्गाद्वारमुपागमम्॥

---

१. मनुस्मृतौ (मन्वर्थमुक्तावल्या समन्वितायाम्, १९४६ खैस्ताब्दे निर्णयसागरमुद्रणालयेन प्रकाशितयाम्) १२.९५-९६।

२. पाणिनीयव्याकरणभाष्ये प्रथमाह्निके, (द्र. २.१.१. वा. ५)।

३. जैमिनीयधर्ममीमांसासूत्रे–१.३.९।

४. बादरायणीयब्रह्ममीमांसासूत्रे–३.१.२५।

तत्राऽऽगम्य पितुः पुत्रः श्राद्धकर्म समारभम्।
माता मे जाह्नवी चाऽत्र साहाय्यमकरोत् तदा।।
ततोऽग्रतस्ततः सिद्धानुपवेश्य बहूनृषीन्।
तोयप्रदानात्प्रभृति कार्याण्यहमथारभम्।।
तत् समाप्य यथोद्दिष्टं पूर्वकर्म समाहितः।
दातुं निर्वपणं सम्यग् यथावदहमारभम्।।
ततस्तं दर्भविन्यासं भित्त्वा सुरुचिराङ्गदः।
प्रलम्बाभरणो बाहुरुदतिष्ठद् विशाम्पते।।
तमुत्थितमहं दृष्ट्वा परं विस्मयमागमम्।
प्रतिग्रहीता साक्षान्मे पितेति भरतर्षभ।।
ततो मे पुनरेवाऽऽसीत् संज्ञा सञ्चिन्त्य शास्त्रतः।
नाऽयं वेदेषु विहितो विधिर्हस्त इति प्रभो।।
पिण्डो देयो नरेणेह ततो मतिरभून् मम।
साक्षान्नेह मनुष्यस्य पिण्डं हि पितरः क्वचित्।।
गृह्णन्ति विहितं चेत्थं पिण्डो देयः कुशेष्विति।
ततोऽहं तदनादृत्य पितुर्हस्तनिदर्शनम्।।
शास्त्रप्रामाण्यसूक्ष्मं तु विधिं पिण्डस्य संस्मरन्।
ततो दर्भेषु तत् सर्वमददं भरतर्षभ।।
शास्त्रमार्गानुसारेण तद् विद्धि मनुजर्षभ।
ततः सोऽन्तर्हितो बाहुः पितुर्मम जनाधिप।।
ततो मां दर्शयामासुः स्वप्नान्ते पितरस्तथा।
प्रीयमाणास्तु मामूचुः प्रीताः स्मो भरतर्षभ।।
विज्ञानेन तवाऽनेन यन्न मुह्यसि धर्मतः।
त्वया हि कुर्वता शास्त्रं प्रमाणमिह पार्थिव।।
आत्मा धर्मः श्रुतं वेदाः पितरश्चर्षिभिः सह।
साक्षात् पितामहो ब्रह्मा गुरवोऽथ प्रजापतिः।।

प्रमाणमुपनीता वै स्थिताश्च न विचालिताः।
तदिदं सम्यगारब्धं त्वयाऽद्य भरतर्षभ।।
(इति महाभारतेऽनुशासनपर्वणि–८४.११-२५)

श्राद्धकाले मम पितुर्मया पिण्डः समुद्यतः।
तं पिता मम हस्तेन भित्त्वा भूमिमयाचत।।
हस्ताभरणपूर्णेन केयूराभरणेन च।
रक्ताङ्गुलितलेनाऽथ यथा दृष्टः पुरा मया।।
नैष कल्पे विधिर्दृष्ट इति सञ्चिन्त्य चाऽप्यहम्।
कुशेष्वेव ततः पिण्डं दत्तवानविचारयन्।।
ततः पिता मे सुप्रीतो वाचा मधुरया तदा।
उवाच भरतश्रेष्ठ प्रीयमाणो मयाऽनघ।।
त्वया दायादवानस्मि कृतार्थोऽमुत्र चेह च।
सत्पुत्रेण त्वया पुत्र धर्मज्ञेन विपश्चिता।।
मया तु तव जिज्ञासा प्रयुक्तैषा दृढव्रत।
व्यवस्थानं च धर्मेषु कर्तुं लोकस्य चाऽनघ।।
यथा चतुर्थं धर्मस्य रक्षिता लभते फलम्।
पापस्य हि तथा मूढः फलं प्राप्नोत्यरक्षिता।।
प्रमाणं यद्धि कुरुते धर्माचारेषु पार्थिवः।
प्रजास्तदनुवर्तन्ते प्रमाणाचरितं सदा।।
त्वया च भरतश्रेष्ठ वेदधर्माश्च शाश्वताः।
कृताः प्रमाणं प्रीतिश्च मम निर्वर्तिताऽतुला।।
तस्मात् तवाऽहं सुप्रीतः प्रीत्या च वरमुत्तमम्।
ददामि तं प्रतीच्छ त्वं त्रिषु लोकेषु दुर्लभम्।।
न ते प्रभविता मृत्युर्यावज्जीवितुमिच्छसि।
त्वत्तोऽभ्यनुज्ञां सम्प्राप्य मृत्युः प्रभविता तव।।
(इति हरिवंशे–१.१६.१९-२९, शिवपुराणे च–५.४०.१९-२७)

रामो रुद्रपदे श्राद्धे पिण्डदानाय चोद्यतः।
पिता दशरथः स्वर्गात् प्रसार्य करमागतः।।
नाऽदात् पिण्डं करे रामो ददौ रुद्रपदे ततः।
शास्त्रार्थातिक्रमाद् भीतं रामं दशरथोऽब्रवीत्।।
तारितोऽहं त्वया पुत्र रुद्रलोकमवाप्नुयाम्।
हस्ते पिण्डप्रदानेन स्वर्गतिर्न हि मे भवेत्।।
त्वं च राज्यं चिरं कृत्वा पालयित्वा द्विजान् प्रजाः।
यज्ञान् सदक्षिणान् कृत्वा विष्णुलोकं व्रजिष्यसि।।
पुर्ययोध्याजनैः सार्धं कृमिकीटादिभिः सह।
इत्युक्त्वाऽसौ दशरथो रुद्रलोकं परं ययौ।।
भीष्मो विष्णुपदे श्रेष्ठे आहूय पितरं स्वकम्।
श्राद्धं कृत्वोद्यतो दातुं पित्रादिभ्यश्च पिण्डकम्।।
पितुर्विनिर्गतौ हस्तौ गयाशिरसि शन्तनोः।
नाऽदात् पिण्डं करे भीष्मो ददौ विष्णुपदे ततः।।
शन्तनुः प्राह सन्तुष्टः शास्त्रार्थे निश्चलो भवान्।
त्रिकालदृष्टिर्भवतु चाऽन्ते विष्णुश्च ते गतिः।।
स्वेच्छया मरणं चास्तु इत्युक्त्वा मुक्तिमागतः।।

(इति वायुपुराणे २.४९.७५-८३, बृहन्नारदीयपुराणे च–२.४६.३७-४५)

ये नियोगाँश्च शास्त्रोक्तान् धर्माधर्मविमिश्रितान्।
पालयन्तीह ये वैश्य न ते यान्ति यमालयम्।।

(इति पद्मपुराणे स्वर्गखण्डे–३१.३९)

क्रिया च शास्त्रनिर्दिष्टा रागद्वेषविवर्जिता।
कर्तव्याऽहरहः श्रद्धापुरस्कारेण शक्तितः।।

(इति मार्कण्डेयपुराणे–१६.५९-६०)

एवं सर्वेन्द्रियारम्भान् वेदपूर्वान् समाचरेत्।
ब्राह्मणो भूतिसम्पन्नो य इच्छेद् भूतिमात्मनः।।

(इति हरिवंशे–३.२४.१५)

प्रवृत्तिं वचनात् कुर्वन् निवृत्तिमपि कर्मणाम्।
एवं व्यवहरेन् नित्यं गृहस्थोऽपि हि मुच्यते॥
(इति प्रजापतिस्मृतौ, श्लो. १४६)

एक एव चरेद् धर्मं नास्ति धर्मे सहायता।
केवलं विधिमासाद्य सहायः किं करिष्यति॥
(इति महाभारते शान्तिपर्वणि–१९३.३२)

एकोऽपि वेदविद् धर्मं यं व्यवस्येद् द्विजोत्तमः।
स विज्ञेयः परो धर्मो नाऽज्ञानामुदितोऽयुतैः॥
(इति मनुस्मृतौ–१२.११३)

तस्मादनुग्रहं पीडां तद्भावमपास्य च।
धर्माऽधर्मार्थिभिर्नित्यं मृग्यौ विधिनिषेधकौ॥
(इति कुमारिलभट्टकृते श्लोकवार्तिके चोदनासूत्रे, श्लो. २४८-२४९)

**उपसंहारः**

उक्तानि विशिष्टानि शास्त्रवचनानि च परिचिन्त्य—

'अप्रामाण्यं च वेदानामार्षाणां चैव कुत्सनम्।
अव्यवस्था च सर्वत्र एतन्नाशनमात्मनः'[१]॥

इति वचनेन—

'न वेदानां परिभवात् न शाठ्येन न मायया।
महत् प्राप्नोति पुरुषो ब्रह्मणि ब्रह्म विन्दति'[२]॥

इति वचनेन च बोधिताया वेदादिशास्त्रप्रामाण्यपालनाऽऽवश्यकताया विद्वज्जनैर्विचारः कर्तव्यः।

'स्थापयध्वमिमं मार्गं प्रयत्नेनाऽपि हे द्विजाः।
स्थापिते वैदिके मार्गे सकलं सुस्थिरं भवेत्॥
यो हि स्थापयितुं शक्तो न कुर्यान्मोहतो नरः।
तस्य हन्ता न पापीयानिति वेदान्तनिर्णयः॥

---

१. वासिष्ठधर्मशास्त्रे–१२.४, महाभारते शान्तिपर्वणि–७९.१९, अनुशासनपर्वणि च–३७.११।

२. महाभारते शान्तिपर्वणि (चित्रशालासंस्करणे) २६९.१९, द्र. ७९.१०।

य: स्थापयितुमुद्युक्त: श्रद्धयैवाऽक्षमोऽपि स:।
सर्वपापविनिर्मुक्त: साक्षाज्ज्ञानमवाप्नुयात्।।
य: स्वविद्याभिमानेन वेदमार्गप्रवर्तकम्।
छलजात्यादिभिर्जीयात् स महापातकी भवेत्'[१]।।

इत्यादिकानां वचनानां च परिचिन्तनं कार्यम्। वैदिकमार्गस्याज्ञाने सति वैदिकमार्गे हेयताबुद्धौ वा सत्यां वेदानां प्रामाण्यस्य प्रचारे वैदिकमार्गस्य स्थापने वाऽपि विदुषां प्रवृत्तिरेव न स्यादिति वैदिकमार्गस्य सर्वे पक्षा विद्वद्भि: परिशीलनीया:, **'साधु वाऽप्यथवा साधु प्रमाणं न: श्रुति: परा'** इति पुराणवाक्येन प्रदर्शित: सिद्धान्तोऽवलम्बनीय: प्रचारणीयश्च। 'वह वपां जातवेद: पितृभ्य:'[२] इत्यादिना मन्त्रेण 'यं ते मन्थं यमोदनं यन्मांसं निपृणामि ते। ते ते सन्तु स्वधावन्तो मधुमन्तो घृतश्चुत:'[३]।। इति मन्त्रेण च प्रकाशितस्य गृह्यसूत्र-धर्मसूत्रविहितस्य अनुस्मृतिपुराणेतिहासादिस्तुतस्य श्राद्धे मांसप्रयोगस्येदानीं लोकप्रातिकूल्यादितो व्यवहारे मिथिलां बङ्गदेशं च विहायाऽन्यत्र प्रायेणाऽभावेऽपि शास्त्रैकगम्यादृष्टार्थकधर्मत्वं वैदिकैरनिन्द्यत्वं लोकप्रातिकूल्याद्यभावे व्यवहारे आनेयत्वं चाऽस्त्येवेति वैदिकैर्विद्वज्जनैर्बोद्धव्यं बोधयितव्यं चेत्ययं निबन्धो वैदिकशास्त्रीयपरम्पराप्राप्तवैधवेदाध्ययनादि-व्यवस्थाभिज्ञानां स्वाध्यायभक्तानां धर्मकामानां शास्त्रधर्मरक्षणप्रचारणशीलानां विदुषां द्विजोत्तमानामग्रे समुपस्थापितोऽवगन्तव्य:।

'आगमप्रवणश्चाऽहं नाऽपवाद्य: स्खलन्नपि।
न हि सद्वर्त्मना गच्छन् स्खलितेष्वप्यपोद्यते'।।इति।

●

---

१. सूतसंहितायाम् (आनन्दाश्रमप्रकाशितायाम्) २.२०.५४-५७।

२. माध्यन्दिनीयवाजसनेयि-शुक्लयजुर्वेदशाखा-मन्त्रसंहितायाम्–३५.२०, छान्दोग्यब्राह्मणे–२.३.१८, आपस्तम्बश्रौतसूत्रे पाञ्चविंशषड्विंशप्रश्नरूपे गृह्यकर्ममन्त्रपाठे, कौषीतकिगृह्यसूत्रे–३.१५.४, शाङ्खायनगृह्यसूत्रे–३.१३.३, आश्वलायनगृह्यसूत्रे–२.४.१३, पारस्करगृह्यसूत्रे–३.३.९, हिरण्यकेशिगृह्यसूत्रे–२०.५.१४, वैखानसगृह्यसूत्रे–४.३, गोभिलगृह्यसूत्रे–४.४.२१, द्राह्यायणगृह्यसूत्रे–३.४.२६, खादिरगृह्यसूत्रे–३.४.२६, कौशिकसूत्रे–४५.१४, ८४.१।

३. शौनकिनामथर्ववेदमन्त्रसंहितायाम्–१८.४.४२।

लघु-ग्रन्थमाला
[६७]

# धातुवंसो

सम्पादको
**डॉ. विमलेन्द्र कुमार**
उपाचार्य, 'पालि-बौद्धाध्ययनविभाग'स्स
'कला-संकाय'स्स
काशी-हिन्दू-विश्वविद्यालये
वाराणसियं




**सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः**
**वि.सं. २०६३**

# धातुवंसे पुब्बकथा

जना कज्ज-सिद्धिया पायेन कल्याण-वचनं अपेक्खन्ति। सक्यमुनि पि आदिकल्याणं मज्झे कल्याणं परिओसाने कल्याणमिति कत्वा अत्तनो देसनाहि सावकानं मनोबल-संवड्ढनं अकासि। परं बुद्ध-सदिसानं अरियानं मादिसानं च पुथुज्जनानं मज्झे गरुतरो भेदो। तथा पि कल्याण-वचनं लिखितुकामोऽहं अधोलिखितायो गाथायो पट्ठपेमि—

I

विमलिन्द्रकुमारेन पालि-अज्झायकेन खो।
नलाटधातुवंसस्स सुट्ठु संसोधनं कतं।।

II

सीहललिपियं पत्तं रट्ठे यं सीहले वरे।
नागरीलिपियं कातुं दिट्ठं पण्डुलिपिद्वयं।।

III

दुट्ठो पाठो च यो लद्धो तस्स संसोधनं कतं।
पाठं अत्थं निरुत्तिं च सोधेत्वा खो पुनप्पुनं।।

IV

पालिभासाय यं ञाणं पण्डितेहि सुसंचितं।
सीहलेसु मरम्मेसु साम-रट्ठन्तरेसु च।।

V

आनेन्ति भारतीया ये तं च लोकहितावहं।
साधुवादारहा ते ते कतविज्जाऽज्ज भारते।।

वंसगन्थलेखन-व्याजेन इतिहास-लेखनं साधु। परं धातुवंससदिसेसु गन्थेसु धातुपूजा-महीयनस्स किं पयोजनं? किमेतं बुद्ध-देसनाय सभावं वा पकतिं वा अनुसरति। महापरिनिब्बानसुत्ते वण्णितो बुद्ध-सारीर-विभाजनेन

उपट्ठितो विवादो पक्खेपो व पटिभाति। बुद्ध-सदिसेन महामानवेन अत्तनो सावका धातुपूजा-निमित्तं आदिट्ठा अहेसुं ति वचनं न विस्सासारहं। तम्हा धातुपूजाविसये यं किं चि पि देसितं तं न बुद्धवचनं अपि तु आचरिय-वचनमेव। अपरं च ये जना बुद्ध-मुखतो आगतं वचनं सद्प्पमाणरूपेन संगहणाय आदिसन्ति, किं ते तं बुद्धदेसनं न विसंवादेन्ति? वत्थुतो यं किं चि पि भगवता बुद्धेन कालामेसु[१] कथितं तं सब्बं अत्थतो व्यञ्जनतो च गहणीयं, न केवलं मुखमत्थी वत्तब्बं दस-हत्था हरीतकीति[२] वचनं आहरित्वा वाचा-विक्खेपो करणीयो।

अपरं च धम्मपद-संकलिताय अञ्ञतराय गाथाय भगवता बुद्धेन फुटं कथितं—

बहुं वे सरणं यन्ति पब्बतानि वनानि च।
आरामरुक्खचेत्यानि मनुस्सा भयतज्जिता[३]।।

धम्मपद-गाथाय भगवतो वचनानं वेवचनं निस्साय इदं पि कथितुं सक्का यं धातुचेतियेसु थूपचेतियेसु वा सरण-गमनं, तेसं पूजा-विधानं, तेसं थुति-करणं वा बुद्धवचनविसंवादनमेव। तम्हा सोगतेहि गम्भीरो विचारो करणीयो इमस्मिं विसये।

कालेन भिक्खुसु पण्डितवादो पण्डिच्चवादो वा पविट्ठो। केचि भिक्खवो पण्डिच्च-पकासनत्थाय गन्थानं लेखनं अकंसु। एसा पवुत्ति बुद्ध-सासन-विसंवादिनी। अञ्ञतराय गाथाय भगवता फुटं भणितं—

बहुं पि चे संहित भासमानो न तक्करो होति नरो सपञ्ञो।
गोपो व गावं गणयं परेसं न भागवा सामञ्ञस्स होती[४]ति।।

---

१. कालामेसु उपदिट्ठं बुद्धवचनं निस्साय आचरियेन सन्तरक्खितेन अत्तनो तत्त्वसङ्ग्रहनामके गन्थे अधोलिखितो सिलोको निबद्धो—
तापाच्छेदाच्च निकषात् सुवर्णमिव पण्डितैः।
परीक्ष्य भिक्षवो ग्राह्यं मदवचो न तु गौरवात्।।
केसमुत्तसुत्ते उपदिट्ठं भगवतो बुद्धस्स वचनं ओरसीकत्वा उपरि-उद्दिट्ठं आचरिय-सन्तरक्खितसिलोकं च निस्साय सेतलसङ्घसेनेन अधोलिखिता पालि-गाथा कता—
तापच्छेदननिकसा सुवण्णं पण्डितो यथा।
परिक्खित्वेव गण्हाति गारवम्हा न मे वचो।।

२. मुखमस्तीति वक्तव्यं दश-हस्ता हरीतकीति सक्कटभासाय बहु-पवुत्ता लोक-वुत्ति।

३. धम्मपदे गाथा संख्या १८८; ४. धम्मपदे गाथा संख्या १९।

इमस्मिं विसये कथनमेतं उपाचरिये विमलिन्द्रकुमारे न सङ्घटति। सो गहट्ठपण्डितो, विस्सविज्जालये अज्झायकपदे पतिट्ठितो। पोत्थक-लेखनं तस्स सिप्पं। तम्हा सो साधुवादारहो।

वंसगन्थेसु सच्चवुत्तन्तानि एव लिखितानीति केचि पालि-साहिच्च लेखका समालोचका च कथेन्ति। तत्थ पञ्हो उपट्ठाति—किं वंसगन्थेसु यं किं चि पि विवरणं लिखितं तं सब्बं सच्च-परकं, तथ-परकं वा। भगवा बुद्धो तिक्खत्तुं लंकादीपं समागतो ति नलाटधातुवंसे लिखितं। किमेतं वचनं इतिहास-परकं? भगवा बुद्धो मज्झमण्डलम्हा न कुतो पि अञ्ञत्थ अगच्छि। आगमेसु मज्झमण्डलान्तर-गमनं न लिखितं न वा संकेतितं। तथापि यदि सीहलरट्ठवासिनो भगवतो तिवारलंकागमन-वुत्तन्तं धारेन्ति, तस्मिं विस्सासं आपज्जति, तदा पन तेसं सो विस्सासो तेसु सिरोधारियो भवेय्य, रट्ठन्तरवासिनं न तेहि को पि विवादो, न वा कोपि कलहो।

इमस्मिं वंसगन्थे (अञ्ञतरेसु पि एवमेव) बहूनि अतिरंजना-परकानि वुत्तन्तानि दिस्सन्ति। भगवता पठमे लंकादीपागमने असंखेय्या देवा सरणेसु सीलेसु च पतिट्ठापिता अहेसुं। अनेन येव पकारेण द्वितीये लंकादीपागमने असीतिकोटियो नागा सरणेसु सीलेसु च पतिट्ठापिता। इमानि वण्णनानि अतिरंजना-परकानि येव। एवं अतिरंजनायुतानि वुत्तन्तानि लिखित्वा वंस-लेखको वितथभासणमेव करोति। एत्थ पञ्हो उपट्ठाति—किमेतं ठानं विज्जति? नेतं ठानमिति निच्छयेन कथितुं सक्का।

मज्झिमे युगे सीहलदेसवासिभिक्खुसु सक्कट-साहिच्चपभावो पबलतरो अहोसि। सक्कटभासाय लिखितानं कावेय्यनाटकादीनं अनुकरणं पालिभासाय दिस्सति। पालि पण्डितेहि पि पण्डिच्च-पकासनं आरद्धं गन्थ-लेखने यथा सक्कट-भासा-पण्डितेहि युगे युगे कतं। पालि-पण्डितानं एसा मक्कट-पवुत्ति भासाय, व्याकरणे, साहिच्चे अञ्ञतरासु च विधासु सब्बत्थ दिस्सति। इमस्मिं पसङ्गे केवलं एकमेव दिट्ठन्तं पट्ठपेमि। पाचीने भारते सब्बत्थ लोकभासासु सरलीकरणपवुत्ति दिस्सति। पालियं पाकुटेसु च अञ्ञतरासु पि लोकभासासु वग्गन्तानं वण्णानं ठाने निग्गहीतस्स अनुस्सारस्स वा पयोगो करीयति। किन्तु मज्झिमे काले सक्कटपभावे आगता पालि-पण्डिता वग्गन्तानं वण्णानं अनुनासिकानं वा वण्णानं पयोगं आरभिंसु। तेहि भारतीयानं लिपिकर-परम्परा पि विस्सरिता। अनेन कारणेन लंका-सद्द-लेखने निग्गहीतं-परकं लंका-सद्द-लेखनं अपसारित्वा सानुनासिक लेखनं पचलितं अहोसि। नलाटधातुवंसे पि

एसो पभावो दिस्सति। अज्जतनीयेहि पालिपण्डितेहि 'वग्गन्तं वा वग्गे ति'कच्चान-व्याकरण-सुत्तं, 'वग्गे वग्गन्तो' ति मोग्गल्लान-व्याकरण-सुत्तं च पुनप्पुनं सरित्वा तदनुसारं निग्गहीत-पयोगो करणीयो।

गन्थानं काल-निद्धारणे द्विपकारकानि सक्खानि (साक्ष्याणि) दट्ठब्बानि होन्ति—अन्तोसक्खं बहिसक्खं च। पुरातत्तिक सक्खानि पि यदा कदा निण्णायकानि होन्ति। इमस्मिं पसंगे पुरातत्तिकानि सक्खानि न उद्दिट्ठानि न वा समुल्लिखितानि। तेसं उपयोगो करणीयो पालि पण्डितेहि।

अन्ततो पुब्बकथा-लेखनस्स परिओसाने साधुवादवचनं कल्याणवचनं च पवत्तेतुकामो अरहतो अस्सजिस्स वचनं उपट्ठपेमि—

ये धम्मा हेतुप्पभवा तेसं हेतु तथागतो आह।<br>
तेसं च यो निरोधो एवंवादी महासमणो ति[१]।।

**।।भवतु सब्बमंगलं।।**

संघसेनसीहो

**(संघसेन सिंह)**<br>
अब्भागताचरियो<br>
सोगत विज्जा केन्दो<br>
गुरु गोविन्द सीह धम्मविज्जा विभागो,<br>
पंजाबी विस्सविज्जालयो,पटियाला (पंजाब)

सितम्बरमासस्स<br>
सत्तमे दिवसे<br>
ईसवीये २००६ मिते<br>
संवच्छरे

---

१. महावग्गे (विनयपिटके), भदन्त-जगदीसकस्सप-संसोधिते, नवनालन्दा-महाविहार-पकासिते, पण्णपिट्ठंको ५।

।। नमो तस्स भगवतो अरहतो सम्मासम्बुद्धस्स ।।

# निदान-कथा

'वंस'सद्दो भारतीयासु भासासु बहुहि अत्थेहि पयुत्तो होति। पालियं अयं सद्दो विसेसरूपेन वंस-रूक्ख-अत्थे कुल-अत्थे कुल-सन्तति-अनुक्कम-अत्थे वा दिस्सति। छान्दस-भासासु सक्कटभासाय वा वंस-सद्देन काचि गन्थ-लेखन-विधा पि पकटिता होति। ब्राह्मणगन्थेसु एको वंस-ब्रह्मणेति पभागो उपलब्भति, यस्मिं आचरियानं परम्परा उल्लिखिता होति। बिहदारञ्ञकउपनिसे (बृहदारण्यकोपनिषदि) गि एकच्चानं इसीनं वंसपरम्परा दिस्सति[1]। अपरं च छन्दोग्ग-उपनिसे (छान्दोग्योपनिषदि) वण्णिता पुराणेतिहासा पालिभासाय वंस-साहिच्चं च समरूपा दिस्सन्ति। सक्कट-वम्मये (वाङ्मये) महाभारतं पुराणानि च पुराणेतिहाससाहिच्चस्स सेट्ठानि दिट्ठन्तानि होन्ति। उभे पि इतिहास-विसयं पकासेन्ति, परं तु तेसु द्वेमेसु भेदो उपलब्भति—महाभारत-पुराणेसु पदे पदे अतिसयवुत्ति दिस्सति, वंसगन्थेसु पन एतिहासिकत्तं बहुधा पाकटं होति। सक्कट-वम्मये पुराणस्स पञ्च लक्खणानि[2] उद्दिट्ठानि तं यथा—सग्गो, पटिसग्गो, वंसो, मन्वन्तरं, वंसानुचरितं च। इमेसु वंसस्स वंसानुचरितस्स च विसिट्ठं महत्तं। राजानं वंसानुगतवण्णना वेण्हु (विष्णु)-वायु-मच्छ (मत्स्य)-भागवतादिसु पुराणेसु निद्दिट्ठा। पालिगन्थेसु पन न केवलं राजवंसपरम्पराय वण्णनं उपलब्भति, अपि च पमुख-विहार-थूपादीनं इतिहासो पि वण्णितो होति[3]। अपरं च तेसु वंसगन्थेसु बुद्धधम्मस्स (सद्धम्मस्स) इतिहासो आचरियानं

---

१. **पालि साहिच्चस्स इतिहासो**, भरतसीह उपज्झायेन रचितो, हिन्दी साहिच्च सम्मेलनं, पयागो, ईसवीये १९७२ मिते संवच्छरे, पण्णपिट्ठङ्को ५८३।

२. 'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च। वंशानुचरितं चैव पुराणं पञ्चलक्षणम्'।। आचारियेन बलदेव उपज्झायेन कतेहि **सक्कट भासाय इतिहास** गन्थेहि विसेसतो पाकटं होति।

३. 'पाचीन दक्खिण दिसाभागे रञ्ञा अजातसत्तुना सण्ठापिता धातुनिधाना धातुयो गाहापेत्वा वित्थारेत्वा जम्बुदीपे चतुरासीतिय चेतिय सहस्सेसु पतिट्ठापेसि।.....एवं तस्स भगवतो दाठाधातु दक्खिणधातु केसधातु नलाटधातु'ति एवमादियो सरीरधातुयो तत्थ तत्थ पूजिता तासु च चेतियानि कारितानि'। **महाबुद्धवत्थु (पञ्चमो भागो)**, भरतसीह उपज्झायेन रचितो, दिल्ली संस्कृत अकादमी, दिल्ली-पकासिते, पण्णपिट्ठङ्को ८४-८७, वित्थारेन दट्ठब्बं।

पाचरियानं च विवरणं वित्थरेण उल्लिखितं होति[1]। पाचीने च काले तेपिटकेसु पि बुद्धवंसापदान-सदिसा गन्था दिस्सन्ति। एतेसु बुद्धवंसो गोतमबुद्धम्हा पुब्बकानं चतुवीसति-बुद्धानं वंस-परंपरं पकासेति, अपदान-गन्थे पन थेरानं थेरीनं च जीवन-वुत्तन्तानि अपदानानि च वण्णितानि। एते द्वे गन्था पालिवंस-साहिच्चस्स लेखनपरम्पराय पिट्ठ-भूमि-रूपेन दिस्सन्ति। धम्म-वुत्तन्तं कथा-लेखनं च द्विन्नं गन्थानं पमुखा अंगा होन्ति। तथा पि पालिवंससाहिच्चे रचनाकारानं लेखकानं वा योगदानं अतीव एतिहासिकं दिस्सति।

वंससाहिच्चपरम्पराय उप्पत्ति बुद्धघोसकाले व अहोसि। सा परम्परा अज्जतने कालेपि दिस्सति। पालिवंसगन्थेसु अधोलिखिता गन्था पमुखरूपेन उद्देसारहा होन्ति, तं यथा—दीपवंसो, महावंसो, चूलवंसो, बुद्धघोसुप्पत्ति, सद्धम्मसंगहो, महाबोधिवंसो, थूपवंसो, अत्तनगलुविहारवंसो, दाठावंसो, छकेसधातुवंसो, नलाटधातुवंसो, सन्देसकथा, गन्धवंसो, सासनवंसो, संगीतिवंसो च[2]।

## गन्थकारो गन्थकालो च

धातुवंसो ति गन्थस्स को लेखको अहोसि कस्मिं वा काले लिखितो ति वत्तुं न सक्का। इमस्मिं विसये सुट्ठुञाणं नूपलब्भति। विल्हेमगायगरो इमस्स गन्थस्स रचनाकालो ईसवीये एकूनबीसतितमे सतसंवच्छरे पतिट्ठापेति। परं तु सत्तरसियं सतद्दियं रचितो गन्धवंसो ति गन्थो नलाटधातु-वण्णना ति गन्थस्स समुल्लेखं करोति। तंगन्थानुसारं बीसति गन्था बीसताचरियेहि विसुं विसुं कता[3]। ते पन होन्ति—कंखावितरणिया लिनत्थपकासिनी, निसन्देहो, धम्मुनुसारनी, ञेय्यासन्दति, ञेय्यासन्दतिया टीका, सुमहावतारो, लोक-पञ्ञतिपकरणं, तथागतुप्पत्तिपकरणं, नलाटधातुवण्णना, सीहलवत्थु, धम्मदीपको, पटिपत्तिसंगहो, विसुद्धिमग्गगन्धि, अभिधम्मगन्धि, विसुद्धिमग्गचुल्लटीका, सोतप्पमालिनी, पसादिनी, ओकासलोकसूदनी, सुबोधालङ्कारस्स नवटीका च। अपरं च इमस्मिं गन्थे इदं पि कथितं होति—

---

१. 'नाना देसपसादत्थाय सद्धम्मस्स चिरट्ठितत्थाय च तेसु चेतियानि पि तत्थ-तत्थ कारितानि। सब्बं पेतं बुद्धसासनवंसगन्थेसु वित्थारेन वण्णितं'।—**महाबुद्धवत्थु** (पञ्चमो भागो), पण्णपिट्ठंको ८७।

२. ***पालि साहिच्चस्स इतिहासे***, भरतसीह उपज्झायो, पण्णपिट्ठंको, ५८४।

३. ***गन्धवंसे***, विमलिन्द्र-कुमार-सम्पादिते, इस्टर्न बुक लिंकर्स, दिल्ली-पकासिते, पण्णपिट्ठंको ९०।

'इमे चेति वीसति गन्धा अत्तनो मतिया वीसताचरियेहि विसुं कता'[१]। तम्हा धातुवंसो सत्तरसतमम्हा सतसंवच्छरम्हा पुब्बे व कतो अहोसी ति कथितुं सक्का। एत्थ पन इदं पि जानितब्बं यं नलाटधातुवंसो काकुसन्धेन कतो, न तु सीहलभासातो अनूदितो। अयं धातुवंसो ति गन्थो मूलसीहलभासातो पालियं अनूदितो ति धातुवंसम्हि कहिं पि न लिखितं। तथा पि अयं गन्थो सीहलगन्थं अवलम्बेत्वा एव वंसगन्थरूपेन पकटितो ति मञ्ञितुं सक्का। केचि पालि-पण्डिता एवं पि कथेन्ति यं पालिया अयं परम्परा न केवलं अनुराधपुर-महाविहारे दिस्सति, अपि तु रूहने पि विज्जमाना अहोसि। रूहनपरम्पराय लिखितेसु गन्थेसु धातुवंसो नाम एको गन्थो अहोसि। सीहलवत्थु-सहस्सवत्थु-रसवाहिनी-पभुतीनं गन्थानं अज्झेनं रूहनपालिपरंपरं पकासेति। पालि-अट्ठकथासु पि रूहनस्स सितुलपब्बतिस्समहाविहारानं वण्णनं दिस्सति। दीपवंस-महावंसेसु आगता वण्णना गायगरमहोदयानुसारं रूहन-परंपरं दस्सेति, येसु विहारा समुल्लिखिता होन्ति। अपरं च तत्थ एका वंस-कथा पि उपलब्भति। सा वंसकथा अनेकेसु गन्थेसु बुद्धानिसंसं पाकटं करोति। इमेसु गन्थेसु अरियवंसो पमुखो होति। रञ्ञो दुट्ठगामिनो समीपे तंपितुनो च समीपे आनिसंसगन्था विज्जमाना अहेसुं। तस्मा धातुवंसो नाम गन्थो पि अरियवंसं नाम आनिसंसगन्थं आरब्भ कतो ति कथितुं सक्का।

महाबोधिवंस[२]-थूपवंस[३]-दाठावंसानुसारं[४] पुब्बकाले इमे तयो गन्था सीहलभासाय लिखिता अहेसुं। कालन्तरे पन तेसं अनुवचनं पालियं कतं। एवमेव धातुवंसो पि सीहलभासातो पालिभासाय अनुवचनरूपो ति पाकटं होति। विल्हेमगायगर-गुणपालमललसेकर-सम्मतं मतमेतं। को नाम अस्स गन्थस्स लेखको कस्मिं च काले अयं लिखितो ति न ञातं। अस्स पटिलिपि-

---

१. **गन्धवंसो** (सं.) विमलिन्द्र कुमारो, पिट्ठंको २३।

२. 'दस्सयिस्सम्महाबोधिवंसं भासाय सत्थुनो। पुब्बे सीहलभासायं ठितं बुद्धजनानुगो'।।
**महाबोधिवंसो** (सं.) कोमलचन्द जैन, सम्पूण्णानन्द सक्कट विस्सविज्जालीय, वाराणसी, ईसवीये २००५, पण्णपिट्ठंको १।

३. 'किञ्चपि सो यतिजनेन पुरातनेन, अत्थाय सीहलजनस्स कतो पुरा पि।
वाक्केन सीहलभवेन अभिसङ्खटत्ता, अत्थं न साधयति सब्बजनस्स सम्मा'।।
**थूपवंस** (सं.) एन.ए. जयविक्रम, लुजाक एण्ड कम्पनी लिमिटेड, लन्दन, ईसवी १९७१, पण्णपिट्ठंको १।

४. 'सदेसभासाय कवीहि सीहले कतम्पि वंसं जिनदन्तधातुया।
निरूत्तिया मागधिकाय बुद्धिया करोमि दीपनन्तरवासिनं अपि'।।
**दाठावंसो** (सम्पादित अनूदितो च) प्रद्युम्न दुबे, दिव्या प्रकाशन, वाराणसी, पण्णपिट्ठंको, ३।

लाभो पि दुक्करो[१]। नलाटधातुवंससंवण्णना ति नाम गन्थस्स अट्ठकथा पि दिस्सति। यतो हि गन्धवंसो इमं गन्थं पकासेति, ततो पि तस्मिं गन्थे गन्थकारस्स समुल्लेखो न उपलब्भति[२]। रीस-डेविडसमहोदयानुसारं पेरिसनगरे बिबिलियोथेकनेसनले तं निस्साय लिखितं एकं ओलपण्णं पत्तं अहोसि, यस्मिं सत्तवीसति पण्णपिट्ठानि होन्ति[३]।

## धातुवंसस्स वत्थुकथा

नलाटधातुवंसो नाम गन्थो भगवतो बुद्धस्स नलाट-अट्ठीनं इतिहासं वण्णेति। अयं गन्थो पञ्चसु परिच्छेदेसु विभत्तो होति। पठमे परिच्छेदे तथागतस्स ति-वार-मिता लंकादीपागमनकथा वण्णिता। पठमे आगमने सत्था तत्थ देवानं समागमे धम्मं देसेसि। सद्धम्मं सुत्वा असंखेय्या देवा सरणेसु सीलेसु च पतिट्ठिता अहेसुं। दुतिये आगमने भगवा असीतिकोटियो नागे धम्मं सावेसि, ते च सरण-सीलेसु पतिट्ठापेसि। बोधितो अट्ठमे वस्से ततिये लंकादीपागमने भगवा अरियगणसेवितासु बहु-भिक्खु-भिक्खुनी-उपासक-उपासिकासु धम्मं पकासेसि, ते सब्बे तायो च सब्बायो विनये आनेसि।

दुतिये परिच्छेदे तथागतस्स महापरिनिब्बानकथा, तंसारीरअट्ठभाग-विभाजनकथा च वण्णिता। तथागतो पंचचत्तालीस-वस्सानि सद्धम्मं पकासेत्वा जरया जिण्णो हुत्वा कुसिनाराय यमकसालरूक्खमूले वेसाखपुण्णमुपोसथे महापरिनिब्बायि। महापरिनिब्बानन्तरे सत्थुनो सरीरधातूनं वेसालियं लिच्छविराजानो, कपिलवत्थुम्हि सक्यराजानो, अल्लकप्पके बुलयो, रामगामके कोलिया, वेठदीपके ब्राह्मणा, पावायं पावेय्यका च सासनं पेसेत्वा सब्बे एकतो हुत्वा कोसिनारकेहि सद्धिं विवादं उप्पादेसुं। ततो परं आचरियो दोणब्राह्मणो तथागतस्स सारीरं समं अट्ठभागं विभजित्वा सब्बेसं भागवन्तानं एकेकं भागं दत्वा कलहविवादस्स उपसमं आनेसि। तेसं वण्णना वित्थाररूपेन तत्थ उपलब्भति[४]।

---

१. **'दि पालि लिटरेचर ऑफ सिलोन'**, जी.पी. मललसेकर, बुद्धिस्ट पब्लिकेसन्स सोसाइटी, कैण्डी, सिरिलंका, ईसवी १९९४, पण्णपिट्ठंको, २५५।

२. **गन्थवंसो** (सं.) विमलिन्द्र कुमारो, इस्टर्न बुक लिंकर्स, दिल्ली, ईसवी १९९२, पण्णपिट्ठंका, १०,२३।

३. **दि पालि लिटरेचर ऑफ सिलोन**, जी.पी. मललसेकर, बुद्धिस्ट पब्लिकेसन्स सोसाइटी, कैण्डी, सिरि लंका, ईसवी १९९४, पण्णपिट्ठंको, २५५।

४. 'तथागतस्स सारीरं अट्ठभागं करोमसे। थूपा वित्थारिता होन्तु पसन्ना हि बहुज्जना'।।
(**धातुवंसो**, पण्णपिट्ठंको, १४)

गन्थस्स ततिये परिच्छेदे भगवतो बुद्धस्स नलाटधातुपरंपराकथा, कोसिनारकानं मल्लानं मज्झे धातुविभागकथा, तस्स लंकादीपे आगमनं इच्चादयो कथायो वण्णिता सन्ति। तस्मिं काले तस्मिं समये लंकादीपे महानागो नाम राजा अहोसि, यो महागामे रज्जं कारेसि। तस्स महन्तं सक्कारं सब्बपठमं एको धनवा पुरिसो अकासि, तदन्तरं रञ्ञा महानागेन च सक्कारो कतो। तत्थ इदमपि पाकटं होति यं अयं धातु चिरकालं रूहणराजकुमारानं हत्थेसु वसित्वा सम्मानं सक्कारं च लभि[१]।

चतुत्थो परिच्छेदो ति पकिण्णक-कथा नाम। तत्थ सपरिवारस्स सपरिजनस्स च रञ्ञो काकवण्णतिस्सस्स वण्णना दिस्सति। तदन्तरं काकवण्णतिस्सस्स महारञ्ञो आयुसङ्खार आलोकेन्तो चुल्लपिण्डपातियतिस्सत्थेरो नलाटधातुया सक्कारत्थाय एकं चेतियं कारापनत्थाय महाराजं सम्पेरेसि सञ्चोदेसि च। तमत्थं निस्साय महाराजा काकवण्णतिस्सो महाबालुकागंगाय दक्खिणे भागे सेरुसमीपे एकं विसिट्ठं चेतियं कारापेसि।

पंचमे परिच्छेदे धातुनिधानाधिकारवण्णना पकासिता। धातुगब्भस्स निम्माणं, सुवण्णेन सब्बालङ्कारेहि च तस्स परिमण्डनं, धातुगब्भे पूजाविधानं, तस्मिं येव धातुगब्भे नलाटधातुया पतिट्ठापनं इच्चादयो मनोरमवण्णनायो पि तत्थ दिस्सन्ति।

गुणपालमललसेकरानुसारं इमे द्वे अन्तिमा परिच्छेदा ठानीयाहि परम्पराहि वा पमुखपरम्पराहि वा समागता। तस्मा महावंसकारेन तेसं वण्णनं न कतं। महावंसं ओलम्बित्वा चेतिय-पतिट्ठापनं, तस्स वण्णना च दिस्सन्ति। अपरं च उभिन्नं नलाटवंस-महाबोधिवंसानं समरूपां सेलिं लेखनविधां वा दिस्वा गुणपालो मललसेकरो इमे द्वे गन्था समकालिका ईसवीये दसमे एकादसे वा सत-संवच्छरे रचिता पि मञ्ञति[२]। तं मतानुसारं काकुसन्धेन रचितो सीहलनलाटधातुवंसो पालिया अनुवाद-कप्पो एव। अस्स संगहण-संकलन-विसये किमपि भिय्यो ञाणं न पाकटं होति, यथा बुद्धस्स ततियलंकागमन विसये जातं[३]।

---

१. उपराजा महानागो यट्ठालको महाबलो। गोठाभयो महापुञ्ञो काकवण्णो च वीरियवा।। एते थेरा च राजानो पुञ्ञवन्तो सुमानसा। धातुपरम्परानीता धाता धातु-सकोविदा'।।
**(धातुवंसो, पण्णपिट्ठंको, २६)**

२. **दि पालि लिटरेचर ऑफ सिलोन**, जी.पी. मललसेकर, बुद्धिस्ट पब्लिकेसन्स, कैण्डी, सिरिलंका, ईसवी १९९४, पण्णपिट्ठको, २५६।

३. **दि पालि लिटरेचर ऑफ सिलोन**, जी.पी. मललसेकर, बुद्धिस्ट पब्लिकेसन्स सोसाईटी, कैण्डी, सिरि लंका, ईसवी १९९४, पण्णपिट्ठंको, २५६।

